भाषाया अभावेऽज्ग्रहणेऽप्यत्रै दोषसत्त्वेनाऽज्ग्रहणप्रयोजनक-
थनाऽसङ्गत्या परिभाषायास्सत्त्वं प्रतीयते । तथाहि परिभाषाया
अभावे उद्देश्यदलप्रविष्टषष्ठ्यन्तपदप्रयोज्यविषयतामात्रस्य नि-
मित्ततापदेन ग्रहणात् यदन्ततदादित्वावच्छिन्नविषयता रूपनि-
मित्तताया घ्रापर्याप्ताया अपर्याप्त्या घ्राऽऽकारे सत्त्वमी घ्राध्मोरि-
त्यत्राऽलोऽन्त्यस्येत्युपस्थितावन्त्याऽल्त्वावच्छिन्नविषयताया
पर्याप्त्यैवाकारे सत्त्वेन द्वित्वनिमित्तताश्रय आकारस्तत्पर्याप्त
ऽल्त्वावच्छिन्ना निमित्तता तादृशनिमित्ततानिरूपककार्यित्वं
स्यादिति नाऽज्ग्रहणस्य फलमिति भाष्याऽसङ्गतिः, सत्यान्तु
स्यां घ्राशब्दस्य कार्यानुभवकर्तृत्वविशिष्टकार्यितया निमित्त-
त्वाऽभावेनाकारे ऽपर्याप्त्याऽपि द्वित्वनिमित्तताया अभावा-
ज्ग्रहणे न दोषोऽज्ग्रहणाऽभावे तु दोष उपपादित एवेत्याहुः।
नच द्विर्वचनेऽचीत्यत्राधिकरणसप्तम्या द्वित्वनिमित्ताश्रयीभू-
तो योऽच् तदव्यवहितपूर्वस्याच आदेशो नेत्यर्थेन द्वित्वनिमित्ता-
श्रयआकारस्तत्पूर्वस्य कार्याऽभावेन परिभाषाभावे नाज्ग्रहणेऽपि
दोष इतिगुरुमतेऽप्यनिस्तार इतिवाच्य,मधिजगे जग्ल इत्यादौ
द्वित्वनिमित्ताश्रय एकारस्तदव्यवहितपूर्वस्याऽचोगाङादेशस्य
त्वादेशस्य वाऽभावापत्तौ रूपाऽसिद्ध्या निमित्तसप्तम्या एवा-
श्रयणीयत्वात् गाङादेशस्य लावस्थायामेव प्रवृत्त्या, आत्वस्य च
निमित्तकत्वेनाऽज्निमित्तकत्वाऽभावेन तथा सति दोषाऽभावा-
त् नत्वाऽधिजग इत्यत्र लावस्थायामेव गाङादेशस्य प्रवृत्त्या
तदा द्वित्वानिमित्ताचः पूर्वत्वस्येङोभावः एवं जग्लइत्यादावप्या-
त्वस्यानैमित्तिकत्वेनैशादेशात्प्रागेवोपदेशकाले प्रवृत्त्या स्थानि-
ऐकारस्य द्वित्वनिमित्ताचः पूर्वत्वाऽभावइति द्वित्वनिमित्ता-
श्रयीभूताऽजव्यवहितपूर्वोयोऽच् तस्यादेशो नेत्यर्थकद्विर्वचने-
ऽचीत्यस्य परसप्तम्यामप्यप्रवृत्त्या न दोष इति वाच्य मप्रवृत्ति

ननु प्रणिदापयतीत्यादौ दारूपस्य विधीयमाना- घुसंज्ञा दापेर्न स्यादत आह—

पक्षद्वयं निषेधपक्षः स्थानिवद्भावपक्षश्च आद्ये दोषाऽभावेऽप्य- न्त्ये दोषोद्धारस्य निमित्तसप्तमीम्विना ऽशक्यत्वात्, द्वित्वनि- मित्तताश्रयीभूतोयोऽच तदव्यवहितपूर्वोयोऽजादेशः स स्थानिव- दिति हि तत्पक्षे परसप्तम्याश्रयणेऽर्थः स्यादादेशस्य च द्वित्व- निमित्ताच्पूर्वत्वस्य सत्त्वात् जग्मतुरित्यादौ मकारव्यवधानेन लोपरूपादेशस्थानिभूतस्याऽचोद्वित्वनिमित्तताश्रयाऽजव्यवहित- पूर्वत्वाऽभावेन लोपस्य निषेधाऽभावात्पूर्वं लोपे द्वित्वानापत्तेश्च, चक्रतुरित्यादावव्यवहिते प्रवृत्तिसम्भवेनैकवर्णव्यवधानसहने मानाऽभावादित्यलम्। यदि च द्वित्वनिमित्तताश्रयीभूतोऽच् प्रत्ययघटकएव गृह्यत प्रत्ययइति वक्तव्यमिति द्विर्वचनेऽचीतिसू- त्रस्थ भाष्यादिति मन्यते तदा ग्राऽकारस्य प्रत्ययघटक- त्वाऽभावाद्विशेषणांशध्वननपक्ष एव श्रेयानिति लभ्यते एतत्प- रिभाषालभ्यमेव प्रत्ययग्रहणमिति केचित्। ननु नुनावयिष- तीत्यादौ नुइ इस इति स्थिते अपर्याप्त्या द्वित्वनिमित्ततायाणिच इकारेऽपि सत्त्वेन तत्पर्याप्तनिमित्ताकवृद्ध्यावादेशयोः पूर्वम- प्रवृत्तौ नुशब्दस्यैव द्वित्वेन रूपसिद्धौ णिच्यचआदेशोनेति ज्ञाप- नं निष्फलमिति चेन्न नुइइसइति समुदायस्यापि नुशब्दद्वारा कार्यानुभवकर्तृत्वविशिष्टकार्यित्वेन निमित्ततयाऽनाश्रयणादि- कारे निमित्ततायाअपर्याप्त्याऽप्यभावात्परिभाषाऽभावे तु ज्ञापनं व्यर्थमेवातएव ज्ञापकपरभाष्यादेषा ध्वनितेति बोध्यम् ॥१०॥

(ननु प्रणिदापयतीत्यादाविति) दापेर्न स्यादिति, दाप्धातो र्न स्यादित्यर्थः। दारूपत्वाभावादितिभावः। ननु दापघटकदाश- ब्दस्य दारूपत्वेन तस्यैव घुत्वेन णत्वमस्त्विति चेन्न, सूत्रे दा-

घेतिविशिष्टरूपोपादानसत्वेनार्थवत्परिभाषोपस्थित्याऽर्थवतोरे दाधोर्ग्रहणेन दाप्घटकदारूपस्यानर्थकत्वेन तस्य घुत्वाप्राप्तेः "आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्वमित्यनेन" दापशब्दस्यैवार्थवत्त्वात् । नचात्र प्रमाणाभाव इति चेदत्र केचित्, शब्दानित्यत्ववारणाय पुग्विधायकस्य अर्थबोधनायाद्न्तस्योच्चारणप्रसङ्गे पान्तस्योच्चारणं कर्तव्यमित्यर्थस्यैव वक्तव्यतयाऽर्थबोधनेच्छयोच्चारितत्वस्यैव चार्थवत्वरूपतया दापशब्दस्यैवार्थवत्व न दाशब्दस्य, अर्थबोधनेच्छया तदनुच्चारणादित्येतत्फलितोऽयं न्याय इत्याहुः । तन्न, अर्थबोधनाय रामेत्यस्योच्चारणप्रसङ्गे रामसित्यस्योच्चारणं कर्त्तव्यमित्यस्यापि "स्वादिसूत्रेण" बोधनात्, राम इत्यादावपि प्रकृतिभागस्यानर्थक्यापत्तेः, तस्माच्छास्त्रेण साधुत्वमात्रमुच्यते अर्थबोधकता त्वन्वयव्यतिरेकगम्यैव तयोश्च दाशब्देऽपि सत्वात् । परेतु दापशब्दघटकोदाशब्दोऽनर्थकः दाशब्दावयवत्वेसति दाशब्दावयवाघटितत्वात्, दाशब्दावयवदकारवादित्यनुमानलब्धोऽयंन्याय इत्याहुः "प्रणिदापयतिप्रणिधापयतीत्यत्रापि नैतौ दाधावर्थवन्तौ किन्तर्हि दाप्धापाविति" भाष्येणापि लभ्यते उक्तार्थ इतिभाष्यतत्वविदः । बोधकता, स्वाश्रयावयवाघटितापर्याप्ताबोधकतात्वात्, रामशब्दनिष्ठबोधकतावदित्यनुमानमप्यागमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वं बोधयति । किञ्च "स्यसिच्सीयुट्तासिषु" इतिसूत्रे " भावकर्म्मवाचिनि प्रत्यये परे स्यादय इत्यर्थे स्यसिच्तासयो विशेषिताः सीयुडविशेषितः इतिभाष्य उक्त न्तदप्यागमसमभिव्याहारे आगमिनोऽर्थवत्त्वाभावे एव सङ्गच्छते, भाविषीष्टेत्यत्र हि सीयुट्समभिव्याहारे लिङोऽनर्थकत्वेन भावकर्म्मवाचित्वाभावेन सीयुटो भावकर्म्मवाचिप्रत्ययपरत्वासम्भवात् । अर्थवत्त्वे तु सीयुटस्तादृशप्रत्य

यपरत्वसत्त्वेनाविशेषितोक्तिरसङ्गता स्यात् । नचैतद्भाष्यात् प्रत्ययत्वस्यैव सीजुट्समभिव्याहारे लिङि अभावः कल्प्यतामिति वाच्यं, प्रत्यय इतिमहासंज्ञया अर्थबोधकत्वे सति प्रत्ययपदवत्त्वस्यैव प्रत्ययत्वरूपतया तदपेक्षयाऽर्थवत्त्वस्य लघुत्वेन कल्पनागौरवात् प्रत्ययत्वार्धधातुकत्वादेर्विशिष्ट एव सत्वकल्पने तु प्रत्ययार्धधातुकसंज्ञाविधायकशास्त्रस्य साक्षाद्बाधापत्तेश्च । अवयवः, स्वनिरूपकपूर्वत्वाभाववान वयवत्वात्, रामाद्यवयवरेफवदित्यनुमानेनाविशेषितोक्तिरसङ्गतेतिचेन्न "नद्यै कुमार्य्यै"इत्यादावाटः एपूर्वत्वाभावापत्तौ वृद्ध्यनापत्तेस्तदनुमानस्यानातिदिष्टावयवविषयत्वात् । किञ्च उस्यपदान्तादितिसूत्रस्थमपि भाष्यम् उक्तार्थे प्रमाणम् तत्रहि– अपदान्तादिति किं का उस्रा कोस्रा, अपदान्तादितिशक्यमकर्त्तुं कस्मान्न भवति का उस्रा कोस्रा, अर्थवद्ग्रहणेनानर्थकस्येति नैषा परिभाषेह शक्या विज्ञातुम् इह हि दोषः स्याद्भिन्द्युरित्युक्तम्, यासुडागमसमाभिव्याहृतस्योसोऽनर्थकत्वादेव हि दोषः स्यादितिसिद्धोऽयंन्यायः ॥ नचास्य न्यायस्याश्रयणे फलाभावः,भूयादित्यत्र तकारस्याप्यन्यथा अर्थवत्त्वेन प्रत्ययत्वाद्धल्ङ्यादिलोपापत्तेः,नच हलः परत्वाभावः सय्योंगादिलोपस्यासिद्धत्वेन तस्यापि सत्वात्, यदिच ङ्याप्साहचर्य्यात्तिङवयव एव हल् गृह्यते,तस्मादेव प्रत्ययविधायकशास्त्रघटकपदप्रयोज्याव्यवहितोत्तरत्वसम्बन्धावच्छिन्नप्रकारताश्रयान्त एव वा गृह्यते इति न दोष इत्युच्यते, तर्ह्येधिषीध्वमित्यत्रेड्विशिष्टस्येणन्ताङ्गत्वेन ततः परस्य षीध्वमित्यकमस्येणः षीध्वमित्यनेन मूर्धन्यापत्तिर्दोषः,स्वीकृते च तस्मिन् षीध्वमोऽनर्थकत्वान्न दोषः । नच विभाषेट इत्यत्रेड्भिन्नस्यैवेणस्सम्भवेनार्थाधिकारादत्रापि तस्यैव ग्रहणमिति न दोषोऽत एवेड्भिन्न एवेणिह गृह्यत इति मतेत्विति वक्ष्यते इति

वाच्यं, अर्थाधिकारस्य हि लाघवादेवानुरोधः कर्त्तव्यः उच्च
आवश्याश्रयितव्यार्थापेक्षयाऽन्यार्थस्य पूर्वत्राश्रयणे उभया
र्थोपस्थित्योरुभयविधतात्पर्य्यज्ञानयोः शाब्दबोधकारणतायां
गौरवात्, प्रकृते चेण्पदेनेण्पदवत्त्वेनैवेट इकारस्यापि ग्रहणे
भिन्नोपस्थित्यादेरभावेन गौरवाभावेनार्थाधिकारानुरोधे बी
जाभावात् । यदि च लुङ्लिटोर्धकारस्य मूर्धन्यादेशेऽङ्गभिन्न
स्यैवेणस्सम्भवेन तत्साहचर्य्यात् षीध्वम्विषयेऽपीड्भिन्नस्य
वेणो ग्रहणेनादोषो विभाव्यते, तदा रामाणामित्युदाहर्त्तव्यं
त्र उक्तन्यायाभावे आममात्रस्यापि प्रत्ययत्वेन ततः पूर्वस्य
रामन्नित्यस्यान्नन्ताङ्गत्वेन परनिमित्तकत्वेन बहिरङ्गतया नाम
त्यस्यासिद्धत्वेनाल्लोपो न इत्यल्लोपापत्तिःतत्सत्वे तु नुड्वि
स्यार्थवत्त्वाभावेनाप्रत्ययत्वेन ततः पूर्वस्य भत्वाभावान्न दो
षः अकारमादाय जातो नुडुकारविनाशं प्रत्यनिमित्तं स्यादिति
नाशङ्कनीयम्, तथा सति नामीतिदीर्घस्याप्यभावापत्तौ नामीति
स्य वैयर्थ्यापत्त्या तत्सामर्थ्यात् नुट्शास्त्रीयाभ्यनुज्ञावाक्ये सन्नि
पातपरिभाषाप्रयुक्तसङ्कोचाभावस्य कल्पनीयत्वात् अभ्यनुज्ञा
वाक्यविचारश्च वक्ष्यते नामीत्येतत्सूत्रप्रयुक्त एव निमित्तविघा
तस्तत्सामर्थ्यात् संह्रत इत्युच्यते चेन्नेदमपि फलं । नन्वेवं
तर्हि पूतक्रतुशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि तुकि पुतक्रतुदिति
तत्र प्रयोगे आगमरहितस्याप्यर्थवत्त्वप्रातिपदिकत्वादेस्सत्त्वे
पूतक्रतोरैचेत्यस्य प्राप्तस्याभाव एव फलं न्यायस्वीकारे पू
क्रतुमात्रस्यानर्थक्यात् पूतक्रतुदित्यस्यानिर्दिश्यमानत्वान्न दो
इतिचेन्न विचारासहत्वात् तथाहि—स्वीकृतेऽपि न्याये उक्त
प्रवृत्तिर्दुर्वारा पूतक्रतुशब्दादुपस्थितार्थस्य पूतक्रतुशब्दे
विशेषणत्वेन अर्थवत्पूतक्रतुशब्दावयवानिर्दिश्यमानस्यैकारादे
पूतक्रतुशब्दान्ङीषित्यर्थस्यैव न्याय्यतयाऽर्थवत्पूतक्रतुशब्दो यत्र

गमन्यायेन पूतक्रतुदिति तदन्वयकर्मनिर्दिश्यमानः पूतक्रतुशब्दस्त-स्यादेशप्राप्तेः, अत्र केचित् सिद्धान्ते लक्ष्यानुरोधादत्रनिर्दिश्यमान एवार्थवतोऽन्वयेन प्रकृते तस्य तत्त्वाभावान्नदोषः न्यायानाश्रयणे तथाऽन्वयेऽपि दोषो दुर्वार इति फलं सम्यगेवेत्याहुः। तन्न, न हि परिभाषान्तरेणेत्रानयाऽर्थवदुपस्थाप्यते येन तस्य यथेच्छमन्वयः स्यादपि तु शब्दार्थयोः शब्दशक्यतयोपस्थितार्थस्य त्यागाभावमूलिकया तया पूतक्रतुशब्दादुपस्थितार्थस्य तदुपस्थाप्यपूतक्रतुशब्द एवान्वयःस्यात् समानपदश्रुतेः तथैव सर्वत्रान्वयाच्च नतु निर्दिश्यमाने किन्तु ङीप ऐकारादेशस्य च सन्नियोगशिष्टतया साहित्यविशिष्टयोरेव तयोर्विधानम् समानदेशत्वविशिष्टसमानकालत्वमेव च साहित्यपदार्थः तच्चाव्यवहितपूर्वापरीभावेनैव तयोरवस्थाने उपपद्येत प्रकृते च तद्बाधेन सूत्राप्रवृत्त्या सिद्धान्ते दोषाभावः आदेशोहि निर्दिश्यमानस्य, प्रत्ययश्च प्रातिपदिकत्वनिमित्तकः पूतक्रतुच्छब्दादिति तद्बाधः स्पष्टः। न्यायाभावे तु निर्दिश्यमानस्यापि प्रातिपदिकत्वसत्वेन तत्रैवोभयोस्समावेशसम्भवेन दोषो दुर्वार इत्याहुः, परे तु क्विबर्थनिष्ठविशेष्यतानिरूपितपूतक्रतुनिष्ठप्रकारताप्रयोजकत्वरूपोपसर्जनत्वान्नात्र ङीपः प्रसक्तिरनुपसर्जनाधिकारीयत्वात्तत्सूत्रस्य।

ननु किमिदमुपसर्जनत्वं, नेतरार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वं तत्,घटत्वादेरपि घटांशे प्रकारतया तत्प्रयोजकघटादिपदानामपि तत्वापत्तेः। नापीतरत् यत् पदं तदेतरनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वं तत् घटस्येतरपदार्थत्वाभावेन दोषाभावादिति सम्यक्। क्विबन्तस्थलेऽपि क्विपस्सर्वापहारेण "यःशिष्यते"इतिन्यायेन प्रकृतेरेव विशिष्टार्थकत्वेन तत्लोपसर्जनत्वानापत्तेः। नापीतरत्व मर्थान्वय्येव प्रका-

रता चोपस्थितीयविशेष्यतासमानाधिकरणा गृह्यत इतिघटा
वतिव्याप्तेरनवकाशःविशेष्यता चोपस्थितीया गृह्यत इति
घटोऽस्तीत्यत्रास्त्यर्थनिष्ठशाब्दबोधीयविशेष्यतामादायापि दु
नसन्तोषसम्भवः चरमविशेष्यता चोपसर्जनत्वेन निवक्षित
प्रयोज्यैव गृह्यत इति नोदासीनविशेष्यतामादायापि वादि
विजेतव्यं नन्वेवमपि राजपुरुषतात्पर्यकतच्छब्दस्योपसर्ज
त्वापत्तिर्वज्रलेपायते पुरुषत्वावच्छिन्नोपस्थितीयविशेष्यता
रूपितराजनिष्ठप्रकारताया राजत्वनिष्ठोपस्थितीयप्रकारता
रूपितविशेष्यतासमानाधिकरणायाः प्रयोजकत्वस्य तच्छ
सत्वात्,अत्र वदामः शक्तिज्ञानविशिष्टत्व मुपसर्ज्जनत्वं वैशिष्ट्य
ञ्च स्वजन्योपस्थितिजन्यशाब्दबोधजनकत्वेन तात्पर्यविषयत
स्वविशिष्टविशेष्यताप्रयोजकत्वोभयसम्बन्धेन तत्र वैशिष्ट्यम् स
जन्योपस्थितिनिरूपितत्व स्वविशिष्टज्ञानाधीनोपस्थितीयविशे
तानिरूपितप्रकारतासामानाधिकरण्योभयसम्बन्धेन पुनर्वैशिष्ट
स्वाभिन्नत्व, स्वविषयशक्तिसमानाधिकरणशक्तिविषयकत्वोभ
सम्बन्धेन घटशब्दस्थले उपस्थितीयविशेष्यतायास्तादृशप्रका
तासामानाधिकरण्यविरहान्नातिव्याप्तिः, आचारक्विबन्तादिस्थ
प्रथमशक्तिज्ञानाधीनोपस्थितिविशेष्यताया द्वितीयशक्तिमाद
तादृशप्रकारतासामानाधिकरण्योपपादनान्नाव्याप्तिः,नवा ताद
तच्छब्दे अतिव्याप्तिः तत्र राजनिष्ठविशेष्यतानिरूपकोपस्थिति
नकशक्तिज्ञानस्य समानाधिकरणप्रकारतानिरूपकोपस्थिति
नकज्ञानस्य चैक्यात् आद्यसम्बन्धनिवेशात राजनिरूपितशक्ति
मादायापि न दोषः अथ परस्मैपदं परस्मैभाषेत्यत्र "वैयाकरण
ख्यायां चतुर्थ्या" इत्यस्योदाहणभूते परशब्दस्योपसर्जनत्वा
त्तिः परत्वावच्छिन्ननिरूपितशक्तिज्ञानाधीनोपस्थितीयविशे
तायां सामासिकशक्तिज्ञानाधीनोपस्थितीयविशेष्यतानिरूपि

प्रकारतासामानाधिकरण्यात् तादृशविशेष्यताप्रयोजकत्वस्य च परशब्दे सत्वादितिचेत्, मैवं शक्तिज्ञानवैशिष्ट्यनियामकस्य स्वविषयशक्तिसमानाधिकरणशक्तिविषयकत्वस्य स्थाने स्वविषयशक्तिपर्य्याप्त्यधिकरणनिष्ठचरमावयवतानिरूपकसमुदायपर्य्याप्तशक्तिविषयकत्वस्य निवेशनीयत्वात् प्रकृते सामासिकशक्तेः प्रथमशक्त्याश्रयपरशब्दचरमावयवकसमुदायेपर्य्याप्तत्वाभावात् । नन्वेवं द्वाविच्छति द्वीयति द्वीयतेरप्रत्यये द्व इति प्राप्नोति स्वश्रेष्यते इति "तदोस्स" इतिसूत्रस्थ भाष्यमसङ्गतं स्यात् त्वदुक्तोपसर्जत्वस्यैव सत्वेनात्वसत्वाप्रवृत्तेरिति वाच्यं, तस्यैकदेशयुक्तत्वनाद्दोषस्य शब्देन्दुशेखरे प्रतिपादितत्वात् । नन्वेतद्भाष्यप्रामाण्यात् स्वेतरत्व स्वान्तसमुदायघटकत्वोभयसम्बन्धेन स्वविशिष्ट दृग्योऽन्यविशेष्यतानिरूपितप्रकारतासमानाधिकरणविशेष्यताप्रयोजकत्वमेवोपसर्ज्जनत्वं भाष्यसम्मत, मत एवानुपसर्ज्जनाधिकारस्य स्त्रीप्रत्यये-तदन्तविधिज्ञापकतापरभाष्यं सङ्गच्छते अन्यथा गौरादिशब्दादाचारक्विबन्तात् कर्त्तरि क्विपि ङीषवारणाय चारितार्थ्यसम्भवे ज्ञापकत्वोक्तिरसङ्गता स्यात तादृशानामनभिधानं शेखरकारोक्तं तु न युक्तं, मदुक्तोपसर्जनत्वे पूर्वभाष्यसम्मत दोषाभावात् निरुक्तभाष्यस्यैकदेशयुक्तत्वे प्रमाणाभावाच्चेति चेदिष्टत्वात्, शेखरकारेण तु इतराविशेषणतयोपस्थितस्योपसर्जनत्वव्यवहारदर्शनेन महासंज्ञया लौकिकार्थसाधारण्येन तथोक्तमिति दिक् । ततश्च शेखरमते पूतक्रतुदित्यस्योपसर्जनत्वेनैव ङीपो वारणसम्भवान्नागमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वमित्यस्य फलम्भवितुमर्हतीतिचेदत्रोच्यते । भूयास्तामित्यादौ न्यायाभावे तामित्यस्यापि प्रत्ययत्वेनेडापत्तिर्न्याये च-तावन्मात्रस्यार्थवत्त्वाभावेनार्थवत्त्वे सति प्रत्ययपदवत्त्वरूपप्रत्ययत्वाभावान्न दोष इति; तदपि न सम्यक्

आर्द्धधातुकस्य प्रत्ययत्वेन तदाद्युपस्थित्या तदन्तविधावार्द्धधातुकान्ततदादिर्यो वलादिस्तस्य इडागम इत्यर्थापत्त्या भूयास्तामित्यत्र धातोः पूर्वमिडापत्तिवारणाय धातोः परस्यार्द्धधातुकस्येत्यर्थोवाच्यः तथा सति प्रत्ययग्रहणे चापञ्चम्येतिनिषेधान्नदोषः एवञ्च यासुटा व्यवहितत्वेन तामात्रस्येडागमाऽसङ्गात्। अथातीदित्यादावीकारान्तरस्य गुणापत्तिस्तकारमात्रात्मकप्रत्यये परे, स्वीकृते च न्याये आगमरहितस्य तकारमात्रस्योक्तरीत्या प्रत्ययत्वाभावान्न दोष इति फलव्युक्त, मीकारविधानसामर्थ्याद्गुणाप्राप्तिस्तु न, अगुषीदित्यादौ श्रवणार्थतयावश्यकत्वात्तत्र कुटादित्वात्तिपो ङित्त्वेन गुणाप्राप्तेः, नच गुणे एकादेशप्राप्त्या सिज्लोप एकादेशे सिद्धो वाच्यइत्यस्य वैयर्थ्यान्न गुण इति सम्यक्, तेनागमाविशिष्टस्यैवार्थवत्त्वमितिकल्पनात्, अकुटीदित्यादौ ङित्त्वेन गुणाप्राप्त्या चारितार्थ्याच्चेतिचेन्नार्द्धधातुकाव्यवहितपूर्वमङ्गं सार्वधातुकार्द्धधातुकान्यतराव्यवहितत्वाभाववविशिष्टगन्तमेवास्ति तत्साहचर्यात् सार्वधातुकाव्यवहितपूर्वमप्यङ्गं तथाभूतेगन्तमेव गृह्यते प्रकृते चेकारस्य तथाभूतत्वाभावेन दोषाभावात्, पूर्वान्तवद्भावेनेट्त्वाद्दीधीवेवीटामिति निषेधाच्च तत्र दीर्घेकाररूपागमस्यापि प्रश्लेषेणेटोपि निषेधाङ्गीकाराच्च, एतेन सिज्लोपात्पूर्वमेव गुणापत्तिर्दुर्वारेति परास्तम्। दण्डिनउ अंग्रेतिस्थिते निपातस्य नुटि उमात्रस्यानर्थकत्वेन प्रगृह्यत्वाभावः फलमिति केचित्तदपि न बहिरङ्गत्वेन नुटोऽसिद्धत्वादर्थवत एव निपातस्य सत्वेन प्रगृह्यत्वस्य सिद्धान्तेपीष्टत्वात्। नच संज्ञाशास्त्राणां विधिनिमित्तनिमित्तकत्वेनोभयोस्साम्यमिति वाच्यं तावतापि पूर्वत्रासिद्धत्वस्य दुर्वारत्वात्, अजानन्तर्यइतिनिषेधाच्च। उनिपातस्य नञा समासे अनु, तत्र न्याये, नकारागमाविशिष्टनुशब्दस्यैवार्थवत्त्वेनाकारमात्रस्यार्थवत्त्वाभावेना र्थवन्निपातत्वा

भावेन निपात एकाजनाङित्यंस्याभवृत्याऽचि परे यणि अन्वत्रेति सिद्ध्यति न्यायानङ्गीकारे उमालक्ष्म्यर्थ्यर्थवन्निपातत्वेन प्रगृह्यत्वापत्तेरन्वत्रेत्यस्यासिद्ध्यापत्तेरिति मूर्द्धाभिषिक्तं केनचिन्मन्यमानमपि फलं,निपातयोस्समासस्य कुत्रापि प्रामाणिकप्रयोगेऽदर्शनात् उभयोरपि द्योतकयोः परस्परासामर्थ्येन तदसम्भवाच्च न विदुषामामोदावहमिति बोध्यम्। समासात्समासान्तप्रत्ययोत्पत्तौ बहुकुमारीशब्दात् समस्यमानात् कपि कवुत्तरमागमसमभिव्याहार न्यायेन कपःप्राग्वर्त्तिनोऽर्थवत्त्वाभावेन प्रातिपदिकत्वाभावेपि कप्समकालमेव पूर्वभागस्यप्रातिपदिकत्वापत्तौ ह्रस्वत्वापत्तिस्स्यादत स्समासालौकिकविग्रहवाक्ये बहु अस कुमारी असित्यत्र समाससमकालमेव कपि तत्काले समासस्थित्यभावेन वुत्तरकालेऽनर्थकत्वेनाप्रातिपदिकत्वाद्ध्रस्वाभाव इति भाष्ये समासान्ता इतिसूत्रे शेखरे चोक्तम् स एव ह्रस्वाभावो न्यायस्य फलमवेहि नचीत्रापि "न कपी"तिनिषेधान्नफलमिति वाच्यम्, "केण" इतिसूत्रविहितस्यैव तेन निषेधात् कथमन्यथा समासालौकिकविग्रहवाक्ये कपः प्रवृत्तावत्र ह्रस्वाभावः फलत्वेन भाष्योक्तस्सङ्गच्छतामिति वक्तव्यम्। अत्रापि "न कपीति निषेधावलम्बिदुराग्रहे तु फलाभावेप्यनुमितिसिद्धोऽर्थः कथं प्रत्याख्यातुं शक्यमितिसन्तोष्टव्यमित्यलम्। ननूक्तन्यायादागमसमभिव्याहारे आगमिनोऽर्थवत्त्वाभावोनिश्चित इति तद्व्यावृत्तमर्थवत्त्वं वक्तव्यं नचार्थबोधजनकत्वन्तत्,उक्तन्यायादागमविशिष्टस्यैव बोधजनकत्वन्नागमराहित्यस्येतिवाच्यं, फलोपधायकतारूपजनकताया ग्रहणे कोऽपनीतिश्वासादिप्रतिबन्धकवशाद्बोधाजनने प्रणिदातेत्यादावपि घुत्वानापत्तेः स्वरूपयोग्यतायाश्च तस्या जनकतावच्छेदकरूपतया दातृत्वरूपबोधजनकतावच्छेदकस्य प्रकृतेऽपि सत्त्वात्। नापि बोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वन्तत्, अयं मद्

च्चरितदाशब्दोऽर्थबोधको भवत्वितीच्छाया अनिवार्य्यमाणतया ऽर्थवत्त्वस्याप्यशक्यनिराकरणत्वात् । अत्रोच्यते उक्तन्यायेन न तत्रार्थवत्त्वं निराक्रियते अपितु अर्थवत्त्वप्रयुक्तं कार्य्यंन्न तत्सम भिव्याहारे तद्रहितस्येत्येव बोध्यते इत्यर्थवत्त्वस्य सत्वेपि नागमि नस्तत्प्रयुक्तं कार्य्यमिति न दोषः । अथवा स्वनिष्ठाभिधेयतानि रूपितोद्देश्यतासम्बन्धेनागमविशिष्टभिन्नत्वे सति अर्थबोध जनकत्वप्रकारकतात्पर्य्यीयविशेष्यताश्रयत्वमेवोक्तन्यायादर्थवत्त्वमिति नोक्तदोषः । ननु तादृशार्थवत्त्वस्य दापि सत्वेन पर्य्याप्त्या तत्रत्यदाशब्देऽपि सत्वात् घुत्वं निर्बाधमिति वाच्यं पर्य्याप्त्याऽर्थवत्त्वस्य विवक्षितत्वात् । ननु नह्यवयवापर्य्याप्त समुदाये पर्य्याप्तिरस्तीति न्यायेन दाशब्देऽपि पर्य्याप्तिरस्त्येवेति चेन्नैवम्, अर्थबोधनेच्छयोच्चारितत्वमेवार्थवत्त्वम् अर्थबोधनाय पि अव्यवहितपूर्वत्वविशिष्टदाशब्दस्योच्चारणप्रसङ्गे दापशब्दोच्चारण स्यैव शास्त्रेण बोधिततया अर्थबोधनेच्छयोच्चारितत्वं दापशब्दे ए न दाशब्दे तस्य नान्तरीयकतयोच्चारणेऽप्यर्थबोधनेच्छयोच्चारित त्वाभावादिति न दोष इत्यपि न, चरमप्रवृत्तशास्त्रेण दापयतीत्येतदुच्चारणस्यैवार्थबोधनाय बोधितत्वेन तस्यैव निरुक्तार्थवत्त्वं न दापशब्दस्येति तस्याप्यर्थवत्त्वानापत्तेः । पूर्वप्रवृत्तशास्त्रेण दापशब्दोच्चारणस्यापि बोधितत्वेन न दोष इतिचेद्दाशब्देऽपि "डुदाञ्" दान इतिशास्त्रबोधितत्वाद्दोषो दुर्वार एवेतिचेदस्तु पूर्वो क्तमेवार्थवत्त्वं ननु तदप्यस्त्येवेत्युक्तमितिचेन्नार्थवद्दाशब्दस्य घु संज्ञेत्यर्थे अर्थवत्त्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकधर्म्माव च्छिन्नानुयोगितानिरूपकपर्य्याप्तिप्रतियोगिदात्वाश्रयस्य घुसं ज्ञेत्यर्थस्योत्सर्गतो लाभेन दोषाभावात् । अर्थवत्त्वप्रतियोगिकस्य एतद्दाशब्दे सत्वेऽपि तदनुयोगितावच्छेदकत्वस्य दापशब्द गतत्रित्वे सर्वान्न्यूनानतिप्रसक्ते सत्वेन दात्वप्रतियोगिकपर्य्या

प्त्यनुयोगितावच्छेदकत्वस्य च दागतद्वित्वे सत्वेन प्रकृतार्थसमन्वयस्यासम्भवान्न घुसंज्ञा दाशब्दस्येति बोध्यम् । नन्वेमपि दातेत्यादावर्थवत्त्वपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य दात्वपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य च द्वित्वे सत्वेन तादृशदात्वस्य च दाप्घटकदाशब्देऽपि सत्वेन दोषतादवस्थ्यमितिचेन्न, शुद्धदात्वस्यदाशब्दे सत्वेपि विशिष्टदात्वत्वावच्छिन्नाश्रयतानिरूपिताधिकरणताश्रयस्यैव घुसंज्ञेत्यर्थेन दाप्घटकदाशब्दे तदभावेनावतरणसङ्गतेः, दात्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकं यदर्थवत्त्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकं तदाश्रयस्य घुसंज्ञेत्यर्थेन दातेत्यादौ तादृशं दागतं द्वित्वं तदाश्रयत्वस्य तत्रैव सत्त्वेन दाप्घटकदाशब्दस्य तदाश्रयत्वाभावेन घुत्वाप्राप्तेश्च । ननु मैत्रादावपि विद्यमानस्य ब्राह्मणत्वादेश्चैत्रवृत्तित्वेन चैत्र एवाधिकरणत्वमितिवत् दाप्पर्य्याप्तस्याप्यर्थवत्त्वस्य दावृत्तित्वेन दाशब्दे एव पर्य्याप्तेस्सत्वेन तदनुयोगितावच्छेदकत्वस्य दाशब्दगतद्वित्वे एव सत्वेन दोषतादवस्थ्यं, पर्याप्तिप्रतियोगिभूतार्थवत्त्वे दावृत्तित्वस्यापि विशेषणतया प्रतियोगिताया दावृत्तित्वार्थवत्त्वत्वोभयपर्याप्तावच्छेदकतानिरूपितावच्छेद्यतावत्वेऽप्यर्थवत्त्वत्वपर्य्याप्तावच्छेदकतानिरूपितावच्छेद्यतावत्प्रतियोगितानिरूपकपर्य्याप्तेरेव प्रवेशेन तादृशपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य दापगतत्रित्वे एवसत्वेनापत्तिविरह इति तु न युक्तं, नह्यवयवापर्य्याप्तस्येतिन्यायेन दावृत्तित्वार्थवत्त्वत्वोभयपर्य्याप्ताया अवच्छेदकताया अप्यर्थवत्त्वत्वपर्य्याप्तत्वात् । नापि स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनार्थवत्त्वत्वनिष्ठतिकत्ववृत्तिप्रतियोगिताया एव विवक्षणेन न दोष इतिकथनेऽपि निस्तारः पूर्ववत् उभयपर्याप्तावच्छेदकताया अप्यर्थवत्त्वत्ववृत्तित्वेन रूपेणार्थवत्त्वत्व एव पर्या-

प्तत्वात् तद्दोषतादवस्थ्यं तत्रापि किञ्चिन्निवेश्य वारणे पूर्वोक्त-
रीत्या पुनरपि दोषसद्भावेनानवस्थाप्रसङ्गात् । अत्रोच्यते दावृ-
त्तित्वविशिष्टार्थवत्त्वप्रतियोगिकपर्याप्तिरस्तु दाशब्दे एव तदनु-
योगितावच्छेदकञ्चास्तु दागतद्वित्वमेव तथापि तादृशपर्याप्ति-
सम्बन्धावच्छिन्नाऽधेयता दावृत्तित्वविशिष्टार्थवत्त्वनिष्ठा, तदवच्छे-
दकता दावृत्तित्वार्थवत्त्वत्वोभयनिष्ठा न मन्यते, ऽपितु दावृत्ति-
त्वनिष्ठैव लाघवात्, पर्याप्तिसम्बन्धेन दावृत्तिमदित्येतत्प्रती-
तिविषयीभूताधेयतावच्छेदकतायास्तत्र क्लृप्तत्वात् सैवाधेयता
दावृत्तित्वविशिष्टार्थवत्त्ववान् दाशब्दइतिप्रतीतावपि विषयीभू-
तत्वर्थवत्त्वत्वावच्छिन्ना मानाभावात्, ततश्चार्थवत्त्वत्वावच्छिन्न-
या पर्याप्तिसम्बन्धावच्छिन्नाऽधेयता तादृशाधेयतानिरूपिता-
धिकरणतावच्छेदकधर्म्मावच्छिन्नानुयोगितेत्याद्यर्थे, स्तादृशाधि-
करणतावच्छेदकञ्च त्रित्वमेवेति न दोषः । नच दावृत्तिमान् दाश-
ब्दः, दावृत्त्यर्थवत्त्ववान् दाशब्द इत्युभयत्र प्रतीतावेकरूपाधेय-
ताया एव विषयत्वे प्रतीत्योर्वैलक्षण्यानुपपत्तिरितिवाच्यं प्रका-
रतावच्छेदकभेदेन वैलक्षण्योपपत्तेः । किञ्च दावृत्तित्ववि-
शिष्टार्थवत्त्वस्येव दावृत्तित्वविशिष्टस्य दापगतत्रित्वस्यापि दाशब्द
एव सत्त्वस्याभ्युपगन्तव्यतया तस्यापि दागतद्वित्वस्येवानतिप्रस-
क्ततया दावृत्तित्वविशिष्टार्थवत्त्वत्वावच्छिन्नप्रतियोगिताकपर्या-
प्त्यनुयोगितावच्छेदकत्वमपि तादृशत्रित्वस्यैव क्लृप्तत्वान्न दा-
गतद्वित्वस्येति न दोष इति दिक् ।

नन्वेवमप्यनैमित्तिकत्वेनान्तरङ्गभूतघुसंज्ञया बहिरङ्गपुको-
ऽसिद्धत्वेनाऽर्थवतो दाशब्दस्यैव दर्शनेन प्रवर्त्तितव्यमेवेति नोक्तल-
क्षणसङ्गतिः । किञ्च यथोद्देशपक्षे पूर्वप्रवृत्तघुत्वमादायैव णत्वा-
पपत्त्याऽवतरणासङ्गतिः । किञ्चानुभूयत आनन्दश्चैत्रेणेत्यादौ
कर्म्मणि लकारसिद्धये अवश्याश्रयणीयेन पूर्वं धातुरुपसर्गेण ।

ऽथत इति सिद्धान्ते पूर्वमुपसर्गयोगे णत्वे प्रयाणणिचि पुकि रूपसिद्धिः । किञ्चार्त्तिह्रीत्यादिसूत्रे गार्त्तीत्यादिभ्यः परस्य णेः पुटो विधानेन दाधातोरर्थवत्त्वेन घुत्वासिद्धौ णत्वासिद्धिरिति चेन्न, संज्ञाशास्त्राणां विधिनिमित्तनिमित्तकत्वेन घुसंज्ञाया अपि णत्वनिमित्तानिमित्तकत्वेन बहिरङ्गतरत्वादत एव प्रेद्ध इति भाष्योदाहरणं सङ्गच्छते ऽन्यथा "त्यदादीनाम" इत्यस्य विभक्तिनिमित्तकत्वेन बहिरङ्गतयाऽसिद्धत्वेन गुणसंज्ञानापत्तौ पररूपत्वानापत्तिः विधिनिमित्तनिमित्तकत्वे तु गुणसंज्ञाया अपि पररूपनिमित्तनिमित्तकत्वेनादोषः, नच तावतापि संज्ञापेक्षया प्रकृतिप्रत्ययोभयापेक्षस्य त्यदादीनाम इत्यस्य तत्त्वमेवेति वाच्यम्, नाजानन्तर्य्ये इतिनिषेधात् । किञ्च यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञेतिवचनेन योगग्रहणलब्धेन यदर्थक्रियायोगस्तद्धातुं प्रत्येवोपसर्गसंज्ञेत्यस्य लाभेनोपसर्गप्रदेशे प्रत्यासत्त्या घुसंज्ञकादिनिरूपितोपसर्गत्वविशिष्टस्यैव ग्रहणेन प्रकृते दाशब्दे पूर्वजातघुत्वस्य सत्त्वेऽपि तस्यानर्थकत्वेन तदर्थक्रियायोगाभावेन तं प्रत्युपसर्गत्वस्याभावात् । तदर्थक्रियायोगस्तु तज्जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्य्यग्राहकत्वमेव, तथाच जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्य्यग्राहकत्वे सति प्राद्यन्यतमत्वमुपसर्गत्वं जन्यतायाश्च निरूपकांशे नित्यसाकांक्षतया प्रदेशे तत्तदुपात्तधातुनिरूपितताया एव प्रत्यासत्त्या ग्रहणम् एतेन सङ्केतसम्बन्धेनोपसर्गपदवत्त्वस्यैवोपसर्गपदार्थतया घटत्वादिवत्ससम्बन्धिकत्वाभावेन घुनिरूपितस्यैव ग्रहणमित्याद्यग्रहणमित्यपास्तम् । किञ्च पूर्वं धातुस्साधनेन युज्यते" इत्येव युक्तमत एव प्रत्यय इत्यस्य सिद्धिरन्यथा पूर्वमुपसर्गयोगे सवर्णदीर्घे पश्चाद्गुणे प्रतय इति स्यात् अनुभूयत इत्यत्र तु भूधातोरेवानुभवार्थकत्वं श्रोतृबोधाय तु प्रकृतार्थतात्पर्य्यग्राहकस्या-

नोद्द्योंग इति न दोषः। नापि णेः पुटो विधानं ग्ल
मदीदपदित्यादौ "णौ चङ्युपधाया ह्रस्व" इत्यनेन ह्रस्वत्वा
पत्तेः, पकारसहितस्य णित्वेन पकारात्पूर्वाकारस्याङ्गनिरूपि
पधात्वाभावात् क्नोपयतीत्यादाविडागमापत्तेश्च केचित्तु ग्रपि
पक इत्यादौ पकारसहितस्य णित्वेन लोपापत्तिरित्याहुस्त
निर्दिश्यमानपरिभाषया ऽदोषात् नापि धात्वधिकारे अर्तीत्या
पाठेन धातुशब्दसुचार्य्य णौ परे पप्रत्ययविधानेन ग्ल
दापयतीत्यस्य सिद्धिः पप्रत्ययस्य चार्धधातुकत्वेन "सार्वधातुका
र्धधातुकयोरित्यनेन गुणोपपत्तौ पुगन्तलघूपधस्येति सूत्रे पु
न्तग्रहणमपि न कर्त्तव्यमित्यपि सम्यक्, जिह्रेतीति ह्रीस्त
द्धात्वर्थे णिचि पुकि ह्रीपयतीति भवतीदानीम् पप्रत्यये गु
पत्तेः, क्नोपयति क्ष्मापयतीत्यादौ पप्रत्ययस्येडापत्तिश्च। पप्र
रणे सार्वधातुकमपिदितिङित्वेनार्पयतीत्यादौ गुणानापत्ति
दर्थं पान्तलघूपधस्यचेतिकरणे सार्वधातुकादिसाहचर्य्येण प्र
यस्यैव पस्य ग्रहणे च गौरवापत्तेः। ङित्ववारणार्य पश्
णे शकारस्येत्संज्ञानापत्तेः, श्पप्करणे चेत्संज्ञकशकारादि
घ्रापयतीत्यादौ जिघ्रादेशापत्तेश्च,ह्रीपयतीत्युक्तदोषपरिहारा
नच पप्रत्ययो विधीयतामार्धधातुकत्वं सार्वधातुकत्वं वा मास्तु
गन्तेत्यत्र लघूपधस्येत्येको योगस्तस्य चोक्त एवार्थःपि चेति
यस्तत्र सार्वधातुकार्धधातुकयोरित्यनुवर्त्तते, ततश्च सार्वधातु
घ्न्यवहितपूर्वत्वविशिष्टे पप्रत्यये परे इको गुण इत्यर्थे सर्वेष्टसि
रिति वाच्यं, यतः क इवाचर क,अ इवाचर अ,क अ इति
यस्यां क्रियायामभिधीयते सा का क्रिया,काशब्दाच्चा
न्ताद्धेतुमण्णौ पुकि ण्यन्तात्कर्त्तरि क्विपि णिलोपे काप्
त्यादौ यदागमन्यायेन काप्शब्दस्य तिङन्तत्वेन ततःपरस्य
तीत्यस्य (तिङतिङ)इति निघातो न भवति;इदानीन्तु पप्रत्यय

यद्गागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ११ ॥

तिङन्तत्वाभावेन निघातापत्तिः, पञ्चमीसमासमाश्रित्याणिलोपस्य स्थानिवत्त्वेन निघातः सिद्धान्तेऽपि भवत्येवेतितु नसम्यक्, स्वरविधौ तन्निषेधादेवञ्चावतरणं स्वस्यगेवेति दिक् । केचित्तु गातांदाग्रहणेष्वविशेष इति परिभाषयाऽनर्थकस्यापि दाशब्दस्य घुसंज्ञासिद्ध्याऽवतरणमसङ्गतमेवेत्याहु स्तदपि न लक्षणप्रतिपदोक्त लुग्विकरण इतिपरिभाषयोरेव तया बाधात्, कथमन्यथा प्रनिदारयतीत्यादौ घुत्वाभावः, अनपायोपजनाविकारिभिरिति भाष्ये आगमार्थकोपजनशब्दस्य विकारात् पृथगुपादानेनागमस्य विकारत्वाभावबोधनेनैकदेशविकृतन्यायेनापि सिद्धिर्नोपादनीया ।

यस्यागमा यदागमा, आगमत्वमवयवत्वावच्छिन्नविधेयताश्रयत्वं नतु टिदाद्यन्यतमत्वं गौरवात्, एवञ्चागमपदेनैव विहितांशस्यापि लाभेनागमो विहित इत्यत्र विहितपदमाधिकमिति गुरुचरणाः । स्वसमभिव्याहृतपदार्थो यदर्थे साकांक्षस्तस्यैव षष्ठीवाच्यत्वनियमेनोद्देश्यत्वमेव यत्पदोत्तरषष्ठ्या अर्थइति यन्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रय इतियदागमपदस्यार्थः, तस्य गुणास्तद्गुणा अतद्गुणास्तद्गुणास्संपन्नास्तद्गुणीभूता,गुणशब्दार्थोवयवत्व माहार्य्यज्ञानं च्विप्रत्ययार्थो भूधात्वर्थोऽविवक्षितो विषयताश्रयः क्तप्रत्ययार्थ स्तन्निरूपितावयवत्वप्रकारकाहार्य्यज्ञाननिरूपितविषयताश्रयः समुदायार्थः । गृह्यत अनेनेति ग्रहणं, तस्य ग्रहणं तद्ग्रहणं तेन तद्ग्रहणेन, ग्रहधात्वर्थो बोधो, जनको ल्युडर्थो, बोधान्वयि विषयित्वं तत्पदोत्तरषष्ठ्यर्थः, जन्यत्वं गृह्यन्त इत्यत्रत्यग्रहधा-

यमुद्दिश्यागमो विहितः स तद्गुणीभूतः शा... तदवयवत्वेन बोधितोऽतस्तद्ग्रहणेन तद्ग्राहकेण ... द्बोधकेन शब्देन गृह्यते बोध्यत इत्यर्थः । तत्र ... त्वर्थबोधान्वयि तृतीयार्थः, बोधस्य च विषयताश्रय... कदेशविषयतायामन्वयो निरूपितत्वसम्बन्धेन तथाच ... रूपितविषयितावद्बोधनिष्ठजन्यतानिरूपितजनकतावच्छि... न्यत्वविशिष्टबोधनिरूपितविषयताश्रयः "तद्ग्रहणेन गृह्यन्ते" समुदायस्यार्थः । यदागमाइति तद्गुणीभूता इत्यत्र ... स्तद्गुणीभूता इति तद्ग्रहणेन गृह्यन्त इत्यत्र हेतु... तद्गुणीभूता इत्यस्य, तद्विशिष्टा इतिशेषः । यत इति, ... इति, च पदमुभयत्राध्याहृत्य बोधः कर्त्तव्यः । तथाच ... यन्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रया अत... निरूपितावयवत्वप्रकारकाहार्य्यज्ञाननिरूपितविषयताश्रया, ... तस्तथाभूता अतस्तद्विशिष्टास्तन्निरूपितविषयितावद्बोध... ष्ठजन्यतानिरूपितजनकतावत्पदनिरूपितजन्यत्वविशिष्टबोध... रूपितविषयताश्रय इतिपरिभाषार्थः पर्य्यवस्यति । अध्याहृ... पदार्थघटकवैशिष्ट्यञ्च, स्वघटितत्व स्वनिष्ठविधेयतानिरू... णोद्देश्यताश्रयघटितत्व स्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन ... तत्रापि वैशिष्ट्यं, स्वेतरत्वस्वनिष्ठविधेयतानिरूपितोद्देश्य... श्रयावयवाघटितत्वैतदुभयसम्बन्धेन । समन्वयो यथा ... दापयतीत्यादौ पकारो यतो दानिष्ठोद्देश्यतानिरूपितावयवत्वा... वच्छिन्नविधेयताश्रयोऽतः दानिरूपितावयवत्वप्रकारकाहार्य्य... ज्ञाननिरूपितविषयताश्रयो यत एवं भूतोऽतस्तत्प्रकारविशि... दाप्शब्दः दानिरूपितविषयितावद्बोधनिष्ठजन्यतानिरूपितजन... कतावत् पदं दाधाध्वदाप् इतिसूत्रघटकं दा पदं तन्निरूपितजन्य...

स्वविशिष्टोबोधोदापदजन्योधीविधेयस्तन्निरूपितविषयताश्रय इति भवति दाप्शब्दस्य घुत्वं, पकारवैशिष्ट्यं दाप्शब्दे कथमिति-चेदेवं स्वं पकारस्तद्घटितत्वं दाप्शब्दे पुनः स्वं पकारस्तन्नि-ष्ठविधेयतानिरूपितोद्देश्यताश्रयो दाशब्दस्तद्घटितत्वमपि दाप्-शब्दे, पुनः स्वं पकारस्तद्विशिष्टो दापघटकाभिन्नो यतः स्वेतर-त्वं पकारे नास्ति स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयावयवा-घटितत्वं दकारे अकारे दाशब्दे आप्शब्दे वा नास्ति, आद्य-योर्व्यपदेशिवद्भावेन अपरयोः स्वत एव तादृशावयवघटित-त्वादपितु तदुभयमुदासीनस्यैव तदघटितत्वं दाप्शब्दस्येति, तस्य घुत्वसिद्धिः । ननु यद्यपि यदागमपरिभाषया आगमवि-शिष्टस्यागमिवाचकपदग्राह्यत्वं बोध्यते तथापि शक्तिलक्षणा-भ्यामुपस्थितस्यैव शाब्दबोधविषयता, दाशब्दादौ आगमविशि-ष्टदापादिशब्दनिरूपितशक्तिलक्षणयोरभावेन कथं तस्य तेन बोध इतिचेदत्रोच्यते ग्राह्यत्वाभ्यनुज्ञाने यद्विना ग्राह्यत्वं न स-म्भवति तदप्यभ्यनुज्ञातमेव, ततश्च यदागमन्यायेन स्वघटित-त्वस्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयघटित-त्व स्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन स्वविशिष्टे समुदाये स्ववृत्तिधर्मारोप इति बोध्यते तृतीयसम्बन्धघटकवैशिष्ट्यञ्च स्वेतरत्वस्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरत्वोभयसम्ब-न्धेन समन्वयः पूर्ववत् । ततश्च दाप्शब्दोऽपि दात्वावच्छिन्न इति तस्य दापदेन बोध उपपन्नः । यद्वा आगमिबोधकदाश-ब्दादीनां स्वशक्यविशिष्टे लक्षणा बोध्यते अनेन न्यायेन, वै० स्वघटितत्व स्वविशिष्टाघटितत्वोभयसम्बन्धेन तत्र वै० स्वेतर-त्व स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयेतर-त्वोभयसम्बन्धेन । ततश्च दाशब्दस्य दापशब्दस्य च लक्षणयैव बोधः अर्थारूढलक्ष्यतावच्छेदकाक्रान्तत्वात् ।

गुणीभूता इत्यंशो बीजकथनम् । लोकेऽपि देवद-
स्याङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहणं दृ-
ते । यमुद्दिश्यविहित इत्युक्तेः प्रनिदारयतीत्यादौ न दो

ग्रहणपदे ल्युटः कर्तृबोधकतां बोधयितुमाह–(ग्राहकेणे
ग्रहधातोरुपादानार्थकत्वाभ्रमवारणाय बोधकेनेत्याह। (
दिश्यविहित इत्युक्तेरिति)अयं भावः यथा षष्ठीसमभिव्याहृ
गमपदार्थो विधेयत्वं साकाङ्क्षमुद्देश्यत्वे, तथाऽवयवत्वमवया
साकाङ्क्षमित्यविशेषादवयवित्वमेव षष्ठ्यर्थमङ्गीकृत्य यन्नि
वयवितानिरूपितावयवत्वावच्छिन्नविधेयताश्रयइत्येवार्थो य
गमपदस्य कुतो न कृतः तावतापि प्रणिदापयतीत्यादौ दोषाभ
दुद्देश्यत्वार्थकत्वे किं फलमिति (प्रनिदारयतीति) रेफनिष्ठावय
त्वावच्छिन्नविधेयतानिरूपितोद्देश्यताया "उरण्रपर" इत्येतद्
टकाण्पदप्रयोज्याया दार् घटकाऽऽकारे सत्वेऽपि दाशब्देऽभा
सिद्धान्ते दाग्रहणेन न दारितिसमुदायस्य ग्रहणमिदानीन्तु आ
रूपितावयवत्वस्य रेफे सत्वेन दानिरूपितावयवत्वस्य चाकारे
त्वेना "वयवावयवःसमुदायावयव" इतिन्यायेन दानिरूपिता
यवत्वस्यापि रेफे सत्वेन यदागमन्यायेन दाग्रहणेन दारित्य
ग्रहणापत्तिः, नचोक्तन्यायस्य शास्त्रे आश्रयणे फलाभाव इति
च्यम्, शेरत इत्यादौ "आत्मनेपदेष्वनत" इत्यनेन झघटकझका
स्यादादेशे तस्य च "शीङो रुट्" इत्यनेन रुडागमे आनु
निकस्थान्यादेशभावेनातशब्दस्य स्थानिवद्भावेन सार्वधातुक
ऽपि रुटस्तदुद्देश्यकत्वाभावेन तन्निष्ठसार्वधातुकत्वस्य यदा
मन्यायेनरतशब्दे आनेतुमशक्यतया "शीङस्सार्वधातुके गु
इत्येतत्प्रवृत्तये तदाश्रयणस्यावश्यकत्वात् आश्रयणे त्वत
ब्दावयवस्यातोऽवयवो रेफोऽतशब्दावयवस्तद्विशिष्टस्य रत

रुदस्य सार्वधातुकत्वेन गुणसिद्धिः, नच तेन न्यायेन समुदायावयवत्वेऽपि सिद्धान्ते यदागमन्यायाप्रवृत्त्याऽवयवावयवन्यायेनैव समुदायग्रहणग्राह्यत्वस्यापि वक्तव्यतया तथैव तेन न्यायेन प्रनिदारयतीत्यादावपि समुदायग्रहणग्राह्यत्वापत्तौ "समुद्दिश्य" इत्युक्तेऽपि दोषतादवस्थ्यमितिवाच्यम्, स्वावयवत्वविशिष्टावयवित्वनिरूपितावयवत्वविशिष्टः स्वावयवो भवति स्वग्रहणग्राह्यश्च भवतीत्यस्यैव न्यायार्थत्वात् वै० स्वसामानाधिकरण्यस्वोत्तरकालिकत्वोभयसम्बन्धेन प्रनिदारयतीत्यादौ चाऽऽनिष्ठे रेफनिरूपितावयवित्वे दानिरूपितावयवत्वोत्तरकालिकत्वाभावेन तत्र न्यायाप्रवृत्तेः अत एव द्युद्युलोष्टित्वं चरितार्थमन्यथा तुटष्टित्वादेव सायन्तनीत्यादावुक्तन्यायेन ङीपि सिद्धे तस्य वैयर्थ्यापत्तेरुक्तार्थे तु तकारानिष्ठे टकारावयवित्वे युनिरूपितावयवत्वोत्तरकालिकत्वायोगेन न्यायाप्रवृत्ते स्तदर्थं तस्यावश्यकत्वात् ननु, यदि न्यायाप्रवृत्तिस्तर्हि यन्निरूपितावयवत्वेत्याद्यर्थेऽपि दोषाभावेन ग्रन्थासङ्गतिः, किञ्च न्यायस्य न फलन्तथाहि शेरत इत्यस्य शीङोरदितिन्यासेन यथास्थितन्यासेन वा सिद्धिरदादेशोत्तरं हि शीङोरुडित्यस्य प्रवृत्त्याऽदादेशसमकाले च विरोधाभावाद् गुणस्य प्रवृत्त्या तदुत्तरं रुटि रूपसिद्धेः यद्यपि गुणापेक्षया रुटः प्रतिपदोक्तत्वं तथापि समकालप्राप्तावेव तस्य बलवत्त्वप्रयोजकतया न पूर्वं रुटः प्रवृत्त्याशा। यत्तु धातोरेव रुगागमे रविशिष्टस्ययदागमन्यायेनशीङ्त्वात्सार्वधातुकाव्यवहितपूर्वत्वाच्च गुणे रूपसिद्धिरिति तन्न, निर्दिश्यमानस्य रेफेण व्यवधानात्। यदपि प्रत्ययावयवे प्रत्ययत्वव्यवहार इत्यनेनादेशेऽपि सार्वधातुकत्वाद्यदागमन्यायेन सागमे सार्वधातुकत्वात् गुणसिद्धिरिति, तदपि न प्रत्ययत्वस्यातिदेशेपि तद्व्याप्यस्यानतिदेशादत एव राममित्या-

दौ मकारे सुप्तिङन्तातिदेशेन दीर्घो न ।  नापि "दधि च्छादय
स्यादौ ह्रस्वस्य छकारे परे तुकि तद्विशिष्टस्योक्तन्यायेन पद
ञ्चिद्भक्तिङिति निघातसिद्धिरिति फलम्, तस्मिन्निति परिभ
षा पूर्वस्येत्यस्योपस्थिते तद्विशेषणेन तदन्तविधौ ह्रस्वान्
च्छकारात् पूर्वस्य तुगित्यर्थेन विशिष्टस्यैव तुकि यदागमन्यायं
सिद्धेः । नच "अरमन्दधि च्छादयती" त्यादावुक्ता
त्वक्षमचलन्यायेन वाक्यस्य तुकि यदागमन्यायेनापि पदत्वा
वान्निघाताभावापत्त्याऽन्यथावश्यकत्वमिति वाच्यम् पदत्वा
पेक्षतुको बहिरङ्गत्वेनासिद्धत्वात्तदुपपत्तेः । नच सन्शम्भु
स्थिते नकारस्य तुकि तद्विशिष्टस्योक्तन्यायेन पदत्वात्च्छत्व
द्धिः फलमिति वाच्यम् नान्तस्य पदस्यैव तुकि यदागमन्यायं
सिद्धेः । एधिषीष्टेत्यपि न फलन्तथाहि तकारावयवस्य स
स्थानेन न्यायेन प्रत्ययावयवत्वात् षत्वमितिफलं वाच्य न
प्रत्ययावयवे तकारे प्रत्ययत्वव्यवहारेण तदवयवत्वात् सका
प्रत्ययावयवत्वोपपत्तेः । अत्रोच्यते दीव्यमान इत्यत्र स
ऽकारस्य नित्यत्वान्मुगागमे तास्यनुदात्तेदिति स्वरो न स्यान्
उपदिश्यमानाकारान्तत्वस्योपदिश्यमानाकारत्वस्य वा अ
वात् , यशब्दस्यागमित्वाभावादकारस्योपदिश्यमानत्वाभा
यदागमन्यायेन तस्याऽऽनयनासम्भवात् अवयवावयवन्या
त्वे तु यशब्दावयवस्याकारस्यावयवो मकारो यशब्दावय
ग्रहणग्राह्यश्चेति यम्शब्दस्याकारान्तोपदिश्यमानत्वेन स्वरो
सिद्धिरिति सुष्ठुतरमिदं फलमवयवावयवन्यायस्य,तथापि प्रति
रयतीति ग्रन्थासङ्गतिरस्त्येवेति चेच्छ्रूयताम् यमुद्दिश्य विहित
क रित्यस्य यन्पर्याप्तोद्देश्यतानिरूपितविधेयताश्रयस्तद्व
रित्यर्थः । प्रतिदारयतीत्यादावाकारवृत्त्युद्देश्यताया अपर्या
दावृत्तित्वेऽपि दापर्याप्तत्वाभावान्न तामादाय दाप इति

त्यस्य न घुत्वम् । आने मुक् (७.२.८२) इति मुग्विधानसामर्थ्यादेषाऽनित्या । अन्यथा पचमान इत्यादाव-

शय इति । वस्तुतस्तु अवयवावयवन्यायस्य न फलमपि तत्तदर्थमनेकविधकल्पना, स्वविशिष्टोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयः स्वग्रहणेन गृह्यत इत्येव परिभाषाया अर्थः । वैशिष्ट्यञ्च स्वपर्याप्तत्व, स्वावयवत्वविशिष्टत्वा,न्यतरसम्बन्धेन, द्वितीयवैशिष्ट्यं स्वसामानाधिकरण्यं, स्वोत्तरकालिकत्वोभयसम्बन्धेन, एवञ्चानयैव परिभाषया शेरते दीव्यमान इत्यादीनामपि सिद्धिस्तथाहि शेरत इत्यत्र स्वं अतशब्दस्तद्विशिष्टोद्देश्यता अन्निष्ठा, रुडागमनिरूपिता, यतस्तत्र, अतशब्दावयवत्वमच्छब्दे वर्त्तते तत्सामानाधिकरण्यमस्ति तदुत्तरकालिकत्वमप्यस्ति तन्निरूपितावयवत्वावच्छिन्नविधेयताश्रयो रुडिति तद्विशिष्टे सार्वधातुकत्वमुपपन्नमेवं दीव्यमान इत्यादावप्यूह्यम् । उत्तरकालिकत्वरूपद्वितीयसम्बन्धदानाद्धि प्रनिदारतीत्यादौ न दोषस्तत्राकारनिष्ठरेफीयोद्देश्यताया दावयवत्वोत्तरकालिकत्वविरहात् दारूपसम्पत्तेः प्रागेव प्रसङ्गावस्थायामेव रपरत्वविधानात् । अत एव द्युद्युलोष्टित्वं चरितार्थमेवञ्च "यमुद्दिश्यविहित इत्युक्ते रित्यस्य यद्विशिष्टोद्देश्यताघटितोक्तार्थस्वीकारादित्यर्थः । ननु दात्वं दकारोत्तरत्वविशिष्टमात्वमेवा,ऽऽरशब्दे च यदागमन्यायेनात्वं दकारोत्तरत्वञ्चास्त्येवेति दारशब्दे दात्वसिद्धौ घुत्वं दुर्वारं पूर्वोक्तयुक्त्या तस्याखण्डत्वेऽपि तत्परिचायकत्वेन दकारोत्तराकारत्वस्यैव ग्रहणौचित्येन तत्सत्वे तस्यासत्वे मानाभावादित्यत आह( आने मुगित्यादि ) तथाचानित्यत्वान्नारशब्दे आत्वमिति भावः ( मुग्विधानसामर्थ्यादिति) ननु सूत्रसत्वे वार्णपरिभाषया दीर्घं वाधित्वा मुमि"आतो ङित" इतिशास्त्रं तक्रन्यायेन वाधित्वा मुकि

यदागमन्यायेन दीर्घे पचान इति, सूत्राभावे आतो ङित इत्य
प्रवृत्त्या पचेन इति स्यादिति फलभेदात् कथं व्यर्थमिति चे
इयादेशबाधनमात्रस्य फलत्वे "आतो ङितो नानस्ये"ति न्या
करणेनैवेयादेशाप्रवृत्त्या मुग्विधानस्य वैयर्थ्यापत्तेरत एव
ग्विधानसामर्थ्यादित्येवोक्तम् । ननु सूत्रारम्भसामर्थ्यादि
क्तमिति बोध्यम् । निरवकाशत्वाल्लुको बाधकेऽमि, तद्वैयर्थ्य
यथा न लुक् ज्ञानमित्यादौ, तथा दीर्घो न भविष्यति मुकि
इति नाशङ्क्यं, मुको वैयर्थ्येन दीर्घबाधकल्पनापेक्षया परि
षाऽनित्यत्वकल्पनस्यैवौचित्यात् ननु मुग्विशिष्टे आमि (यदाग
न्यायेनाकत्वे ऽपि तत्सवर्णत्वमाकारे नास्ति अमुजनकस्था
स्यैवाभावेन तुल्यस्थानत्वाभावात् अवयवद्वारककण्ठस्थान
न्यत्वमादाय तुल्यत्वोपपादने ओष्ठस्थानजन्यत्वस्यापि सत्
यावत्स्थानसाम्याभावादिति चेन्न, अकत्ववत् कण्ठमात्रस्थान
न्यत्वाविवृतमात्रप्रयत्नजन्यत्वयोश्चाप्यतिदेशेनोपपत्तेः । नच
र्दिश्यमानस्यैवादेशेनामो निर्दिश्यमानत्वाभावान्नाऽत्र दीर्घ
वाच्यम्, अक इत्यस्य पञ्चम्यन्तत्वेन षष्ठ्यभावान्निर्दि
मानपरिभाषाया अप्रवृत्तेः । नच पूर्वपरयोरित्यस्य स्था
ष्ठ्यन्तत्वात् तत्पदीयनिर्दिश्यमानस्यैव ग्रहणेन दीर्घो
इतियुक्तम्, शास्त्रान्तरासहकारेणैव पूर्वपरपदजन्योपस्थि
विषयत्वेन अमुआ इति समुदायस्य निर्दिश्यमानत्वाक्षतेः । अ
अचः पूर्वत्वेन बुद्धिस्थो यः, अकः परत्वेन बुद्धिस्थो यस्त
न्मात्रारब्धसमुदायस्य पूर्वपरपदेन शास्त्रान्तरासहकारेणै
पस्थितत्वात् । यत्तु केनचिदुक्तमेकादेशविषये निर्दिश्य
नपरिभाषा न प्रवर्त्तते एकादेशशास्त्राणां वैयर्थ्य
था स्यात्, यतो निर्दिश्यमानावयवेतरस्य नादेश इति
श्यमानपरिभाषायाः पर्यवसिते अर्थे, एकादेशसूत्रस्था

तत्परस्थानिरूपनिर्दिश्यमानावयवेतरत्वमेवं पूर्वस्थानिरूपनिर्दिश्यमानावयवेतरत्वं परस्येत्युभयोरात्रेशाभावे तद्वैयर्थ्यं स्पष्टमेवेति, तदविचारितरमणीयमेव पूर्वपरयोरित्येकपदनिर्दिश्यमानत्वस्यैव समुदाये सत्वेन निर्दिश्यमानावयवेतरत्वाभावादुदासीनपदमादायेतरत्वोपपादने तु परिभाषाया निर्विषयत्वापात इति सुधीभिर्विभावनीयम्। नच मुकि, अकस्सवर्ण इत्यनेन सानुनासिक आकारो निरनुनासिकश्चा,ऽऽकारः,सानुनासिकोकारो निरनुनासिकश्चोकारः, औकार, इत्येते प्राप्तास्तेषां प्राप्यमाणानां मध्ये स्थानिनोऽन्तरतमः सानुनासिक ओकार एवादेशान्तरावृत्तित्वस्य कण्ठोष्ठस्थानिकत्वविशिष्टसानुनासिकत्वे एव सत्वेन तेन रूपेण तस्यैवान्तरतमत्वात्। मुकोभावे आकार इतिवैषम्यान्न ज्ञापकमितिवाच्यम्, नचोदानस्येत्येव तदर्थमस्तु आदेःपरस्येत्यनेनाकारस्योत्वे गुणे पचोन इतिसिद्धौ मुकोवैयर्थ्यं,तावताप्यनुनासिकत्वालाभात् अनुनासिकोकारविधानेन पररूपेण तदपि भविष्यतीति प्रत्याशा न कार्य्या,इत्संज्ञालोपयोरापत्तेः, नच लोप एव कर्त्तव्ये उकारोच्चारणसामर्थ्यान्न ताविति वाच्यमुगित्त्वेन ङीपः प्रवृत्त्या उच्चारणस्यावैयर्थ्यात्। नच टित्वादेव तत्सिद्धिः लाश्रयमनुबन्धकार्य्यंन्नादेशानामित्यस्य स्त्रीप्रत्ययप्रकरणे शेखरकृता खण्डितत्वादिति वाच्यम्, लादेशानात्मके शानानि यजमान इत्यत्र स्त्रीलिङ्गे ङीपः फलस्य सम्भवात्। तस्मान्नज्ञापकमिति वाच्यम् मुक आन्तरतम्यमात्रफलकत्वे पादमात्रिकमकारविधानेनापि तदुपपत्तावर्धमात्रिकमकारोच्चारणस्य ज्ञापकत्वसम्भवात्। सिद्धान्ते तु पादमात्रिकस्य तस्य श्रवणायोग्यत्वान्न तत्कृतमित्यलम्। ध्रुवःपञ्चानामितिनिर्देशोऽप्यत एवोपपद्यतेऽन्यथोक्तन्यायेन आमि अजादित्वातिदेशे पञ्चानित्यस्य भत्वे न-

कारस्य मुकि अनया परिभाषया विशिष्टस्य सवर्णे
कृते तद्वैयर्थ्यं स्पष्टमेव । तेन दिदीय इत्यादौ यण्
न, जहारेत्यादावात औ णल (७.१.३४) इति च
लोपानापत्तेः । यत्तु "न पदान्ताट्टोरनामितिसूत्रे अना
तिपर्य्युदासो ज्ञापकोऽन्यथा षण्णामित्यादावुक्तरीत्या पदत्
भावेन निषेधाप्रवृत्त्या तद्वैयर्थ्यं स्पष्टमेवेति तन्न, नमधातोः
ष्यनुनासिकस्येतिदीर्घे षट्नामिरस्थिते ष्टुत्वनिषेधाभावाय तत्
र्थक्यसम्भवात् । ( तेन दिदीये इत्यादीति ) युडागमविशि
ये शब्दे अजादित्वमुक्तन्यायेनादाय "एरनेकाच इति यणा
न्नत्यर्थः । नच यणोऽप्राप्तियोग्येऽचारितार्थ्येन कृते तस्मिन्
रितार्थ्येन च तन्न्यायेन युटो वाधकत्वात् सर्वेषामित्यत्र
डिव न यणिति वाच्यं दीङ्धातोर्घञर्थे के दिय इत्यादौ
णोऽप्राप्तिविषये युटश्चारितार्थ्यात् । नच तत्रापीयङ्प्राप्त्या
रितार्थ्येन, दीर्घेण यण्गुणयोरिवेयङ्यणोर्वाधेन ग्रन्थासं
रेवेति वाच्यमियङस्सकललक्ष्यप्राप्तत्वेन कुप्वो ≍क≍पौ चेत्
विसर्जनीयस्य स इत्यस्येवात्रापीयङ एव वाधन यणापत्ते
म्भवात्, शत्रुं द्याति शत्रुदा दीङ्धातोः क्विप्यात्वं शत्रुदा
शत्रुदात् तमाचष्टे णिचि क्विपि टिलोपणिलोपयोः शत्रुद्
आचारक्विबन्ताद्घञर्थे के युटि शत्रुद्य इत्यादावुभयोरप्राप्ति
चारितार्थ्याच्च । नच वुग्युटावुवङ्यणोरिति वार्तिकारम्भ
र्थ्यान्न यणिति वाच्यं शास्त्रबाधापेक्षया परिभाषाऽनित्यत्व
पनस्यैवौचित्यात् । (जहारेति) आ इत्यस्योक्तन्यायेनाऽऽत्वं
न्तत्वात्ततः परस्य णल औकारः स्यात् स नित्यत्वेन तन्निमि
नच सन्निपातपरिभाषया णलव्यवहितपूर्वत्वन्निमित्तीकृत्य
मानाद्वृद्धिः णलविनाशिका न स्यादिति वाच्यम् ओः औ

न चाकारादे र्वर्णस्य वर्णान्तरमवयवः कथमिति वाच्यम्। वचनेनावयवत्वबोधनात् । तस्य चावयवसादृश्ये पर्यवसानं बोध्यम् । न चोक्तज्ञापकाद्वर्णग्रहणेऽस्या अप्रवृत्तिरिति वाच्यम् । आने मुक् (७.२.८२) इति सूत्रे भाष्येऽकारस्या ङ्गावयवस्य मुगित्यर्थे पचमान इत्यत्र तास्यनुदात्तेत् (६.१.१८६) इति स्वरो न स्यादित्याशङ्क्याद्युपदेशभक्तस्तद्ग्रहणेन ग्राहीष्यत इत्युक्तेरसङ्गत्या-

इत्येतद्विषये सन्निपातपरिभाषाया अप्रवृत्तेः अत एव ममावित्यादावेज्विषयत्वनिमित्तकमात्वं निमित्तीकृत्याऽऽतं औ णल इति भवति। अत एव च भवेयुः भिन्द्युरित्यादावा गमसमभिव्याहारेप्यागमरहितस्यैवोसोग्रहणसिद्धिः पञ्चानामित्यादौ च नलोपासिद्धिः अनित्यत्वाभावे नामि यदागमन्यायेनाजादित्वेन भत्वात्श्नान स्यात् एतीतीत् तेनेतेत्यादौ घित्वाभावान्नादेशाभावश्च सिद्धः एवमयेर्धातोः क्विपि यलोपे तुकि भिसि अद्भिरित्यैतसन (नन्वाकारादेरित्यादि ) विषयितासम्बन्धावच्छिन्नव्यापकताश्रयत्वेसति विषयितासम्बन्धावच्छिन्नव्याप्यत्वाभाववत्वस्यैवावयवत्वरूपतया वर्णान्तरे वर्णान्तरनिरूपितस्य तस्याभावादिति भावः । (वचनेनेति) आद्यन्तौटकिताविंत्यादिनेत्यर्थः नच तावतोप्याशङ्काया अनिस्तारो नहि वह्निः शीत इति बोधनेपि तत्र तत्वम्भवति इत्यत आह (तस्य चेति) अवयवसादृश्यञ्चावयविग्रहणग्राह्यत्वेन बोध्यं तथाच तेनैव यदागमन्यायोलब्ध इति बोध्यम् ( वर्णग्रहणे अस्या अप्रवृत्तिरिति ) अननुगतानित्यत्वज्ञापनापेक्षयाऽनुगतस्थलेऽप्रवृत्तिज्ञापने लाघव मिति भावः । वर्णत्वव्याप्यधर्मघटितधर्मानयन इत्यर्थः। (अदुपदेशभक्त इति) उप-

पत्तेः। किञ्च ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो
मुडित्यर्थे कुर्वन्नास्त इत्यादौ ङमो ङमुडागमे णत्व
सिमाशङ्क्य यदागमा इति न्यायेनाद्यन्तस्यापि पदान्त
रूपेन ग्रहणात्पदान्तस्य (८.४.३७) इति निषेध इति
-दिश्यमानाकारस्यावयवश्च इत्यर्थः। दीव्यमान इत्यर्थ मकारान्
पदिश्यमानादित्यर्थस्तास्यनुदात्तेदित्यादेस्तदन्तविधिनः कार्य
उपदिश्यमानाकारान्तत्वञ्च मकारसहिते अमि यदागमन्या
नानीय स्वरस्साधितस्सोऽसङ्गतस्स्यादकारान्तोपदिश्यमान
स्य वर्णत्वव्याप्यधर्म्मघटितत्वादिति भावः। यत्तु केनचि
यथाऽधोगित्यत्रादुहित्यस्यौपदेशिकदादित्वन्तथा पचमान इ
त्राप्यमित्यस्यौपदेशिकमदन्तोपदिश्यमानत्वं स्वत एवास्ति
एव तत्र परिभाषोपन्यासो न कृतो भाष्य इत्युक्तभाष्यासङ्गति
रित्युक्तन्तदविचारितरमणीयम् तथाहि अधोगित्यत्रादुहित्यादि
यदागमन्यायेन दुहधातुत्वातिदेशे अदुहित्यस्य दुहित्यस्य चैक
बुद्धौ दुहित्यस्य अ उपदेशस्सोऽदुहित्यस्यापीति तदुपदेश
तस्य चेद्दादित्वन्तर्हि तदभिन्नस्यादुहित्यस्यौपदेशिकदादि
मस्तीत्यविवादमेव पचमान इत्यत्र तु वर्णग्रहणेऽप्रवृत्तावमे
बुद्धयभावेन अ अम अनयोर्भेदादकारस्य य उपदेशस्स
अमित्यस्येत्यकारस्यौपदेशिकादन्तत्वे प्रकामित्यस्य तत्वोपपा
नस्याशक्यसम्भवत्वादिति विभावनीयम् नच वर्णत्वव्याप्यध
स्यातिदेशोनेत्येव ज्ञाप्यत इति नोक्तभाष्यविरोध इतिवा
दिदीय इत्यादावजादित्वस्यातिदेशापत्तेः। (आद्यन्तस्य
पदान्तग्रहणेन ग्रहणादिति) नकारविशेषणस्य पदा
स्य वर्णत्वेन वर्णग्रहणे अप्रवृत्तावत्राप्यप्रवृत्त्या भाष्यारा
रिति भावः। वस्तुतो नेदं युक्तं वर्णत्वव्याप्यस्य तद्घटि

अनयाच परिभाषयाऽऽगमानामागमिधर्मवैशिष्ट्यमपिबोध्यत इत्याशयक ङमुट्सूत्र [८.३.३२] स्थभाष्यासङ्ग-

वा नातिदेश इति हि तस्यार्थः। पदान्तत्वस्य स्वघटकत्व,स्वघटकवर्णप्रागभावाधिकरणक्षणावृत्तित्वोभयसम्बन्धेन पदविशिष्टत्वरूपस्य वर्णसमुदायेऽपि सत्वेन वर्णत्वव्याप्यत्वाभावेनातिदेशे बाधकाभावात्। (आगमानामागमिधर्मवैशिष्ट्यमपीति) इदमपि न युक्तं फलाभावात् रामाणामित्यादावावृत्तिपदान्तत्वस्य नकारेऽतिदेशेन पदान्तस्येति निषेधापत्या णत्वानापत्तेश्च। प्रकृते आगमविशिष्टे एव नकारद्वयात्मकसमुदाये पदान्तत्वातिदेशेन वर्णग्रहणे जातिग्रहणमित्यनेन नकारद्वयस्यापि नग्रहणेन ग्रहणेन निषेधोपपत्तेश्च पदान्तस्य नद्वयात्मकनकारस्य पर्य्याप्त्याऽपर्य्याप्त्या वा णत्वाभावो निषेधेन बोध्यत इति भावः। सजातीयानेकवर्णघटितसमुदायेऽपि तज्जातेरारोप इति वर्णग्रहणे जातिग्रहणमित्यस्यार्थः। केचित्तु पदान्तस्येत्यवयवषष्ठी ततश्च पदान्तावयवस्य नस्येत्यर्थेनाद्यस्य स्वतोन्त्यस्य व्यपदेशिवद्भावेन परिभाषाभिन्नेनैवनिषेध इति वदन्ति तन्न, रामेणेत्यादावपि नेतिसमुदायस्य पदान्तत्वेन तदवयवस्यापि नस्य णत्वानापत्तेः। यत्तु पदविशिष्टस्य नस्य णत्वन्नेत्यर्थः वै० स्वघटकत्व स्वघटकनकारेतरवर्णप्रागभावाधिकरणक्षणावृत्तित्वोभयसम्बधेनेति विनैव परिभाषां निषेधसिद्धिरुभयोरिति तदसमय्यँसं शब्दमर्य्यादयोक्तार्थालाभात्। यदपि केनचित् नस्येत्यत्रावयवषष्ठीमाश्रित्य पदान्तनकारावयवस्य णत्वन्नेत्यर्थेन निषेध इत्युक्तं तदप्यविचारितरमणीयमेव अवयवस्य स्थानित्वबोधकषष्ठ्यन्तराभावात् रषाभ्यामित्यनुवर्त्य पञ्चम्योपस्थापितस्योत्तरस्येत्यस्य विशेष्यत्वेन पदान्तनकारावयवत्वविशिष्टस्य रषाभ्यामुत्त-

ते: । किञ्च गुणादेरपरत्वे रेफविशिष्टे गुणत्वाद्येष्टव्य
अन्यथकारस्य गुणवृद्धौ अरारावेवेति नियमो न स्या
तच्च वर्णग्रहण एतदप्रवृत्तौ न सङ्गच्छते । अत
रदाभ्याम् [८.२.४२] इति सूत्रे भाष्ये" गुणो भ
रस्येत्यर्थेनोत्तरपदोत्तरषष्ठ्या स्थानित्वार्थकत्वमित्यवश्यव
न्तु न युक्तं रषाभ्यामित्यनुवृत्तेः फलाभावात् अस्तु र । यथा
थञ्चित् ( गुणादेरपरत्वे रेफविशिष्टे गुणत्वाद्यष्टव्यमिति )
भावः कर्त्रेत्यादौ ऋकारस्य त्रयो गुणपदबोध्याः प्रसक्ता
त्राकारस्य प्रसङ्गावस्थायामेव रपरत्वेनारिति प्रसक्तसंपन्न
यदागमन्यायेनाकारवृत्तिगुणत्वस्यातिदेशेन मूर्द्धस्थानिक
घटितत्वेन च स्थानेन्तरतम इत्येतत्सहकारेण सार्वधातुका
धातुकयोरित्यस्यान्तरतमो गुणो भवतीत्यर्थसत्त्वेनारेव ऋका
भवति, वर्णत्वव्याप्यधर्म्मानतिदेशे गुणत्वस्यातिदेशाभावे
रित्यस्य गुणत्वाभावादकारस्य तत्वेप्यन्तरतमत्वाभावादि
मनात्रिरहेण त्रयाणां पर्यायापत्तिरिति । वस्तुतो नायं
रेफविशिष्टे गुणत्वाभावेप्यकारस्य उरण्रपर इत्यनेनरेफाव
कत्वबोधनेन ऋकारस्य मूर्द्धस्थानिकावयवकत्वेनान्तरत
कार एव भविष्यति स चभवन् अर एव सम्पन्नो भविष्यति
नच तावतापि ऋकारस्य गुणवृद्धी अरारावेवेति सामान्यापि
रण्यानुपपत्ति,रिष्टत्वात् तस्य भाष्यप्रयोगत्वाभावात् ऋकार
स्त्र गुणवृद्धी भवतस्तत्रारारावेव संपद्येत इति तस्य व्याख्या
नाच,ऋकारस्याप्यादेशकोटावन्तरतमो नास्त्यकारस्यापि स्था
निकोटावन्तरतमो नास्तीत्यन्तरतमाभाववत्वेनाकारस्यैव ऋका
रान्तरतमत्वाच्च तदुक्तमनान्तर्यमेवैतयोराभ्यन्तर्यमिति ( रेफ
गुणवृद्धिसंज्ञकोऽभिनिर्वर्त्तत इति )रेफः शिरः परावृत्तौ यः

वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तेत इति" ॥ अत एव नेटि [७.२४] णेरनिटि (६.४.५१]

रित्यादेः स गुणादिसंज्ञक इत्यर्थः अत्वस्य गुणसंज्ञकत्वस्य वाऽरित्यत्रातिदेशाभावे तस्य गुणसंज्ञकत्वानुपपत्तिरिति भावः। वस्तुत इदमपि भाष्यमेव विरुणद्धि गुणवृद्धिसंज्ञकोऽक्षरादिः, रेफशिरा अभिनिर्वर्त्तेत इत्यर्थात् रेफशिरा इत्यत्र चातद्गुणसम्विज्ञानं। तथाचाद्यदूषणमेव सम्यगिति तत्त्वम्। उपदिश्यमानाकारान्तात्परत्वस्योपलक्षणत्वे तु तत्रापि न दोष इति विभावनीयम्। यत्तु लुलविथेत्यादौ अवादेशावयवाकारस्य गुणशब्दप्रयोज्यविधेयताश्रयत्वरूपस्य गुणशब्दभावितत्वस्याभावेन "नससददेतिनिषेधाप्राप्तिस्तदर्थं स्थानिवद्भावेन गुणशब्दभावितत्वमवादेशे ध्यानेयं तस्य चाल्मात्रवृत्तित्वात् स नस्यात् अरशब्दे गुणत्वातिदेशे तु तस्यापि गुणशब्दभावितत्वेन तस्य अल्मात्रवृत्तित्वन्न भवतीति स्थानिवद्भावेन निषेधः सिद्ध्यतीति वर्णग्रहणे प्रवृत्तिरावश्यकीति तन्न, अल्मात्रवृत्तित्वाभावेप्यशास्त्रीयत्वेन गुणशब्दभावितत्वस्यातिदेशासम्भवेन दोषस्य प्रकारान्तरेणैव वारणीयत्वात्,तथासति सूत्रस्थगुणपदे तवापिलक्षणयैवोक्तार्थस्य लाभेन गुणविधायकशास्त्रव्यापाराधीनलब्धसत्ताकत्वरूपेण गुणशब्दविधेय,तत्स्थानिकावादेशोभयसाधारणेन,गुणशब्दभावितत्वधर्मेणावच्छिन्ने, स्वाश्रयत्वस्वाश्रयस्थानिकत्वान्यतरसम्बन्धेन गुणशब्दप्रयोज्यविधेयताविशिष्टत्वरूपगुणशब्दभावितत्वधर्म्मावच्छिन्ने वा लक्षणया अतिदेशानपेक्षणादित्यलम्। लोकन्यायसिद्धाया अप्यस्याः शास्त्रे आश्रयणे मानमाह (अत एव नेटीत्यादि )यदागमपरिभाषायाः शास्त्रे आश्रयणादेवेत्यर्थः। मा भ-

इत्यादि चरितार्थम् ॥ अनागमकानां सागमका आ
इत्यस्य त्वयमर्थः । आर्धधातुकस्येडागम इत्यर्थे ज्ञाते
त्वेषु शब्देष्वागमविधानानुपपत्त्याऽर्थापत्तिमूलकवा
न्तरकल्पनेनेड्रहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्त्तव्येति
च्चादेशेष्विवात्रापि बुद्धिविपरिणाम इति न निस

धान तीदित्यादौ यदागमन्यायाभावे इड्विशिष्टे सिचत्वाभ
टा व्यवधानेन वृद्ध्यप्राप्तौ "नेटी"त्यस्य वैयर्थ्यात् एवमेव णेर
त्ययानिटीत्यस्यापि वैयर्थ्यं बोध्यम् । ननु प्रणिदापयतीत्यादि
घुत्विदात्वस्य दाप्शब्दे स्थानिवत्सूत्रेणातिदेश एव अनागम
सागमका आदेशा इति स्थान्यादेशभावकल्पनायाः फल
च यदागमपरिभाषयैव लाभेन, भाष्ये दृश्यमानस्य "अनाग
नां सागमका आदेशा इत्यस्य किं प्रयोजनमित्यत आह (
गमकानां सागमका आदेशा इत्यस्य त्वयमर्थ इति ) इदं
मान्यं प्रयोजनमित्यर्थः । ( अर्थापत्तीति ) अर्थस्योपपाद
पत्तिः कल्पनं यया सा, अनुपपत्तिरूपा अर्थापत्तिः प्र
माणं वेदान्तिसम्मतमित्यर्थः । प्रकृते नित्ये शब्दे उपचया
रूपविकाररहिते, आगमरूपोपचयस्यासम्भवेन आगमवि
नुपपत्त्या इड्रहितस्य वलादेरार्द्धधातुकस्य सेट् इतिवाक्य
कल्प्यते, तेन च मृजेर्वृद्धिरित्यादिना मृजिप्रसङ्गे मा
इड्रहितस्य तव्येत्यस्य स्थाने इत्यन्य
क्रियते तथाच नोत्पत्तिनिवृत्ती, अपितु तद्बुद्धि
आदेशस्थलवदागमस्थलेऽपि न नित्यत्वहानिरिति
म् । ननु आगमस्थलेऽपि अनित्यत्ववारणायाव
णीये स्थान्यादेशभावे स्थानिवत्सूत्रेणैव निर्वाहाद् यदाग

निः । स्थानिवत्सूत्रे च नेहशादेशग्रहणं साक्षादष्टा-
ध्यायीबोधितस्थान्यादेशभावे चारितार्थ्यात् । किञ्चैवं
सति स्थानिवुद्ध्यैव कार्यप्रवृत्त्या निर्दिश्यमानस्य [प०
१२) इति परिभाषाया अप्राप्त्याऽडागमसहितस्य पिवा-
द्यादेशापत्तौ लावस्थायामडिति भाष्योक्तसिद्धान्तासङ्ग-
तिः । स्थानिवद्भावविषये निर्दिश्यमानस्येति परिभाषा-
याः प्रवृत्तौ तिसृणामित्यत्र परत्वात्तिस्रादेशे स्थानिव-
द्भावेन त्रयादेशमाशङ्क्य सकृद्गतिन्यायेन समाधान-
भाषामास्तित्वत्यत आह (स्थानिवादिति)(साक्षादिति) अष्टाध्या-
यीस्थशास्त्रघटकषष्ठीप्रतिपाद्य इत्यर्थः । अयन्तु स्थान्यादेशभा-
वो न तथा ऽपि तु अष्टाध्यायीस्थशास्त्रकल्पितशास्त्रघटकषष्ठीप्र-
तिपाद्य इति बोध्यम् । ननु नेटि णेरनिटीति ज्ञापकेनोभयवि-
धस्थान्यादेशभावयोःस्थानिवत्सूत्रे एव ग्रहणमस्तु मास्तु परि-
भाषेत्यत आह (किञ्चेति)स्थानिवद्भावविषयेऽपि निर्दिश्यमान-
परिभाषाप्रवृत्तौ दूषणमाह ( स्थानिवादित्यादिना ) ( भाष्या-
सङ्गतिरिति ) स्थानिवद्भावेन तिस्रादेशे त्रिशब्दत्वबुद्धावपि अ-
पिवादित्यत्रैव निर्दिश्यमानत्वाभावादादेशाप्रवृत्तेरिति भावः ।
ननु भवत्वित्यादाविकारोकारयोः "एरुरितिशास्त्रस्थषष्ठीप्रति-
पाद्यस्थान्यादेशभावेपि इकारे तिङ्त्वाभावात्तिशब्दस्याऽऽनुम्प-
निकस्याऽस्तित्वेऽपि तस्य स्थानिवत्सूत्रेऽग्रहणेन तिङ्त्वस्याक्तपरि-
माणनिष्ठत्वेनैकदेशविकृतन्यायाप्रवृत्तेश्च तिङ्त्वाभावात्पदत्वाना-
पत्तिरित्यत आह ( एरुरित्यादि ) आर्द्धधातुकस्येड्वला-
देरित्यत्र षष्ठ्या अवयवत्वार्थकतया तत्सूत्रकल्पितवाक्यान्त-
रस्यैव षष्ठी स्थानित्वार्थिका, अत्र तु अष्टाध्यायीस्थसूत्रघटकष-

परभाष्यासङ्गतिः । एरुः (३.४.८६) इत्यादौ स्थान
ष्ठीर्निर्देशात्तदन्तपरतया पठितवाक्यस्यैव समुदाया
परत्वेनादेशग्रहणसामर्थ्यात्तस्य स्थानिवत्सूत्रे ग्रहणे
दोषः । आनुमानिकस्थान्यादेशभावकल्पनेऽपि श्रौ
स्थान्यादेशभावस्य न त्याग इति अचःपरस्मिन्(१.१.५
इत्यादेर्नासङ्गतिः । एतेन यड़ागमा इति परिभाषा

ष्ठ्येव स्थानित्वबोधिका केवलमिकारादिपदस्यैव तदन्ते
णया समुदायस्य स्थान्यादेशभावलाभादस्य स्थानि
ग्रहणम्भवतीति भावः । ननु स्थानिवत्सूत्रस्य प्रथमोपस्थि
श्रौतस्थान्यादेशभावमादाय रामायेत्यादौ चारितार्थ्येन
णादिलब्धसमुदायस्थान्यादेशभावग्रहणे मानाभाव इत्यत
(आदेशग्रहणसामर्थ्यादिति) अयम्भावः पितुर्दद्यीत इत्य
पितृपदार्थस्य असम्बन्धिकत्वात् पुत्रस्येव स्थानिवदित्येत
त्रोक्तावपिआदेशःस्थानिवदित्यर्थलाभादादेशग्रहणमादेशभा
हणार्थन्तेनानुमानिकस्यापि साक्षादष्टाध्यायीबोधितस्य ग्र
नतु अर्थापत्तिमूलकवाक्यान्तरबोधितस्य तस्य विलम्बोपस्थि
तिकत्वादप्रधानत्वाच्चेति । नचानुमानिकस्थान्यादेशभाव
अजमात्रस्थानिकादेशस्याभावापत्त्या अचः परस्मिन्नित्य
स्मित्यत आह (आनुमानिकेत्यादि )इकस्थाने यण्साधु
इदन्न युक्तं किन्तु इग्घटितस्य यण्घटितस्साधुरित्येवं
प्रक्रियानिर्वाहाय शास्त्राणामर्थकल्पनादिति भावः। (एतेन)
मस्थलीयस्थान्यादेशभावस्य स्थानिवत्सूत्रे ग्रहीतुमशक्यत्वे
र्थः।(अपास्तमिति)अत्रोच्यते न वयं स्थानिवत्सूत्रविषये
न प्रवर्त्तते न प्रवर्त्तते वा निर्दिश्यमानपरिभाषेत्यभ्युपग

निवत्सूत्रेण गतार्थेत्यपास्तम् एतत्सर्वं दाधाध्वदाप् (१.१.२०) इति सूत्रे भाष्ये स्पष्टम् ॥ २१ ॥

योऽपि तु यस्य निर्दिश्यमानत्वं तस्यादेशो भविष्यति यस्य न तस्यादेशो नेत्येव कल्प्यते यदागमपरिभाषा च न मन्यते स्थानिवत्सूत्रे च सर्वेषामादेशानां ग्रहणं क्रियते, निर्दिश्यमानत्वञ्च षष्ठीप्रकृतिविशिष्टत्वं वै० स्वजन्योपस्थितिविषयत्वस्वजन्योपस्थितिविषयसमभिव्याहृतवर्णाघटितत्वोभयसम्बन्धेन अपिबदित्यत्र न दोषस्तत्र "पाघ्राध्मेतिसूत्रस्थषष्ठीप्रकृतिपाविशिष्टत्वं पाशब्दस्यैवेति तस्यैव पिबादेशः, स्वजन्योपस्थितीयाविषयताश्रयत्वमस्ति पाशब्दस्य, स्वजन्योपस्थितीयविषयताश्रयः पा, तत्समभिव्याहृतोऽकारस्तद्घटितत्वमपाशब्दस्याघटितत्वं तस्येति समन्वयः। तिसृणामित्यत्र च षष्ठीप्रकृतिः "त्रेस्त्रय इति सूत्रस्था त्रिशब्दः तज्जन्योपस्थितिविषयताश्रयत्वं तिसृशब्दस्य तत्समभिव्याहृत उदासीनस्तदघटितत्वमपि तिसृशब्दस्यैवेति प्राप्तस्त्रयादेशः सकृद्गतिन्यायेन वारितो भाष्य इति सर्वं समञ्जसं नन्वेवं देवीमञ्चति देवद्र्यङित्यत्र "विष्वग्देवयोश्चटेरित्यनेन देवीशब्दावयवटेरद्र्यादेशो न स्यादवयवषष्ठीविषयेऽप्यस्याः प्रवृत्तेर्देवपदीयनिर्दिश्यमानावयवटेरेवाञ्चतौ परे अद्र्यादेशेन देवीशब्दस्य निर्दिश्यमानत्वाभावात्। यद्यपि लिङ्गविशिष्टपरिभाषया देवग्रहणेन देवीशब्दस्यापिग्रहणात् षष्ठीप्रकृतिर्देवशब्दस्तज्जन्योपस्थितीयाविषयताश्रयत्वं देवीशब्दस्य, परं स्वजन्योपस्थितीयविषयताश्रयो देवशब्दस्तत्समभिव्याहृत ईकारस्तद्घटितत्वस्यैव सत्वात्, वर्णे स्त्रीप्रत्ययेतरत्वानिवेशे तु प्रकृते दोषाभावेऽपि अस्य स्त्री ई तस्या जरसौईजरसावित्यत्रापि समुदायस्य निर्दिश्यमानत्वापत्तिर्दुर्वारा स्वजन्योपस्थितीयविषय-

त्वाश्रयसमभिव्याहृतस्त्रीप्रत्ययेतरवर्णाघटितत्वादितिचेन्न द्वितीय सम्बन्धस्थाने स्वजन्योपस्थितीयविषयताश्रयविशिष्टवर्णाघटितत्वस्य निवेशनीयत्वात् वै स्वसमभिव्याहृतत्व स्वप्रकृतिक स्त्रीप्रत्ययेतरत्वोभयसम्बन्धेन देवीत्यत्र स्वजन्योपस्थितीयविषयताश्रयो देवस्तद्विशिष्टत्वमिकारस्य नास्ति स्वसमभिव्याहृतत्वेपि स्वप्रकृतिकस्त्रीप्रत्ययेतरत्वाभावात् ईजरसावित्यत्र ईकारस्य तद्विशिष्टत्वेन न दोषः । नन्वेवमपि जराया जरा जराजरे जराजरसावित्यत्रोपस्थितीयविषयताश्रयः पूर्वोजराशब्दस्तद्विशिष्ट उत्तरजराजकारस्तद्घटितत्वादुत्तरस्य निर्दिश्यमानत्वाभावः नच द्वितीयसम्बन्धस्थाने स्वजन्योपस्थितीयविषयताश्रयावधिकपूर्ववर्णाघटितत्वसम्बन्धस्य निवेशादुत्तरस्य निर्दिश्यमानत्वमक्षतमिति वाच्यं त्रिशब्दादाचारक्विबन्तात् कर्त्तरि क्विपि त्रीः आमि त्रिनामित्यादौ उपस्थितीयविषयताश्रयस्त्रिशब्दस्तदवधिकपूर्वो वर्ण उदासीनस्तद्घटितत्वं त्रिदित्यस्येति तस्य निर्दिश्यमानत्वेन त्रयादेशापत्तेः । अथ स्वजन्योपस्थितीयविषयताश्रयत्वं स्वजन्योपस्थितीयविषयताश्रयाविशिष्टवर्णाघटितत्वोभयसम्बन्धेन षष्ठीप्रकृतिविशिष्टत्वन्तत्वं वै॰ स्वावधिकपूर्वत्व स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वैतदन्यतरसम्बन्धेन जराजरसौ निर्जरसावित्यादौ समुदायस्य न्यग्रपातपद इत्यादौ पूर्वपाच्छब्दस्य च तत्वाभावाय पूर्वत्वनिवेशः त्रिताभित्यादौ तदभावायोद्देश्यताघटितो द्वितीय इति सम्प्रदातम् । नन्वेवमपि प्रातिषिश्वतीत्यादौ नुम्विशिष्टस्य तन्मध्यपातितन्यायेन सिच्त्वेपि सिच्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयो नुम् तद्घटितत्वेन निर्दिश्यमानत्वाभावात् षत्वानापत्तिरितिचेन्नान्यतरसम्बन्धघटकद्वितीयसम्बन्धस्थाने स्वसमभिव्याहृतत्वस्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छि

आविधेयताश्रयत्वैतदुभयसम्बन्धेन स्वविशिष्टत्वंस्य निवेशनीय-त्वात् नुमः सिच्समभिव्याहृतत्वविरहात् पूर्वपरयोरेव समभि-व्याहृतपदार्थत्वादितिचेन्नैवम् यतो व्याघ्रपदः सुपद इति समुदाये उपस्थितीयविषयताश्रयपरपाच्छब्दावाधिकपूर्ववर्णघटितत्वेन पूर्व-स्य पदादेशाभावापत्याऽव्यवहितपूर्वत्वं सम्बन्धघटकं वक्तव्यन्त-थाचास्नात्वाकालकं स्नात्वाकालकं कृत्वा स्नात्वाकालकीकृत्ये-त्यत्र मयूरव्यंसकादित्वात्स्नात्वाकालक इत्यत्र समासः पश्चाच्-च्व्यन्तस्य गतित्वात् कुगतिप्रादय इतिसमासे पूर्वक्त्वाप्रत्ययस्यापि "समासेनञ्पूर्वेत्यत्रत्यषष्ठीप्रकृतिक्त्वाविशिष्टत्वान्निर्दिश्यमान-त्वेन ल्यबादेशापत्तिर्यतः स्वजन्योपस्थितीयविषयताश्रयत्वम-प्यस्ति स्वजन्योपस्थितीयविषयताश्रयः परस्तदव्यवहितपूर्ववर्णा-घटितत्वेन तद्विशिष्टवर्णाघटितत्वञ्चास्ति, ननु स्नात्वाकालकइ-त्यादौ ल्यपोऽभावाय स्नात्वाकालकादीनां प्रतिषेधो वक्तव्य इत्यनेन भाष्यवार्त्तिकेनैवात्रापि वारणं समासान्तरघटकत्वेऽपि स्नात्वाकालकत्वाविशेषादितिचेन्न वार्त्तिकप्रत्याख्यानायानञ्पू-र्वपदकस्य क्त्वान्तसमासस्य ल्यबित्यर्थस्य भाष्यकृताश्रयणादत एव स्नात्वाकालकादीनां प्रतिषेधो वक्तव्य इत्युक्त्वा तदन्तनिर्दे-शात्सिद्धमित्युक्तम् तथाच प्रत्याख्यानपक्षे पूर्वक्त्वाप्रत्ययस्यापि ल्यबापत्तिः क्त्वान्तसमासावयवक्त्वापदीयनिर्दिश्यमानस्य ल्य-बित्यर्थात् अत्रोच्यते आरम्भप्रत्याख्यानयोः फलभेदेनानभि-धानमेवास्य किञ्च मयूरव्यंसकादौ समासार्थं स्नात्वाकालक इतिनिपातनमवश्यं कर्तव्यं तेनैव ल्यबभावोऽपि भविष्यतियत्तु स्नात्वाकालकेतिसमासप्रयोज्यस्यैव ल्यपोऽभावो निपातना-द्भविष्यति न स्नात्वाकालकीकृत्येतिसमासप्रयोज्यस्यापीति तन्न तादृशविशेषाश्रयणाभावेऽपि बाधकाभावात् अत एव युधिष्ठिर-पुत्र इत्यत्र सप्तम्या विशिष्टसमासप्रयोज्योऽपि हलदन्तात्सप्तम्या

इति न लुक् अनञ् इतिपर्युदासादव्ययपूर्वपदात्त
क्त्वो ल्यबित्यर्थाद्वा ल्यबभावः तदुक्तं भाष्ये सम
निपातनाद्वा अवश्यमत्र समासार्थं निपातनं कर्त्तव्यं ते
यत्नेन ल्यबपि न भविष्यति अनञो वा परस्य अ
अनञः परस्य ल्यपा भवितव्यमित्यादि। यत्तु मयूरव्यंसका
श्चेतिचकारेणैतद्विहितसमाससंज्ञकानां समासान्तरे न भवे
ऽत एव परमाश्च ते मयूरव्यंसका इति वाक्यमेवेति ज्ञात्वा
लुक्घटितसमासस्यासाधुत्वान्नैतत्प्रयोग इति तन्न सजा
कर्मधारय एव तेनाप्रवेशबोधनात् अत एव प्रत्ययमात्रा
इत्यादिग्रन्थकृत्प्रयोग उपपद्यते । किञ्चान्त्यबाधेऽन्त्यसदेशस
परिभाषयापि पूर्वस्य क्त्वो ल्यबभावः नच प्रकृते नान्त्यस
थो न वान्त्यसदेशस्याऽऽकारविनिर्मुक्तस्य क्त्वितिसमुदाय
प्राप्तिरिति वाच्यम् अन्त्यपदेन वर्णस्यैव विवक्षितत्वात् तथा
न्त्यवर्णपर्याप्तोद्देश्यताककार्यप्रयोजके शास्त्रे अन्त्यसदेश
स्यस्योपस्थितिरितिपरिभाषार्थः अन्त्यसदेशस्येत्यस्य नार्थ
निर्दिश्यमानविशेषणत्वमपि तु आदेशे एवैकत्र द्वयमितिरीत्या
यः । तथाचानञ्पूर्वपदकस्य क्त्वान्तस्य समासस्यान्त्यवो
क्त्वापदीयनिर्दिश्यमानस्तत्स्थानिकत्वविशिष्टस्सन् अन्त्य
शस्थानिको ल्यबितिबोधः अन्त्यसदेशस्य स्थानिताचापर्या
तथाच तथा ल्यप् भविष्यति यथा निर्दिश्यमानान्त्यसदेशा
स्थाने स्यात् सचान्त्यक्त्वाप्रत्ययस्य ल्यबादेशे एवेति न।
स्यादेशः किञ्च षष्ठीप्रकृतिविशिष्टत्वं तत्वं तत्र वैशिष्ट्यञ्च
प्रकाद्वितीयसम्बन्धस्थाने स्वप्रयोज्यशाब्दबोधीयविषयताव
ष्टवर्णाघटितत्वं निवेशनीयं वैशिष्ट्यञ्च वर्णे स्वानाश्रयत्व
श्रयसमभिव्याहृतत्वोभयसम्बन्धेन . स्नात्वाकालकीकृत्यं
क्त्वान्तसमासस्य ल्यबित्यर्थे क्त्वापदीयशाब्दबोधीयविष

थास्समासान्ते क्त्वाशब्दे एव सत्वेन तद्घनाश्रयत्वस्य, तदाश्रय-समभिव्याहृतत्वस्य च पूर्वक्त्वाप्रत्ययघटकवर्णे सत्वेन तद्घ-टितत्वस्यैव पूर्वस्मिन् सत्वेन, न पूर्वस्थे निर्दिश्यमानत्वं, व्या-घ्रपदः सुपद इत्यत्र "पादः पदिति सूत्रघटकपाच्छब्दप्रयोज्य-शाब्दबोधीयविषयताया एकस्या एवोभयत्र सत्वेन स्वानश्रय-त्वस्य पाच्छब्दावयवे अभावेनोभयत्र निर्दिश्यमानत्वोपपत्ति-रवच्छेदकभेदेनैव विषयताया भेदात् । अत एव सजुषस्स-जुषौ सजूस्सजुषौ ताभ्यां सजूस्सजूभ्यामित्यत्रोभयत्र निर्दि-श्यमानत्वासिद्धिः "ससजुषोरुरित्यस्य सजूश्शब्दान्तपदस्य रु-रित्यर्थेन पदनिष्ठविशेष्यतानिरूपितायास्सजूश्शब्दत्वावच्छि-न्नायाः शाब्दीयविषयताया एकस्या एवोभयत्र सत्वादवच्छेद-कस्योभयत्रैकस्यैव सत्वेन विषयताभेदे मानाभावात् । नचा-पिबादित्यादावर्थवत्त्वावच्छिन्नविषयतया संकुचितायाः पात्वा-वच्छिन्नविषयताया आगमविशिष्टे एव सत्वं न तु तद्रहिते तस्या-नर्थकत्वात्, ततश्च शाब्दबोधीयविषयताविशिष्टोऽकारो न भविष्यतीति तादृशविषयताविशिष्टवर्णाघटितत्वेन उपस्थिती-यविषयताश्रयत्वेन च विशिष्टस्यापि निर्दिश्यमानत्वापत्तिरेव-मागमस्थले सर्वत्र बोध्यमिति वाच्यं स्वजन्योपस्थितीयविष-यताश्रयनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयाघ-टितत्वरूपतृतीयसम्बन्धस्यापि स्वतन्त्रस्य निवेशनादोषात् न वा प्रातिषिञ्चतीत्यत्र तादृशविधेयताश्रयनुमघटितत्वेन दोषा-वसरः, तादृशोपस्थितीयविषयताश्रयविशिष्टवर्णाघटितत्वस्य विव-क्षितत्वात्, वै०स्वसमभिव्याहृतत्व स्वनिष्ठोद्देश्यतानिरूपितावय-वत्वावच्छिन्नाविधेयताश्रयत्वोभयसम्बन्धेन नुमस्समभिव्याहृत-त्वाभावात्, एवञ्च यदागमपरिभाषा निष्फलेति विभावयन्तु सु-धियः । परेतु पचमान इत्यादौ तास्यनुदात्तेदिति स्वरार्थं, ऋकार

स्य गुणवृद्धी अरारावेवेति नियमार्थश्च, परिभाषावश्यक
अकारान्तोपदिश्यमानत्वस्य गुणत्वस्य चालमात्रवृत्तिधर्मं
त्वेन स्थानिवत्त्वाप्रवृत्तेरिति "वर्णग्रहणे न प्रवर्त्तेत इत्येतत्ख
ण्डनावसरे विस्तरेण प्रतिपादितमिति तत एव द्रष्टव्यमित्य
ननु स्थाने द्विर्वचनरूपपदाद्वित्वे जराजरसावित्यादौ स्थानिव
न समुदायस्यापि जरात्वात् शाब्दबोधीयविषयतायाः उत्तर
शब्दे इव समुदायेपि तस्या एव सत्वेन पूर्वजराऽऽकारस्य ता
षयताश्रयावधिकपूर्वत्वेऽपि स्थानाश्रयत्वाभावेन विषयता
ष्टत्वाभावेन विशिष्टवर्णाघटितत्वेन समुदायस्यादेशापत्ति
चेन्न इष्टत्वात् । नन्वयं प्रयोगो न सम्भवति, समुदायस्यान
तावथवकत्वेन भागद्वयस्य सुबन्तत्वेन समासग्रहणनियम
तिपादिकत्वात्,स्थानिवद्भावेन प्रत्ययान्तत्वाच्च ततो विभक्त
त्यसम्भवात्,नच तस्य कृतद्वित्वस्य परमादिना समासं कृत
कशेषेण परमजराजरसावित्यादौ दोष इतिवाच्यं.यत्किञ्चि
पितव्याप्यताया एव वीप्सापदार्थतया वीप्सितस्य व्यापक
थन्नियमेन परमादिनाऽसामर्थ्येन समासाप्राप्तेरिति चेन्न,
शयिता जराजरा अतिजराजरा इत्यत्र अत्यर्थातिशयं
वीप्सितत्वेन तत्रैवान्वयेन समासस्य द्वित्वस्य चोपपत्या
कशेषे अतिजराजरसाविति प्रयोगस्योपपादनसम्भवात्
तत्र विशिष्टस्य नेष्यत एवादेशोऽत एव "जराया इति सूत्रे
पत्तिलाघवाय जराया असुङ् न कृतः,त्रेस्त्रय इति सूत्रे त्रेरयां
न कृत इति शेखरकृतोक्तं सङ्गच्छते, अन्यथा पदद्वित्व
जरसादेशे अतिजरसाविति असुङादेशेऽतिजराजरसा
एवं पदद्वित्वस्थले समुदायस्यादेशे, ऽति त्रयाणामिति अ
देशे ऽतित्रित्रयाणामितिप्रयोगभेदरूपदोषसत्वे लाघवपर्य
धावनस्य ग्रन्थकृतोऽसङ्गत्यापत्तेरितिवाच्यं पदद्वित्वस्थ

र्यालोचनेनैव तद्ग्रन्थस्य सत्वात् त्रिशब्दस्य बहुवचनान्तस्य पदद्वित्वे स्थानित्वेन समुदायस्य स्थानिवद्भावेन त्रिशब्दत्वाला-भाच्च । नचाग्रवचनं साकच्कार्थम्, इमोऽः इत्येव सिद्धे कादेशः साकच्कार्थ इतिभाष्यादिग्रन्थविरोधः पदद्वित्वस्थले फलभेदा-द्रितिवाच्यं, साकच्कार्थमित्यस्य पदद्वित्वस्याप्युपलक्षकत्वात् अन्तरङ्गत्वात् कादेशे कृते द्वित्वप्राप्त्या समुदाये स्थानिवद्भावेन किम्शब्दत्वालाभाच्च, "पादः पदितिसूत्रेणोपधाया ह्रस्वत्वं वक्त-व्यमन्यथा द्विपदः पश्येत्यादौ समुदायस्यादेशापत्तिर्न वक्तव्यं निर्दिश्यमानस्यैवादेशादित्यर्थकभाष्यविरोधः, पदद्वित्वस्थले व्याघ्रपात्पद इति ह्रस्वपक्षे, निर्दिश्यमानस्यादेशपक्षे च व्याघ्रपद, इति फलभेदात् इत्यपि न वाच्यं,वार्त्तिकस्य, द्विपद इत्यादौ स-मुदायादेशाभावरूपं यत् प्रयोजनं तस्य निर्दिश्यमानपरिभाषया अन्यथासिद्धिप्रतिपादनमात्रपरं हि तद्भाष्यं,न तु ह्रस्वकरणे दोषो नास्तीत्यत्र तात्पर्यन्तद्भाष्यस्येतिकल्पनात् तथाच द्विपद इत्या-दौ विशिष्टस्य निर्दिश्यमानत्वाभावेनादेशाप्राप्तेः, पदद्वित्वस्थले दोषाच्च ह्रस्वत्वन्न वक्तव्यमिति फलति अत एव व्याघ्रपाच्छ-ब्दाण्णिजन्तात्क्विपि णिलोपटिलोपयोः शसि निर्दिश्यमानस्य प-द्रादेशे व्याघ्रपदः, ह्रस्वे, व्याघ्रपइतिफलभेदोद्भावनमपि न युक्तं तत्र दोषस्यैव सत्वात्,णिलोपस्य स्थानिवद्भावेपि तत्पूर्वभागस्य पाच्छब्दान्तभत्वानपायात् सूत्राप्रवृत्तेर्वक्तुमशक्यत्वात्, बहुव्रीहा-वेव कृतसमासान्तत्वेन तत्र च समासैकदेशस्य वीप्सितत्वासम्भ-वाच्च,भाष्यप्रामाण्यात् तादृशलक्ष्याणामनभिधानकल्पनाच्च,एतेन निरुक्तदोषैः पदद्वित्वस्थले विशिष्टस्य निर्दिश्यमानत्वं नैवेष्यत इति केनाचिदुक्तन्त्वविचाररमणीयम् "येन विधि, यदागम इत्यु-भयबोधितस्थानित्वप्रतिषेधमात्रफलिका निर्दिश्यमानपरिभाष्ये-त्यस्य "अनया परिभाषया येन विधिरितिसूत्रेत्यादिवक्ष्यमाणग्र-

नन्वेवमुदस्थादित्यादावुदः स्थास्तम्भोः पूर्व (८.४.६१) इति पूर्वसवर्णापत्तिरत आह ।

## निर्दिश्यमानस्यादेशा भवन्ति ॥ १२ ॥

न्धकारोक्त्या स्पष्टं लाभाश्चेति दिक्, निर्जरसावित्यादौ जरो ह्रस्वान्तस्य स्थानिवद्भावेन जरात्ववत् पदद्विस्थलेऽपि स्थानि द्भावेन विशिष्टस्य जरात्वसत्त्वेन वैषम्ये बीजाभावाच्च ॥११॥

नन्वेवमुदस्थादित्यादाविति = । यदागमपरिभाषा स्वीकारे अस्थेत्यस्यापि तया स्थात्वादितिभावः, सत्याञ्च निर्दिश्यमान एवोदः परत्वस्यान्वयेनोदस्थादित्यत्राऽऽ व्यवधानान्न दोष इतिबोध्यम् । ननूदस्थेतिसूत्रे लुप्तषष्ठी सकारस्य प्रश्लेषेणोदः परस्य स्थास्तम्भसम्बन्धिसकारस्ये र्थेन न दोष इतिचेदुदस्थादिति निर्जरसावित्यस्योपल तत्र तदन्तविधिना समुदायस्य जरसादेशापत्तिः नच ज इत्यादेरपि अङ्गस्यान्त्यवयवषष्ठ्याऽजादिविभक्त्यव्यवहितपूर्व ङ्गावयवस्य जराशब्दस्य जरसित्यर्थेन न दोषः, नच सम्भ सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वान्नैवमिति वाच्य त्यामपि परिभाषायां जराशब्दान्ताङ्गावयवस्य निर्दिश्यमान त्यर्थेन वैयधिकरण्यान्वयस्यावश्यकत्वादिति वाच्यं तावता चारक्विन्तप्रकृतिककर्तृक्विन्तात्रितृशब्दादामि त्रितामित्य यदागमन्यायेन त्रितृशब्दस्य त्रिशब्दत्वात् आमव हितपूर्वत्वाच्च विशिष्टस्यादेशापत्तेः । नच यदागमपरि षाया लक्षणाग्राहकत्वेन त्रिशब्दस्य त्रिशब्दविशिष्टे लक्ष त्रिशब्दादुपस्थितत्रिशब्दविशिष्टैकदेशे त्रिशब्दे एवाऽऽमव्यव पूर्वत्वस्यान्वयेनाऽऽमव्यवहितपूर्वत्वविशिष्टो यस्त्रिशब्दस्त

षष्ठी स्थाने योगा (१.१.४९) इति सूत्रमावर्त्तते तत्र द्वितीयस्यायमर्थः। षष्ठ्यन्तं निर्दिश्यमानमुच्चार्य-

ष्टस्य त्रयादेश इत्यर्थेन न दोष इतिवाच्यं अपित्रदित्यत्र ताव-त्प्यनिस्तारात् परिभाषाया आवश्यकत्वात्। सूत्रकारमते ष-ष्ठ्या स्थानिपदार्थानुयोगिकसम्बन्धार्थकत्वाय सूत्रस्यावश्यक-त्वेनाऽऽवृत्त्या द्वितीयार्थमाह (षष्ठीस्थाने योगेति सूत्रमावर्तत इ-त्यादिना)· भाष्यमते तु राज्ञः पुरुष इत्यादौ पदान्तरसमभि-व्याहारात् षष्ठ्याः स्वत्वार्थकत्वस्येव "इको यण्चीत्यादावपि यणादिपदसमभिव्याहारादेव षष्ठ्याः स्थानार्थकत्वलाभात् षष्ठीस्थानेतिसूत्रं, निर्दिश्यमानस्यादेशा इत्यर्थकमेव, तन्मते आवृत्तेर्नोपयोगः। प्रत्ययग्रहणे तदन्तग्रहणादाह (षष्ठ्यन्त-मिति) ननु षष्ठ्यन्तं, जराया इति समुदायो न तस्य स्थानेन योग इति चेन्न,अन्तशब्दस्य परसमीपबोधकतया षष्ठी अन्तः परसमीपो यस्येत्यतद्गुणसम्विज्ञानबहुव्रीहिणा षष्ठीप्रकृतिरू-पार्थस्य लाभात्, वस्तुतस्तु सूत्रे यतस्सेत्यध्याहारेण यतः षष्ठी सा स्थाने योगेत्येवार्थस्सम्यक्, षष्ठ्यन्तं स्थाने योगेत्यनयोर-भेदे समानलिङ्गकत्वस्यौचित्यात्, प्रत्ययग्रहणे तदन्तग्रहणमि-त्येतल्लब्धस्यान्तपदस्य परसमीपबोधकत्वेऽतद्गुणसम्विज्ञाने चा-तिप्रसङ्गात् निर्दिश्यमानस्येत्यध्याहारस्यानुपयोगाच्च, "निर्दि-श्यमानमिति इदमध्याहारलब्धम्। ननु षष्ठीप्रकृतिः सूत्रे, उच्चा-र्यते न तस्या स्थाने,ऽपि तु तद्बोध्यस्येत्यत आह (उच्चार्यमा-णसजातीयमेवेति) "ननु सूत्रे उच्चार्यमाणस्यादेशासम्भवादाह उच्चार्यमाणसजातीयमेवेतीति केनचिदुक्तमयुक्तं पञ्चम्या अस-ङ्गतेः। उच्चार्यमाणमित्यसङ्गतमित्यतइति शेषेण कथञ्चित् लापने तु न विद्वेषः,एव कारेण सूत्रे उच्चार्यमाणस्य व्यावृत्तिः साजा-

माणसजातीयमेव निर्दिश्यमानावयवरूपमेव वा स्थाने स्यश्च समानानुपूर्वीकत्वेन बोध्यम् । ननु अयोगवाहानां वर्ण माम्नाये पाठाभावे विसर्गस्यालृत्वाभावेन,अलोन्त्यस्येत्यस्या सौ "विसर्ज्जनीयस्यसइत्यनेन पदाधिकारात्तदन्तविधिना वि र्ज्जनीयान्तस्य पदस्य सत्वमित्यर्थकेन, वृक्षस्त्वत्रेत्यादौ समुदा स्थानिकसत्वापत्तेः निर्दिश्यमानपरिभाषया वारणपरभाष्यास तिः बिन्दुद्वयात्मकविसर्गस्य विसर्ज्जनीयपदसजातीयत्वाभाव किञ्च "तदोस्सस्सावनन्तयोरित्यत्र त्यदादीनामइत्यतस्त्यदा पदसम्बन्धेनाङ्गाधिकारेण च त्यदाद्यन्त य्यँदङ्गन्तदवयव त्यदादिपदीयनिर्दिश्यमानस्य योऽवयवोऽनन्तस्तकारोदका तस्य सत्वमित्यर्थोऽत एवातिस इत्यादावादितकारस्य न स्वं तस्य त्यदादिपदीयनिर्दिश्यमानावयवत्वाभावात् । स सच्छब्दस्य त्यदादिपदसजातीयत्वाभावेन्,निर्दिश्यमानत्वाभा नवा तस्य स्थानेन योगोऽपि तु तदवयवस्यैवेत्यत आह । निर्दि श्यमानावयवरूपमेव वेति ।। षष्ठीप्रकृतिजन्यप्राथमिकोपस्थि तीयविषयताश्रयावयवमेवेत्यर्थः । ननु तर्हि षष्ठीप्रकृतिजन्यो स्थितीयविषयताश्रयस्य निज्जरसावित्यादौ जरशब्दस्य स्था योगो न स्यात् अपि तु तदवयवस्यैवेति चेन्न व्यपदेशिवद्भा स्वस्यापि स्वावयवत्वात् वृक्षप्रचलन्यायेन समुदायएवादेशप्र त्तेः । यद्वा षष्ठीप्रकृतिजन्यापस्थितीयविषयताश्रय एव स्था न युज्यते परन्तु स्थानषष्ठीस्थले साक्षात् स्थानषष्ठीप्रकृ र्थान्वय्यवयवत्रषष्ठीस्थले स्वावयवद्वारेतिबोध्यम् "निर्दिश्यमा वयवरूपमेवेति प्रतीकमुपादाय अयं भावः सर्वा अपि सूत्रघट ष्ठीप्रकृतयः साक्षात् स्वावयवमात्रघटितपरंपरया वा स्था युज्यन्त इतिसूत्रार्थादिति केनचिदुक्तं न युक्तं, आगमशास्त्र क षष्ठीप्रकृतेस्सथात्वाभावात् । स्थानंषष्ठीमात्रविषयकत्वे स

स्थाननिरूपितसम्बन्धेन युज्यते न प्रतीयमानमिति तेनेदं सिद्धम् । न चास्य च्वौ [७.४.३२] इत्यादौ दीर्घाणामादेशानापत्तिस्तेषां निर्दिश्यमानत्वाभावादिति वाच्यम् । जातिपक्षे दोषाभावात् । किञ्च न भूसुधियोः

वयंवत्याद्धसङ्गतेश्च (न प्रतीयमानमिति) द्वितीयोपस्थितीयविषयताश्रयो न स्थानेन युज्यतइत्यर्थः । येन विधिसूत्रसहकारेण तद न्तस्य, यदागमपरिभाषासहकारेण सागमस्योपस्थिति र्हि स्वरूपोपस्थित्यनन्तरं द्वितीयोपस्थिति रिति तदन्तस्य, सागमस्य च स्थानित्वाभावः, तथा च शास्त्रान्तरासहकारेण षष्ठीप्रकृतिजन्योपस्थितीयविषयताश्रयत्वन्निर्दिश्यमानत्वमिति फलति । न च शालीभवति मालीभवती त्यादावाऽऽकारस्य "अस्यच्वाविति सूत्रस्थापदेनाणुदित्सूत्रसहकारेणैवोपस्थितत्वान्निर्दिश्यमान - त्वाभावेनत्वानापत्तिरित्यआह (नन्व "स्य च्चावित्यादाविति) (जातिपक्षे दोषाभावादिति ) तस्मिन् पक्षे अ,पदस्यात्वजात्यवच्छिन्ने शक्तत्वेनाणुदित्सूत्रस्य प्रत्याख्यानात् शास्त्रान्तरासहकारेणैव दीर्घस्याप्युपस्थितिरिति भावः,व्यक्तिपक्षेऽपि समाधानमाह (किञ्च न भूसुधियोरिति) भुवौ भुवइत्यादौ सुधियौ सुधियइत्यादौ च दीर्घोकारेकारयो र्व्यक्तिपक्षे ओः सुपीत्यत्रोपदेन- "एरनेकाचइत्यत्रपदेन "ग्रहणकशास्त्रसहकारेणैवोपस्थितत्वेनानिर्दिश्यमानत्वाद्यणो ऽप्राप्तौ, नभूसुधियोरिति निषेधसामर्थ्यादुक्तलक्षणे शास्त्रान्तरपदे ग्रहणकशास्त्रातिरिक्तत्वेन संकोच इति बोध्यम् । इदमुपलक्षणं शास्त्रान्तरस्यापि, कस्य चिद्भेदस्य निवेशयिष्यमाणत्वात् । यत्तु केनचित् भूसुधीशब्दयोर्नपुंसकह्रस्वत्वे चारितार्थ्यमुक्तं तन्न युक्तम् तत्र यणपेक्षया परत्वेन नुम एव प्रवृत्तेः, यदपि तत्रैव तेनोक्तं दीर्घभूस-

[६.४.८५] इति निषेधेन ग्रहणकशास्त्रगृहीतानां नि

न्दसाहचर्य्येण दीर्घान्तसुधीशब्दस्यैव तत्र सत्वेन तेन
निर्देशासङ्गत्या ज्ञापनमिति तदपि न, तन्निर्देशेनापि
साहचर्य्यपरिभाषानाश्रयणस्यापि ज्ञापनसम्भवात् ।
भवति यत् कुलन् तद् ध्रु कुलं परमं ध्रु कुलं यस्यौ
मध्रुवावित्यादौ चारितार्थ्यं, नच परमस्य गतिकारकेतरत्व
यण् तत्र प्राप्नोति गतिकारकेतरपूर्वस्ययण्नेष्यतइति निषे
एवं परमसुधियावित्यत्रापि बोध्यमिति वाच्यम्, तथापि आ ध्यं
आ सं ध्यायति यत्कुलन्तदाध्रु आसंधि, आ आध्रु, आ आसंधि
योः तौ आध्रुवौ आसंधियावित्यादौ परादिवद्भावेन गतिपूर्व
त्वस्यैव सत्वेन यणः प्राप्ते स्तन्निषेधाय चारितार्थ्यादिति वा
"ह्रस्वो नपुंसके प्रातिपदिकस्ये"त्यनेनाच्पदीयनिर्दिश्यमान
ह्रस्वत्वेन दीर्घस्याच्पदीयनिर्दिश्यमानत्वाभावेन ह्रस्वत्वा
स्तस्माज्ज्ञापकत्वं युक्तमेवेति दिक् । तथाच ग्रहणकशास्त्रा
क्तशास्त्रासहकारेणषष्ठीप्रकृतिजन्योपस्थितीयाविषयताश्रय
त्वमिति बोध्यम्, नच जरारूपषष्ठीप्रकृतया "स्वं रूपश
सहकारेणैव जराशब्दस्योपस्थितत्वेन तस्यापि निर्दिश्यमा
त्वानापत्तिरेवं निर्ज्जरसावित्यादावपि स्थानिवत्सूत्रसहकारे
जरशब्दस्योपस्थितत्व मेवं देवीमञ्चति देवद्र्यङित्यादौ "विष्व
देवयो"रित्यत्रत्यदेवपदेन प्रातिपदिकग्रहणे लिङ्ग विशिष्टस्य
स्येतत्सहकारेणैव देवीशब्दस्योपस्थितिरिति तेषामप्यनिर्दिश्य
त्वापत्तिः "किमः क"इत्यत्रत्यकिम्पदीयनिर्दिश्यमानत्वमका
शिष्टकाकिम्शब्दस्य न स्यात् "तन्मध्यपतितन्यायसहकारेणो
स्थितत्वादितिवाच्यम् । अणुदित्सूत्रातिरिक्तन्वस्यैव स्वरूप
निवत् 'प्रातिपदिकग्रहणे तन्मध्यपतित एतदतिरिक्तत्वस्य

शास्त्रे निवेशनीयत्वात् वस्तुतस्तु येनविधिर्यदागमा इत्येतच्छास्त्र-
द्वयासंहकारेण षष्ठीप्रकृतिजन्योपस्थितीयविषयताश्रयत्वन्तत्व-
म् अतएव "अनया च परिभाषया येन विधि रिति सूत्रेत्यादि
वक्ष्यते मूले, यत्पदघटितत्वेन वोभयोः प्रवेशः यद्यपि भाष्ये
यदागमपरिभाषाया यत्पदघटितत्वन्नास्ति तथापि यत्पदं प्रवे-
श्य तथा वक्तुं शक्यते, नन्वेवं जरायां जरा जराजरा ततो द्वि-
वचने ज्क्षाजरसावित्यादौ पूर्वस्यापि जराशब्दस्य निरुक्तनि-
र्दिश्यमानत्वापत्तिर्न च विधेस्त्यव्यवहितपूर्वत्वस्य निर्दिश्य-
मान एवान्वयान्नादेशापत्तिरिति वाच्यम्। प्रत्ययस्या-
ङ्गांशे एवान्वयस्य शेखरकृता व्यवस्थापनात् "पादः पदिति-
सूत्रे निमित्तस्यानुपादानेन व्याघ्रपात्पद इत्यादौ गतिविरहाच्च
स्वप्रते आक्षिप्तस्य शाब्दबोधे मानाभावाच्च संज्ञासूत्राणां पदै-
कवाक्यतयाऽन्वयाबोधाच्चेति चेन्न स्वजन्योपस्थितिविषयताश्र-
यत्व स्वजन्योपस्थितीयविषयताश्रयसमभिव्याहृतवर्णाघटित-
त्वोभयसम्बन्धेन षष्ठीप्रकृतिविशिष्टत्वन्तत्त्वमित्याशयात् वि-
स्तरेण पूर्वपरिभाषायामेवोक्त मिति तत्रैव द्रष्टव्यं केचित्तु
षष्ठीप्रकृतिविशिष्टत्वं तत्वं वै० स्वप्रयोज्यशाब्दबोधीयविषय-
त्वाश्रयत्व स्वप्रयोज्यशाब्दबोधीयविषयताश्रयाघटितत्वोभयस-
म्बन्धेनेत्येव सिद्धान्तितं तन्न विचारक्षमम् पदाद्वित्वस्थले विशिष्ट-
स्यादेशानापत्तेः विशिष्टस्य निर्दिश्यमानत्वाभाव एवेष्यत इति
तु पूर्वपरिभाषायामेव खण्डितम् अवशिष्टं विचार्यते यदागम-
परिभाषया आगमिष्ठात्तिधर्म्मस्य सागमे आरोपो वोध्यते न
तु शास्त्रघटकतत्तत्पदानां स्वशक्यविशिष्टे लक्षणा, तत्तच्छास्त्राणा-
मधिकार्थविषयकबोधजनकत्वेन तत्तत्पदजन्योपस्थितीनामधिक-
लक्ष्यार्थविषयाणां कारणत्वेन च गौरवात् ततश्च पाघ्राध्मेत्या-
दिसूत्राणां विशिष्टरूपोपादानसत्वादर्थवत्परिभाषयाऽर्थवतः पा-

कृतत्वोऽन्यथा सा पूतक्रतुस्सा इवाचरति पूतक्रतुदित्यादौ "वि
षा सपूर्वस्य" "पूतक्रतोरैच" इतिसूत्राभ्यां पतिशब्दपूतक्रतुशब्द
यो ऐकारैकारावादेशौ स्यातां, आगमरहितयोरुक्तनिर्दिश्यमा
नत्वस्य सत्वादिति तु न वक्तव्यं, सर्वस्मिन् परिष्कारे वा
क्ययोः साम्यात् तदर्थं सुप्रयान्तरानुसरणस्यापेक्षणात् तथा
पूतक्रतुदित्यत्रोपसर्जनत्वात् नैकारः, द्वितीये पतिशब्दे इका
रस्यापि प्रश्लेषेणकारान्तपतिशब्दस्यैव ग्रहणात् न नकारः इ
त्यदागमपरिभाषावतरणनिरूपणावसरे विस्तरेणाभिहितम् ।
नाभिरिवाचरति नाभिदित्यत्र नाभिनभश्चेत्यस्याप्रवृत्तये
यतनीयमेवेति बोध्यमिति निष्कृष्टमेवेदमिति मैथिलवराः
" इयङुवङोर्ङित्वंरिवाति " अयम्भावः नियौ निय इत्या
अन्त्यादेशार्थमेवादेशे ङित्वं कृतमन्त्यादेशश्च प्वोरि
तत्पदीयनिर्दिश्यमानयोरेव विधानेन सिद्ध एवेति ङित्वं व्य
र्थमिति नाशंक्यं,य्वोरिव धातोरपि धातुप्रदीपनिर्दिश्यमानत्व
क्षप्रचलन्यायेन तस्य आसादेशव्यावृत्त्यर्थन्तस्यावश्यकत्वादि
नन्विदं न युक्तं "जराया जरसन्यतरस्यामिति" सूत्रस्य जराश
न्ताङ्गस्य जरसित्यर्थादङ्गपदीयनिर्दिश्यमानतायानिर्जरसा
त्यत्र निर्जरशब्दे एव सत्वेनोक्तरीत्यासमुदायस्यादेशापत्ति
रणाच्च षष्ठीभक्तिविशिष्टत्वं निर्दिश्यमानत्वं वाच्यं, वैशिष्ट्यं
पूर्वोक्तसर्वमपरञ्च स्वविशिष्टस्थानषष्ठीभक्तिजन्योपस्थिती
विषयताश्रयाघटितत्वं तत्र वैशिष्ट्यं स्वभिन्नत्वस्वघटितत्व
घटकत्वोभयसम्बन्धेन ततश्च निर्जरसमुदायेअङ्गरूपषष्ठीभक्तेः
र्वोक्तसम्बन्धसत्वेपि स्वविशिष्टा भक्तिर्जरेति तत्र स्वभि
स्य स्वघटितं जरायाजरसन्यतरस्यामिति सूत्रन्तद्घटकत्वस्य
सत्वात् तज्जन्योपस्थितीयविषयताश्रयो जरेतितदघटितत्वमा
ति न निर्दिश्यमानत्वमिति न दोषः, एवमेव प्रकृते धातुप

निर्दिश्यमानत्वं नियावित्यादौ न्वीशब्दस्य नास्ति तत्र धातुरूपषष्ठीप्रकृतेः पूर्वोक्तसम्बन्धसत्वेऽपि नूतनसम्बन्धस्यासत्वात् एवं धातुस्तद्भिन्नत्वं य्वोरस्ति स्वघटित प्रचिष्णुधातुस्रुवा।मतिशास्त्रघटकत्वमप्यस्तीति स्वविशिष्टा षष्ठीप्रकृतिः य्वोरिति लुज्जन्योपस्थितीयविषयताश्रय ईकारस्तद्घटितत्वाभावादिति चेन्न निर्दिश्यमानत्वलक्षणे षष्ठीप्रकृतिपदेनाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितमुख्यविशेष्यत्वप्रयोजिकाया एव ग्रहणेनाङ्गरूपायास्तस्या अग्रहणेन निरज्जरसावित्यादौ दोषाभावेन नूतनसम्बन्धनिवेशस्यानावश्यकत्वमित्याशयेन तद्ग्रन्थस्य सत्वात् मुख्यत्वञ्चाभेदसम्बन्धावच्छिन्नप्रकारत्वासामानाधिकरण्यमेव अङ्गपदप्रयोज्यविशेष्यतायान्तादृशप्रकारत्वासामानाधिकरण्यात् मुख्यत्वं धातुपदप्रयोज्यायाश्चाङ्गपदप्रयोज्यविशेष्यतानिरूपिततादृशप्रकारतासामानाधिकरण्यान्नमुख्यत्वमिति–विशेष इति बोध्यम्, यत्तु केन चित् निर्दिश्यमानावयवेतरस्यादेशाभावोऽनया परिभाषया बोध्यते अत एव मूले उक्तं निर्दिश्यमानावयवरूपमेवेति, नतु निर्दिश्यमानावयवरूपेतरत् स्थानेन युज्यत इति हि तस्यार्थस्तथाच निज्जरसावित्यादौ समुदायस्य जरापदीयनिर्दिश्यमानजरावयवेतरत्वान्न तस्यादेशो नियावित्यादौ च य्वोरित्येतत्पदीयनिर्दिश्यमानेकारावयवेतरत्वात् समुदायस्यादेशाप्राप्त्या ङित्वं रीङोङित्वमिव स्वषष्ठ्यर्थमेवेत्युक्तम्, तस्यापि मदुक्तनूतनवैशिष्ट्यदानपरतयैवकथञ्चित्लाघवयुक्तम् यथाश्रुतन्तु न विचारसहम् तथाहि यदि निर्दिश्यमानावयवत्वावच्छिन्नप्रतियोगिताकसामान्यभेदो विवक्षितस्तदाधातोरपि अङ्गपदीयनिर्दिश्यमानावयवत्वेन दोषतादवस्थ्यं यत्किञ्चिन्निर्दिश्यमानावयवेतरत्वस्यजरापदीयनिर्दिश्यमानेपि निज्जरसावित्यादौसत्वेनादेशापत्तिर्दुर्वारा एकशास्त्रघटकत्वनिवेशेऽ-

श्यमानकार्यबोधनान्न दोषः । इयङुवङोर्ङित्त्वं लि
र्णोवर्णान्तश्नुधातुभ्रुवामित्यर्थेन धात्वादीनामपि नि
ष्टत्वादन्त्यादेशत्वाय । रीङ्रिङोर्ङित्त्वं तु स्पष्टार्थमे
एतेनेदं ङित्त्वं वर्णग्रहणे निर्दिश्यमानपरिभाषाया अ
वृत्तिज्ञापकमित्यपास्तम् ।हयवरट्सूत्रस्थेनायोगबाहाना
सूपदेशे ऽलोऽन्त्यविधिःप्रयोजनम् । वृक्षस्तत्र । नैतदपि

पि समन्वयासम्भवः जराशब्दान्ताङ्गस्य जरसादेशो
र्दिश्यमानावयवेतरस्य नेत्यर्थेन निर्जरसावित्यादौ जरा
ब्दस्यापि आदेशानापत्तिर्जराशब्दान्ताङ्गत्वाभावात् जराश
न्ताङ्गावयवस्य जरापदीयनिर्दिश्यमानस्यादेश इत्यर्थस्य तु
ब्दमर्य्यादयाऽलाभात् किञ्च तच्छाङ्गघटकयत्किञ्चित्प
यानिर्दिश्यमानस्यादेशस्तच्छाङ्गघटकतदितरपदीयनिर्दिश्यमाना
वयवेतरस्य नेत्यर्थेपि ज्वरत्वरेतिसूत्रेणोपधापदीयानिर्दिश्य
नावयवस्य तच्छाङ्गघटकतदितरवपदीयानिर्दिश्यमानावय
रत्वेनादेशानापत्तिः, एवकारेण तु सूत्रे उच्चार्यमाणमेव व्या
र्यते इत्युक्तं परदोषाविष्करणेन, स्पष्टार्थमिति"न तु किञ्चि
ज्ञापनद्वारापि सफलमिति भावः । ( एतेति ज्ञापनेनापि सा
र्थस्यासम्भव इति भावः (हयवरट्सूत्रस्थेनेत्यादि) विसर्गस्य
पि वर्णत्वेन तत्र त्वदुक्तरीत्या निर्दिश्यमानपरिभाषाया अ
दौ निर्दिश्यमानस्येत्येव सिद्धमित्यस्यासङ्गत्यापत्तिरिति भा
यदि च विसर्गस्य न वर्णत्वं ज्ञापनशरीरे वा वर्णत्वस्याने
त्वमेव प्रवेश्यते तदा न भाष्यविरोधक्लेश इति चेत् फलाभा
देव ज्ञापनं न युक्त मित्यवेहि नच शब्दान्तेत्यत्रवारणा
रित्यस्यैकारान्तस्योकारान्त आदेश इत्यर्थे भवत्वित्यत्र

प्रयोजनं निर्दिश्यमानस्येत्येव सिद्धमिति भाष्येण विरोधात्।
अनया परिभाषया येन विधि [१.१.७२] रिति सूत्रबोधिततदन्तस्य स्थानित्वाभावबोधनं यदागमाः [प॰ ११] इति लब्धस्य च । तेन सुपद उदस्थादित्यादिसिद्धिः । अनया च स्थानिमित्तसन्निधापितानामलोऽन्त्यस्य [१-१.५२] इत्यादीनां समावेश एव न बाध्यबाधकभावो-विरोधाभावात् । नाप्येतयोरङ्गाङ्गिभावः उभयोरपि परा-

त्येतत्पदीयनिर्दिश्यमानस्येकारमात्रस्योकारान्ततुशब्दादेशाभाव एव फलमितिवाच्यं तत्र निर्दिश्यमानपरिभाषायाःप्रवृत्तौ शब्दानित्यत्वप्रौढ्येण तदन्तपरतया व्याख्यानस्यैव व्यर्थत्वापत्तेः आनुमानिकस्थान्यादेशभावस्थले उक्तपरिभ[illegible] अप्रवृत्तिकल्पनात्, नच तदापि वर्णग्रहणे न प्रवर्त्तत इत[illegible] गतार्थमिति वाच्यं "भस्यटे लोप" इत्यादौ पथ्यादिसम्बन्धिटिघटितस्य लोपघटित आदेशइत्यर्थस्य शब्दानित्यत्ववारणाआवश्यकत्वेन टेरित्यस्य वर्णग्रहणत्वाभावेन निर्दिश्यमानपरिभाषया पथ इत्यादौ टिमात्रस्य टिपदीयनिर्दिश्यमानस्य लोपघटितपथित्यादेशापत्ते स्तत्कल्पनाया आवश्यकत्वात्, उकारमात्रस्यापि व्यपदेशिवद्भावेनोकारान्तत्वादन्तरतमपरिभाषया तस्यैवादेशत्वेन दोषाभावाच्चेति दिक् । "अनया प-रिभाषयेत्यादि एतेन पदद्वित्वे समुदायस्य निर्दिश्यमानत्वाभाव इतिवदन्तः परास्ताः प्रकृतशास्त्रद्वयबोधितस्यैव स्थानित्वाभावस्य परिभाषाफलत्वेनोपसंहारात् । "समस्सुटीत्यादौ "उदःस्थास्तम्भोः पूर्वस्य" च " समपदीयानिर्दिश्यमानान्त्यस्योदः परस्य स्थास्तम्भपदीयनिर्दिश्यमानादेरादेश इत्यादि-

र्थत्वेन तदयोगात्। अनेकाल् शित् (१.१.५५) सूत्रे सर्वश्चैतत्परिभाषाबोधित एव गृह्यते। यत्तु आदेः परस्य (१.१.५४) अलोऽन्त्यस्य (१.१.५२) इत्येतयोस्तद्बाधकाविति तन्न। उदस्थादिति सूत्रविषयेऽस्याः प्लुत् (६.४.१२०) इति सूत्रे भाष्ये सञ्चारितत्वात्। नाप्येतयोरियं बाधिका। एतयोर्निर्विषयत्वप्रसङ्गात्।

रीत्यासमावेशसम्भवान्न बाध्यबाधकभावो विरोधे हि सा दुर्बलो बाध्यत इत्युक्तेरित्याह ( अनयाच स्वसति स्यादि ) नाप्येतयोरिति" अलोन्त्यनिर्दिश्यमानपरि योरित्यर्थः तथासति निर्दिश्यमानान्त्यस्यालआदेशइत्य त्तौ अनेकाल्विषये निर्दिश्यमानपरिभाषाया अप्रवृत्यापत्ति तिभावः। (परार्थत्वेनेति) विध्युपकारार्थत्वादुभयोः। ( नाश्च परार्थत्वादसम्बन्धसमत्वात्स्यादि ) त्युक्तेरिति ननु निर्दिश्यमानपरिभाषया निर्जरसावित्यादौ जरा स्यानेकाल्परिभाषया जराशब्दान्त्यस्यादेशो बाध्यत विरोधाद्बाध्यबाधकभावः स्यादित्याह " सर्वश्चेति एतत्प भाषाबोधित इति निर्दिश्यमानपरिभाषाबोधित इत्यर्थः र्दिश्यमानस्य सर्वस्येत्यन्वयेन, समावेश एवेति भावः द्बाधकाविति, निर्दिश्यमानपरिभाषाया बाधकाविति ( उदस्थादिति उदस्थादिति यःसूत्रस्यादेःपरस्येत्यस्य यस्तत्रेत्यर्थः ( अस्या ) निर्दिश्यमानपरिभाषाया सूत्रस्य बाधकत्वे हि तद्विषये बाध्यभूतायाः परिभा सञ्चारस्यायुक्तत्वमितिभावः यत्तु केनचिदुक्तम् उदः स्तम्भोरितिसूत्रविषयइति तन्न तत्सूत्रविषयत्वप्रदर्शन

तिविंशतेः [६.४.१४२] इति सूत्रे कैयटः। अकज्विषये तु नायं न्यायः स्थानिवद्भावेनैव तन्मध्यपतितन्यायेन तद्बुद्धयैव कार्यजननात् इयं चावयवषष्ठीविषयेऽपि। प्रयोगाभावात्. "अकज्विषयेनायन्न्याय" इति अकज्विशिष्टस्य स्थानित्वव्यावर्त्तकोयं न्यायो नेत्यर्थः तथा चाणुदित्सूत्रातिरिक्तत्वस्येव तन्मध्यपतितन्यायातिरिक्तत्वस्यापि निवेशो निर्द्दिश्यमानत्वलक्षणे इति बोध्यम् अत्र ज्ञापक "मनाप्यक" इतिसूत्रे अकग्रहणमन्यथा अकज्विशिष्टस्येदकमूशब्दस्येदमूपदीयनिर्द्दिश्यमानत्वाभावात् इदमूपदीयनिर्द्दिश्यमानस्यावयवोयइदूतस्यानादेशइत्यर्थकस्याप्राप्तीत्यस्य तत्राप्राप्त्या अक इत्यस्य वैयर्थ्यमेव, ज्ञापिते तु साकच्कस्यापीदमूपदीयानिर्द्दिश्यमानत्वेन तद्व्यावृत्त्यर्थन्तत्सार्थकम् नच तत्रेदमइत्यस्यावयवषष्ठ्यन्तत्वेन स्थानषष्ठीविषयकनिर्द्दिश्यमानपरिभाषायाअप्रवृत्तिरितिवाच्यम वयवषष्ठीविषयेऽपि तत्प्रवृत्तेर्वक्ष्यमाणत्वात् अतएवाकज्विशिष्टस्यापि किमूशब्दस्य कादेशसिद्धिः, नचैवं निर्द्दिश्यमानत्वाभावादकच्सहितस्य कादेशो न स्यादित्याशंक्य "किमःक"इत्यस्यावृत्त्या समाधानपरशब्देन्दुशेखरविरोध इति वाच्यं कैयटमतेन तद्ग्रन्थस्य सत्वादतएव तत्रावृत्त्याश्रयणाददोषइतिकैयटइत्युक्तम्, नच भिन्धकीत्यत्राकचि धित्वं न स्यान्निर्द्दिश्यमानत्वाभावादित्याशंक्यान्तरङ्गत्वाद्धित्वे ऽकजितिभाष्यउक्तन्तद्विरुद्धयेतेति वाच्यम्, धर्म्मिग्राहकमानात् साकच्कानपहारके आदेशे नायन्न्याय इतिकल्पनेनादोषात् धित्वस्य कादेशस्य च साकच्कापहारकत्वेन तद्विषये निर्द्दिश्यमानपरिभाषायाः प्रवृत्त्या भाष्यस्य शेखरग्रन्थस्य चोपपन्नत्वात्, सर्वशब्दस्याकचि दाम-

अत एव तदोः सः सौ (७.२.१०) इति सत्वम् ओम
इत्यत्रोपसर्गतकारस्य न । निर्दिश्यमानयुष्मदाद्यवयव
पर्यन्तस्यैव यूयादयो न त्वतियूयमित्यादौ सोपसर्गा नि
प्रत्यये सर्वकशब्दस्य निर्दिश्यमानत्वाभावेन "सर्वस्य सो
तुरस्यादौ" त्यनेन सादेशाभावेन सर्वकदेत्येव, ज्ञापना
च्छब्दस्याकचि निर्दिश्यमानत्वाभावेऽपि साकच्कानपा
रत्वेन निर्दिश्यमानपरिभाषाया अप्रवृत्तेरत्वसत्वयोः सकां ति
द्धम्, केचित्तु तिङश्चेत्यनेनातिङन्ततदादेरकज्विधानेन भि नि
पर्य्याप्तमुख्योद्देश्यतानिरूपितविधेयताश्रयत्वस्यैवाकचस त्य
द्धिपर्य्याप्तमुख्योद्देश्यतानिरूपितविधेयताश्रयत्वाभावेन इ
ध्यपातितन्यायेन ह्यकिशब्दस्य हिशब्दत्वासम्भवः स्वघट
र्वत्वस्वघटकपरत्वस्वपर्य्याप्तमुख्योद्देश्यतानिरूपितविधेयता
त्वैतत्त्रितयसम्बन्धेन तद्विशिष्टत्वस्यैव तन्मध्यपातितत्वपदार्थ
अतएव समासोत्तरजायमानायाः "कमण्डलुपाणि च्छात्र
श्रीदित्यादौ कमण्डलुप्रकृत्तिकतृतीयायाः प्रातिपदिकान्त
रत्वेनसुपोधात्वितिलुगभावउक्तः कैयटेनेति" इत्थंभूतल
तिसूत्रस्थशेखरे उक्तं उद्देश्यताघटिततृतीयसम्बन्धस्या
तु तन्न्यायेन विशिष्टस्य प्रातिपदिकत्वेन लुको दुर्वारत्वं
यटोक्त्यसङ्गत्यापत्ते "स्तथाच हिशब्दत्वाभावादेव भिन्न
भाकचि धित्वन्न प्राप्नोतीत्युक्तं भाष्यकृता न तु नि
श्यमानपरिभाषाबलादित्यस्य वक्तुं शक्यतयाकज्विषये
न्यतोऽप्रवृत्तावपि न विरोधलेशः अकज्विषयेऽपि स
साध्वित्याहुस्तन्न हुझल्भ्यो हेर्धिरिति सूत्रभाष्यपर्यालो
या निर्दिश्यमानपरिभाषाबलादेव धित्वाभावे भाष्य
र्य्यावधारणात् । तत्र हि रुदिहि स्वपिहीत्यत्र धित्वमा

मपर्यन्तस्येति बोध्यम् । पादः पत् (६.४.१३०)इति सूत्रे षष्ठी स्थाने [१.१.४९] इति सूत्रे च भाष्ये स्पष्टैषा ॥१२॥ निर्दिश्यमानपरिभाषया समाधायोक्तं यद्येवं भिन्धकीत्यत्रा- कचि धित्वन्न प्राप्नोतीत्युक्तम् यद्येवमितिप्रतीकमुपादाय नि- र्दिश्यमानस्यादेशा भवन्तीति स्वीकार्य इत्युक्तं कैयटेनापि एत- द्भाष्यबलादेवमुख्योद्देश्यताघटितस्यैं तृतीयसम्बन्धस्य मध्यप- तितत्वेऽप्रवेशोऽन्यथा तन्मध्यपतितत्वाभावादेव धित्वाप्राप्त्या निर्दिश्यमानपरिभाषास्वीकार इत्यर्थकस्य यद्येवमित्यस्यासङ्ग- त्यापत्तेः । लुगभावबोधककैयटस्तु चिन्त्य एवात एव नरंमन्य इत्यादाविच एकाचोऽम् प्रत्ययवच्चेतिसूत्रेण समासोत्तरं विहि- तस्य नृशब्दप्रकृतिकस्यामोऽम्भावेन लुकमाशंक्याम्विधिसाम- र्थ्येन वारणं भगवता कृतमुपपद्यतेऽन्यथा समासीभूतनृमन्यश- ब्दनिष्ठमुख्योद्देश्यतानिरूपितविधेयताश्रयत्वस्याम्यसत्वेन त- न्मध्यपतितत्वाभावेनाम्विधिसामर्थ्यप्रयुक्तलुगभावकथनस्यास- ङ्गत्यापत्तेः । धनवन्तावित्यादौ वत्वस्यासिद्धत्वेन पूर्वजातस्य तुमस्समुदायपर्य्याप्तमुख्योद्देश्यतानिरूपितविधेयताश्रयत्वे ऽपि मतुप्पर्य्याप्तमुख्योद्देश्यताकत्वाभावेन मतुब्ग्रहणेन मन्तेत्यस्या- ग्रहणेन मादुपधायाश्चेत्यस्याप्रवृत्त्या वत्वानापत्तेश्च । नन्वेवं जनं रातीति जनरेतिशब्दस्यापि जराशब्दमध्यपतितनकारघटितत्वेन तन्मध्यपतितन्यायेन जरसादेशापत्तिस्तृतीयसम्बन्धनिवे- शे तु चेति चेन्न अव्यवहितोत्तरत्वसम्बन्धेन जविशिष्टरात्वस्यैव जरात्वपदार्थतया तस्य प्रकृते कस्मिन्नपि क्षणेऽसत्वेनतन्मध्य- पतितत्वाभावेन न्यायेन कथमप्यानयनासम्भवात् । अन्येतु तृ- तीयसम्बन्धघटकोद्देश्यतायां मुख्यत्वं न दीयते तावतापि कै- यटग्रन्थ उपपद्यते उत्तरपदशब्दस्य समासचरमावयवार्थकत्वेन

ननु चेतेत्यादौ ह्रस्वस्येकारस्य प्रमाणत आन्त-
र्यादिकारोऽपि स्यादत आह ।
तद्घटकसमासत्वावच्छिन्नविषयताया नृमन्यसमुदायपर्या-
त्वेन तन्मध्यपतितन्यायेन प्राप्तस्य लुकोऽप्रविधिसामर्थ्येन
रणं सम्यगेव कमण्डलुपाणिशब्दे च तृतीयानिष्ठविधेयता-
रूपितोद्देश्यतायाः कस्या अपि समुदायेऽसत्वेन न्यायाप्र-
धनवन्तावित्यादावपि उगित्पदघटयोज्यविषयताया मतुपि
त्वेन तन्निष्ठोद्देश्यतानिरूपितविधेयताया नुमि सत्वेन न्या-
वत्वासिद्धौ बाधकाभाव एवमेत्राकचि धित्वन्न प्राप्नोतीत्या-
वपि तिङ्प्रयोज्यविषयताया हिपदे सत्वेन न्यायेन हित
सत्वेऽपि निर्दिश्यमानपरिभाषया आदेशाभावशंकाप्युपपद्यते
नरेत्यादौ जरात्वस्य कथञ्चिदुपपादनेऽप्युद्देश्यतामात्रस्याभा
न दोष इतिसाकचकानपह्नारक इति कल्पनमेव युक्तं अतश्च
चिदन्यथाव्याख्यानन्तु अविचारितरमणीयमिति विभाव्य
मित्याहुः उच्छृङ्खलास्तु अनाप्यक इत्यत्रत्याकग्रहणेन
र्थावयवत्वमुपलक्षणन्न तु विशेषणमित्येव ज्ञाप्यते तावता
कज्विषये अनादेशप्राप्त्या चारितार्थ्यसम्भवात् इदकमुशब्
वयवस्येच्छब्दस्यापीदम्शब्दावयवत्वेन दृष्टत्वात् सक इत्या
श्रत्वसत्वयोस्सिद्धिश्च तकादित्येतदवयवतकारस्य दकारस्य
त्यदाद्यवयवत्वेन दृष्टत्वात् धनवन्तावित्यादौ मकारस्य च
मवयवत्वेन दृष्टत्वाद्वत्वासिद्धिर्निर्दिश्यमानपरिभाषाया
ज्विषयेऽपि प्रवृत्त्युपगमेन भिन्धकीतिभाष्यं शेखरग्रन्थश्चो-
द्यत इत्याहुः ॥ १२ ॥

ननु चेतेत्यादाविति प्रमाणत आन्तर्य्यादित्यस्य
कृतसादृश्यादित्यर्थ स्तथा च तालुस्थानजन्यत्वेन यथैकार

यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ॥ १३ ॥

अनेकविधं स्थानार्थगुणप्रमाणकृतम् । अत्रमानं षष्ठी स्थाने इत्यत एकदेशानुवृत्त्या स्थानेग्रहणे ऽनुवर्तमाने पुनः "स्थानेऽन्तरतमः" [१.१.५०] इति सूत्रे स्थानेग्रहणमेव । तद्धि तृतीयया विपरिणमय्य वाक्यभेदेन स्थानिनः प्रसङ्गे जायमानः सति सम्भवे स्थानत एवा-

दृशस्तथा मात्राकालिकत्वेनेकारस्याऽकारोऽपिसदृश इति विनिगमनाविरहेण पर्य्यायापत्तिरितिबोध्यम् । मात्रिकत्वं विहाय मात्राद्वयन्यूनकालिकत्वपर्य्यन्तानुधावनं कस्यचित्तु वृथेति प्रतिभाति (आन्तर्य्यमिति) सादृश्यमित्यर्थः । आदेशनियामकत्वेन प्रसक्तमितिशेषः । (वाक्यभेदेनेति) स्थानेऽन्तरतम इतिसूत्रे अन्तरतम इत्येकं वाक्यं पूर्वं पठनीयं स्थाने इत्यपरं, तत्र पूर्वस्मिन् वाक्ये स्थाने इत्यनुवर्त्तते प्रसङ्ग इति तस्यार्थस्तथा च प्रसङ्गे सति सदृशतमो भवतीत्यर्थः । द्वितीये स्थाने इतिवाक्ये पूर्ववाक्यादनुवृत्तं स्थाने इति अन्तरतम इति च पदद्वयमनुवर्त्तते; सूत्रस्थं स्थाने इति स्थानेनेत्यर्थकम्, तथाच प्रसङ्गे सति स्थानेन स्थानघटितधर्म्मेण सदृशतमो भवतीत्यर्थः । इदञ्च पूर्ववाक्येनैव स्थानघटितधर्म्मेण सदृशस्यापि विधानसम्भवात् व्यर्थं सत् स्थानेनैव सदृशतमो भवतीतिनियमार्थं (सति सम्भव इति) एतच्च योगविभागसामर्थ्याल्लभ्यते तथाचैतत्फलितैव यत्रानेकेतिपरिभाषेतिबोध्यम् । ननु वाक्यभेदे किं प्रमाणं प्रसङ्गे सति स्थानेन सदृशतमो भवतीत्यर्थकमेक मेव वाक्यमस्तु इत्यत आह (तमब्ग्रहणमेवेति) (अनेकविधेति) अनेकविधान्तर्य्य-

सत्ता आदेशनियामिकेत्यत्र ज्ञापकमित्यर्थः । यथाश्रुतन्तु न
सादृश्यस्य वस्तुधर्म्मत्वेन तत्र ज्ञापकस्यानुपयोगात्
वाक्यभेदज्ञापनद्वारेत्यादिः । तथाहि, यद्येकमेव वा
स्थाने इतिचानुवृत्तं स्थानेनेत्यर्थकञ्च, तर्हि स्थानघटितधर्मे
सदृशतम एव भविष्यति ततश्च तमब्ग्रहणं व्यर्थं,
स्सङ्क्षये अतिशयलाभार्थमस्तु तेन च लकारेतिरिक्त
दन्तस्थानजन्यत्वेन लकारवकारयोस्तुल्यत्वेऽपि दन्तमा
स्थानजन्यत्वेनातिशयसदृशो लकार एव न वका
ऽधुना पर्य्यायेण वकारोऽपि स्यात् उभयो स्थानघटि
धर्म्मेण सदृशत्वाविशेषादितिवाच्यम् तथासति समानं स्था
यस्येत्यर्थकं सस्थानमित्येव सिद्धेऽन्तरग्रहणसामर्थ्यादन्तर
इत्यर्थस्य लाभसम्भवात् वाक्यभेदे ज्ञापिते तु पूर्ववाक्यस
सङ्गे सति शदृशतमो भवतीत्यर्थेनार्थकृतगुणकृतप्रमाणकृत
दृशानां विधानलाभायान्तरग्रहणस्य चारितार्थेनान्तरग्रहण
मार्थ्येनातिशयार्थस्य लाभासम्भवात्तल्लाभार्थं तमपो ग्रहणं च
तार्थमितिवोध्यम्,तेन च वाक्यभेदज्ञापनेऽर्थादेवानेकविधा
र्य्यस्यादेशनियामकत्वलाभः । तच्चार्थकृतं गुणकृतं प्रमाणकृतं
गृह्यत इत्यत्र तु भाष्यकारादिव्याख्यानमेव शरणं स्थानकृ
न्तु सूत्रादपि लभ्यत इतिविवेकः । केनाचित् स्थान
पूर्वं वाक्यमन्तरतम इत्यपरं कृत्वा स्थाने इत्यत्रान्तरतम इत्य
र्त्तत इत्युक्तं तदसमञ्जसम् उत्तरत्र सम्बन्धस्यैवानुवृत्तिपद
त्वेन सर्वसम्मतत्वात् यदपि केनचिदुक्तं नच तमब्ग्रहणमति
यलाभार्थमादेशवृत्त्यातिशयश्च स्ववृत्तित्व स्वस्थानिवृत्तित्व
रयावदादेशावृत्तित्वैतत्त्रितयसम्बन्धेन स्वविशिष्टधर्मवत्वरूप
अत्रोच्यते अन्तरतमपदघटकमतुप्प्रतिपाद्योऽतिशयः स्वम

न्तरतम इत्यर्थकम्। तमब्ग्रहणमेकानेकविधान्तर्यसत्तागमकम्। स्थानतः स्थानेनेत्यर्थः। तत्र स्थानत अन्तर्यम् इको यणचि [६.१.७७] इत्यादौ प्रसिद्धमेव। अर्थनिष्ठ एव भवितुं युक्तः प्रकृत्यर्थान्वितस्वार्थबोधकत्वस्य प्रत्यये सत्त्वात्त्वादेशनिष्ठः। नचान्तरशब्दार्थोऽप्यादेश एवेति नासङ्गतिरिति वाच्यं प्रकृत्यर्थतावच्छेदके एवातिशयस्य तरपा बोधनात् सादृश्य एवातिशयो बोध्यते नतु धर्म्मिण्यादेशे, सप्तम्यन्तपाठे स्थानिन एवान्तरतमपदार्थत्वेनादेशवृत्तित्वस्य कथमप्यलाभाच्चेति। ननु सादृश्येऽपि कोऽतिशय इतिचेदुच्यते सादृश्यानुयोगित्वेन विवक्षितविशिष्टधर्मसाधारणधर्मकत्वरूपः वैशिष्ट्यञ्च स्ववृत्तित्व स्वघटितदलघटकस्वेतरावृत्तित्वोभयसम्बन्धेन स्वघटितदलघटकत्वञ्च स्वनिष्ठविषयताप्रयोजकपदप्रयोज्यविषयताश्रयत्वम्, तथाच लाकृतिरित्यादौ लृकारस्य लकारो नान्तरतम इति न स आदेशस्तथाहि यदा वकारोन्तरतमत्वेन विवक्षितस्तदा सादृश्यानुयोगित्वेन स एव विवक्षितस्तद्विशिष्टो न कोऽपि धर्म्मः दन्तस्थानजन्यत्वे स्ववृत्तित्वेऽपि स्वनिष्ठविषयताप्रयोजकयणपदप्रयोज्यविषयताश्रयत्वरूपस्वघटितदलघटकत्वस्य स्वेतरत्वस्य च लकारे सत्वेन तदवृत्तित्वस्यासत्वात् यदा च लकारोन्तरतमत्वेन विवक्षितस्तदा सादृश्यानुयोगी स एव, तद्विशिष्टश्च दन्तमात्रस्थानजन्यत्वरूप, स्तत्र स्ववृत्तित्वस्य स्वघटितदलघटकस्वेतरो वकारस्तदवृत्तित्वस्य च सत्वात्, तेन साधारणधर्म्मेण लृकारस्य सदृशो लकार इति स एवादेशः एवमेव सर्वत्र बोध्यम् सप्तम्यन्तपाठे अन्तरतमे स्थानिनि आदेशइत्येवार्थस्तदा यदा-दध्यत्रेत्यत्रेकारस्य यण् चिकीर्षितस्तदा सादृश्यानुयोगी स एव

र्थतः । पद्दत् [६.१.६३] इत्यादौ । स्थान्यर्थाभिधा
मर्थस्यैवादेशतेतिसिद्धान्ताद्यदर्थाऽभिधानसमर्थो यः
ह्रस्वेकारस्तद्विशिष्टो धर्म्मः द्विमात्रान्यूनकालिकत्वविशिष्ट
स्थानजन्यत्वरूपस्तत्र स्ववृत्तित्वस्य स्वघटितदलघटकस्वे
त्तित्वस्य च सत्वात् तेन रूपेण यकारसदृशतमस्स एवेति
यण् स्यान्न दीर्घस्येकारस्य तद्विशिष्टस्य धर्म्मस्य यकारसा
णस्याभावादत एव प्रथमान्तपाठस्सिद्धान्तित इति
( प्रसिद्धमेवेति ) तत्र यदा यकारोन्तरतमत्वेन विवक्षित
यकारविशिष्टो धर्मस्तालुस्थानजन्यत्वरूप इति तेनेकार
तमस्स एवेत्येवं क्रमेण बोध्यं (अर्थतः पद्दन्नित्यादाविति)
शस्प्रभृतिष्विति सप्तमीबलाच्छशाद्यव्यवहितपूर्वस्य पदादयः
शा इतिसामान्यतोऽर्थे जाते पदादेशस्स्वसदृशतमस्य ददादेश
सदृशतमस्येत्येवं क्रमेण सप्तम्यन्तपाठेऽर्थस्तत्र यदापदा
सदृशतमत्वेन पादशब्दो विवक्षितस्तदा पादविशिष्टो धर्म्मो
चरणवाचकत्वे सति पकारदकारघटितत्वरूपस्तस्य स्वं
शब्दस्तद्वृत्तित्वस्य स्वघटितदळघटका स्वेतरे स्थानित्वेन
त्रिता सर्व एव तदवृत्तित्वस्य च सत्वात्, तेन
पदादेशस्य सदृशतमस्स एवेति पादशब्दस्यैव
चरणादिशब्दस्य पदादेशसदृशतमत्वं न सम्भवति यतो
दृशतमत्वेन चरणशब्दो विवक्षितस्तदा चरणशब्द
पद्दादेशसाधारणो यस्तेनैव सादृश्यं ग्राह्यं, तच्च न सम्भव
स्यापि स्ववृत्तित्व स्वघटितदलघटकस्वेतरावृत्तित्वयोर
चरणवाचकत्वस्य तु पादादिवृत्तित्वेन निरासश्चकार
सति तत्वस्य तु पदादेशसाधारणत्वाभावाद्धेवपदादेशसा
यामकत्वासम्भवः एवं ददादेशस्य सदृशतमो दन्तश

तस्यादेश इति तत्समानार्थतत्समानवर्णपादादीनां ते। तृज्वत्क्रोष्टुः [७.१.९५] इति च। गुणतो वाग्घरिरित्यादौ। भविष्यति नान्योरदनादिशब्द इति विभावनीयम्। तत्तदर्थवाचकत्वे धर्म्मे तत्तदादेशघटकाद्यहल्द्वयघटितत्वसाहित्येन तत्तदादेशस्य सादृश्यप्रयोजकत्वमुपपादनीयम्। तथाच चरणबोधकत्वे सति पकारदकारघटितत्वं, दन्तवाचकत्वे सति दकारनकारघटितत्वं, मासवाचकत्वे सति मकारसकारघटितत्वं, हृदयवाचकत्वे सति हकारदकारघटितत्वमित्यादय एव धर्म्मा भविष्यन्ति इति विचारणीयम्। नचैवं निशादेशो निशाशब्दस्यैवेति कथं तत्र रात्रिवाचकत्वे सति नकारशकारघटितत्वं हि सादृश्यप्रयोजकम् वाच्यं, तस्य निशीथिनीशब्देऽपि सत्वादिति वाच्यं थकाराघटितत्वसहितस्य तस्य तथात्वसम्भवात्। नन्वेवमपि नासिकाशब्दस्यैव नसादेश इत्यनियमस्तत्र साधारणधर्म्माप्रसिद्धेर्नासिकावाचकत्वे सति नकारसकारघटितत्वस्य नासाशब्देऽपि सत्वादिति चेन्न नासाशब्दापर्य्यालोचनेनैव कौमुद्यां नासिकेतिविशेषोक्तेः,वस्तुतस्तु नासाशब्दस्यापि नसादेशे इष्टापत्तिरेवेत्यलम् सप्तम्यन्तपाठस्य दीर्घेकारादौ स्थानेऽसिद्धया दूषितत्वेन सिद्धान्तभूते प्रथमान्तपाठे फलमाह (तृज्वत्क्रोष्टुरितिचेति) तत्र क्रोष्टुशब्दस्य स्थाने शृगालवाचकत्वेन सदृशतमः क्रोष्टृशब्द एवादेशो न पक्तृशब्दः नच तत्र स्थानषष्ठ्यभावेन स्थान्यादेशभावाभावात् स्थानेन्तरतम इत्यस्याप्रवृत्तिरितिवाच्यम् रूपातिदेशस्थले स्थानषष्ठीं विना गत्यभावात् तथाहि धर्म्मिणि विद्यमान एवापरधर्म्मिणोऽतिदेशे क्रोष्टुक्रोष्टृइत्युभयोः श्रवणापत्तिः धर्म्मिणं विहायानुपूर्वीमात्रस्यानुपूर्व्यन्तरविशिष्टे अतिदेशे च एकस्मि-

प्रमाणतोऽदसोऽसेः (८.२.८०) इत्यादौ । स्थाने
तमसूत्रे भाष्ये स्पष्टैषा ॥ १३ ॥

नन्तु प्रोढवानित्यत्र प्रादूहोढ (६.१.८९)
वृद्धिः स्यादत आह—

## अर्थवद्ग्रहणे नानर्थकस्य ॥१४॥

श्वैव धर्म्मिणि क्रोष्टुत्वक्रोष्ट्रत्वयोः श्रवणप्रसङ्गस्तस्मात्
ष्टुशब्दस्य स्थाने तृजन्तादेश इत्यस्यागत्याङ्गीकारेणान्त
पस्थितौ बाधकाभावः ( गुणतइति ) बाह्यप्रयत्नकृत इत्
( प्रमाणत इति ) कालकृत इत्यर्थः अदसोऽसेरित्यत्र
द्व्यन्यूनकालिकत्वेन ह्रस्वव्यञ्जनयोर्ह्रस्वः,द्विमात्रिकत्वेन
दीर्घ इति बोध्यम् ॥ १३ ॥

नन्तु प्रोढ्वानित्यत्रेति । प्रादूहोढोढ्यनेनोढ्त्वस्
र्वाविशिष्टे परे वृद्धिविधानेनोढ्वच्छब्दघटकोढ्शब्दस्याप
रूपानुपूर्वीविशिष्टत्वेन तस्याग्रहणे प्रमाणाभावेन वृद्ध्या
रित्यर्थः । (अर्थवद्ग्रहणे नानर्थकस्य) अर्थवद्ग्रहणे सम्
सति अनर्थकस्य ग्रहणं न भवतीत्यर्थस्तेन प्रौढ इत्यादा
वदूढशब्दे परे वृद्धिर्जाता प्रोढवानित्यत्र न तत्रोढ्शब्द
नर्थकत्वात् । अयंभावः घटमानय घटमुच्चारयेत्यादौ अ
शब्दस्य च भानादर्थे शक्तिः शब्दे लक्षणेत्यत्र विनिगम
ग्रहात् प्रयोगप्राचुर्य्यस्य शक्तिग्राहकस्य "निर्द्धारयितुमशक्य
व्यवहारस्योभयत्र तुल्यत्वात् "न सोऽस्ति प्रत्ययो लोके
ब्दानुगमादृते" इतिजैमिनिसूत्रादर्थबोधस्थलेऽपि शब्दभा
प्रामाणिकत्वाच्च शब्दे अर्थे च शक्तिरभ्युपगन्तव्या,
नयेत्यादौ घटवाच्यमर्थमानय घटमुच्चारयेत्यादौ घ

विशिष्टरूपोपादाने उपस्थितार्थस्य विशेषणतयार्थबोधकं घटशब्दमुच्चारयेत्येवं क्रमेण बोधः तत्र शब्दविशिष्टे अर्थे, अर्थविशिष्टे शब्दे च शब्दानां शक्तिकल्पने शक्यतावच्छेदके गौरवात्, लाघवात् सर्वेषां शब्दानां स्ववृत्तिश्रूयमाणानुपूर्व्यवच्छिन्ने घटत्वादितत्तद्रूपावच्छिन्ने च खण्डशः शक्तिः कल्प्यते, लोके आनयनादिकार्य्यस्य शब्दे बाधादर्थस्य विशेष्यतया शब्दस्य चार्थे विशेषणतया, शास्त्रे राज्ञो यदित्यादौ मांसपिण्डरूपार्थस्य विशेष्यतया भानासम्भवात् प्रातिपदिकेन सहानन्वयात् प्रत्ययेन पौर्वापर्य्यासम्भवाच्च शब्दस्य विशेष्यतया शब्दे चार्थस्य विशेषणतया बोधस्तथा च तत्तदर्थविशिष्टे परे तत्तत्कार्य्यमितिलब्धे फलितेयमर्थवद्ग्रहणेनानर्थकस्येति परिभाषा। विशिष्टरूपोपादान एषा प्रवर्त्तत इतिवृद्धोक्तेः, अलैवानर्थकेन तदन्तविधिरितिभाष्याच्च, लुनातीत्यादौ लस्य तिवादेशमाशंक्यार्थवत्त्वाभावेऽपि धातोः परत्वाभावेन समाधानकरणपरभाष्याच्च वर्णानामर्थविशिष्टे वर्णे एका शक्तिरपरा च वर्णमात्रे, तथाच शास्त्रे वर्णो यत्र उपात्तो वर्त्तते तत्र लोक इवार्थविशेष्यकबोधे कार्य्याणां बाधादपरा यावर्णमात्रनिरूपिता शक्ति स्तयैव वर्णमात्रस्य बोधो न तु विशिष्टरूपोपादान इवार्थविशिष्टवर्णबोधइत्युक्तभाष्यबलात् कल्प्यतइति तत्रानर्थकस्यापि वर्णस्य ग्रहणं भवति अतएव स्वरूपसूत्रं प्रयोजनाभावात् भाष्ये प्रत्याख्यातम्। अर्थवैशिष्ट्यञ्च शब्दे स्वविषयकबोधजनकत्वेन तात्पर्य्यविषयत्वसम्बन्धेन एतेन बोधकत्वसम्बन्धेनार्थवैशिष्ट्ये यदि बोधकता फलोपधायकताऽर्थात्कार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्य्याधिकरणवृत्तित्वरूपा तदा यदा प्रतिबन्धकवशाद्बोधाभावस्तदा प्रौढ इत्यादावपि वृद्धिर्न

न्वयसम्भवे त्यागे मानाभावोऽस्या मूलम् । अत्रार्थः क-
ल्पितान्वयव्यतिरेककल्पितः शास्त्रीयोऽपि गृह्यत इ-
सङ्ख्यायाः (५.१,२२) इति सूत्रे भाष्ये स्पष्टम् । इ-
वर्णग्रहणेषु नेति लस्य (३.४.७७) इत्यत्र भाष्ये स्पष्ट
अत एवैषा विशिष्टरूपोपादानविषयेति वृद्धाः । एतन्
लकमेव येन विधिः [१.१.७२] इत्यत्र भाष्ये पठ्यते

स्यात्, यदि स्वरूपयोग्यता रूपाऽर्थात् बोधजनकतावच्छेद
नुपूर्वीरूपा तर्हि प्रौढवानित्यत्राप्यानुपूर्व्यास्सत्त्वेन वृद्ध्यापत्ति
रित्यपास्तम् तात्पर्य्यीयविशेष्यतापर्य्याप्तिरूढवच्छब्दघटकोश
ब्देऽभावात् सिद्धान्ते दोषाभावः । यद्यप्यर्थबोधकतालोके
इति समुदायस्यैव नतूढशब्दे तथापि शास्त्रीयकार्य्यनिर्वाहाय
स्त्रप्रामाण्यात्तत्रापि स्वीक्रियत एव तदाह (अत्रार्थःकल्पिता
यव्यतिरेककल्पितःशास्त्रीयोऽपीति) कल्पितौ यावन्वयव्यति
ताभ्यां कल्पितः प्रकृत्यर्थः प्रत्ययार्थश्च यथा प्रौढ इत्य
वहनकर्म्मादिरूपः, यत्र कल्पितावपि तौ न स्तो
यावक इत्यादौ कप्रत्ययाभावे योऽर्थः प्रतीयते स
कप्रत्ययार्थेऽपि, तत्र प्रत्यय इति महासंज्ञाबलेन कप्रत्ययस्य
त्यर्थेनैवार्थवत्त्वं मन्यत इति सोऽपि गृह्यते शास्त्रीयकार्य्या
परश्चैतत्कल्पे गोतोणिदित्यादौ गोपदेन कोऽर्थो विवक्षितो
गोत्वावच्छिन्नस्तर्हि पशुतात्पर्य्येण प्रयुक्ते गामानयेत्या
स्यात् पृथिव्यादितात्पर्य्यके न स्यात् ततश्च लोके यावन्तोऽ
गोपदेन बोध्यन्ते तत्सकलार्थतात्पर्य्यकोऽयं सूत्रस्थो गो
इतिवक्तव्यमन्यथा सर्वत्र वृद्धिर्न्न स्यात्, नच सर्वेऽर्थाःसकृ
च्चरिताद्गोशब्दाद्बोद्धुं शक्याःसकृदुच्चरितन्यायविरोधादिति

लैवानर्थकेन तदन्तविधिरिति। किञ्च स्वं रूपम् [१.१.६८] इति शास्त्रे स्वशब्देनात्मीयवाचिनोऽर्थो गृह्यते रूपशब्देन स्वरूपम् एवं च तदुभयं शब्दस्य संज्ञीति तदर्थः। तत्रार्थो न विशेष्यस्तत्र शास्त्रीयकार्यासम्भवात् किन्तु शब्दविशेषणम्। एवं चार्थविशिष्टः शब्दः संज्ञी-

तिशक्यतावच्छेदकं सूत्रमावर्त्तनीयन्तथाच किरणतात्पर्य्यकाद्गोशब्दात् पृथ्वीतात्पर्य्यकात् गोशब्दात् गोत्वावच्छिन्नतात्पर्य्यकाद्गोशब्दादित्यादिप्रकारेणार्थः कर्त्तव्यो नत्वर्थवाचकाद्गोशब्दादित्येकरूपेण, अर्थत्वेन रूपेणार्थे गोपदशक्तेरभावात् एवं रीत्या नानार्थकस्थले सर्वत्रावृत्तौ गौरवम्। एवं केण इत्यादावर्थविशिष्टे कशब्दे परेइत्यर्थो न स्यात् प्रत्ययजन्यबोधे प्रकृतिसमभिव्याहारस्य कारणत्वादन्यथाऽणादिशब्दादप्यपत्यादिबोधप्रसङ्गात्। यदि तु लौकिके प्रयोगे कशब्दप्रकारककुत्साद्यर्थविशेष्यकबोधस्यैव सत्वेन तादृशबोध एव प्रकृतिसमभिव्याहारस्य कारणत्वं सूत्रे केण इत्यादौ त्वर्थप्रकारकशब्दविशेष्यकबोधस्य सत्वेन च तत्र प्रकृतिसमभिव्याहारापेक्षेत्युच्यते तथापि कार्यतावच्छेदके कशब्दनिष्ठप्रकारतानिरूपितकुत्साद्यर्थनिष्ठाविशेष्यतायाः प्रवेशे गौरवम्। स्वं रूपसूत्रसत्वे तु तेन सूत्रेण शास्त्रघटकशब्दे अपूर्वःसङ्केतो बोध्यते स्वार्थत्वावच्छिन्ने स्ववृत्तिरूपावच्छिन्ने च तथाच गोतोणिदित्यादावर्थविशिष्टस्य गोशब्दस्येत्यर्थेन सर्वत्रार्थे प्रयुज्यमानस्य गोशब्दस्यैकेनैव सूत्रेण कार्य्यप्रवृत्त्याऽऽवृत्तेर्नोपयोगः। केण इत्यादावप्यर्थविशिष्टे कशब्दे परे इत्येवार्थस्तत्र न प्रकृतिसमभिव्याहारस्य कार-

ति फलितम् । तेनैषा परिभाषा सिद्धेति भाष्ये स्पष्टम् ॥१

नन्वेवमपि महद्भूतश्चन्द्रमा इत्यत्रान्महतः [६।
४६] इत्यात्त्वापत्तिरत आह—

## गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ॥१५

— गुणादागतो गौणः । यथा गोशब्दस्य जाड्या-
दिगुणनिमित्तोऽर्थो वाहीकः । अप्रसिद्धश्च संज्ञादि-

णत्वमपि तु कृत्स्नार्थबोध एवेति न विशेषरूपेण कार्यका-
भावकल्पनप्रयुक्तमपि गौरवमिति प्रत्याख्यानं न युक्तमिति
एतदारुचेः प्रत्याख्यानपक्षं प्रथममुपन्यस्यारम्भपक्षमन्ते उपन्य-
स्यति (किञ्चेत्यादिना) शेषं सुगमम् ॥ १४ ॥

नन्वेवमपीति = । अर्थवद्ग्रहणपरिभाषायाःस्वीकारेऽ-
प्यर्थः । ( आत्वापत्तिरिति ) अर्थवत्त्वस्य तत्रापि सत्त्वादि-
भावः । महद्भूतइत्येतद्घटकमहच्छब्दस्य ह्यारोपितमहत्त्ववि-
शिष्ट इत्यर्थोऽभूततद्भावे च्विप्रत्ययात् (गौणमुख्ययोरिति) गौ-
मुख्ययोरर्थयोर्मध्ये मुख्ये एवार्थे कार्यसंप्रत्ययः, मुख्यार्थ-
धके एव शब्दे कार्यप्रवृत्तिरित्यर्थः । ( गुणादागतइति )
णादितिहेतौ पञ्चमी आङ्पूर्वकगमधातोर्ज्ञानमर्थः, क्तप्रत्य-
र्थो विषयताश्रयः, ज्ञानञ्चारोपात्मकं हेतुबोधकपदसान्नि-
गुणपदं गुणज्ञानपरं, तथाच गुणप्रतिसन्धानप्रयोज्यारोप-
विषयताश्रय इत्यर्थः। स्वशक्यतावच्छेदकसमानाधिकरणगुण-
तिसन्धानप्रयोज्यस्वशक्यतावच्छेदकप्रकारकारोपीयविशे-
श्रयोर्थःस्वस्य गौणोऽर्थ इति निष्कर्षः गौर्वाहीक इत्यादौ गो-
शक्यतावच्छेदकं गोत्वं तत्समानाधिकरणं यज्जाड्यमान्द्या-

तद्गुणारोपादेव बुध्यते । मुखमिव प्रधानत्वान्मुख्यः प्रथम इत्यर्थः । गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्या-

तस्य वाहीके संस्काररहीने पुरुषविशेषे ज्ञानाद्गोपदशक्यतावच्छेदकं गोत्वं तत्रारोप्यत इति वाहीको गोपदस्य गौणोऽर्थः । एवं महत्वसमानाधिकरणस्य विशिष्टशिरोवहनकर्म्मत्वस्य चन्द्रे दर्शनात् कलंकिन्यपि चन्द्रे महत्वारोप इति चन्द्रतात्पर्य्यको महच्छब्दः भक्तो गौणार्थकः "गुणादागत इति प्रतीकमादाय तद्वृत्तिगुणसत्ताप्रयोज्यारोपविषयीभूत इत्यर्थः । यथा गोवृत्ति-जाड्यादिगुणसत्ताप्रयोज्यारोपविषयीभूतगोत्वादिरर्थो गौण इति कस्यचित् लिखनमशोभनम् तथाहि तद्वृत्तीत्यशब्दार्थोनुपयुक्तश्च आरोपविषयीभूतगोत्वादिरर्थो गौण इत्यप्ययुक्तं, नहि गोत्वं नाना येनैकं गौणमपरं मुख्यं स्यात् नह्यारोपेण वस्तुभेदः शिष्टानुमत उपपन्नो वा, गुणादागतो गौणः यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीक इति मूलेन वाहीकादेर्धर्म्मिण एव गौणत्वावगमाच्च गौणेह्यर्थे वाहीकादाविति स्व-ग्रन्थविरोधाच्च,जाड्यादिर्गुणो निमित्तंयस्येत्यर्थः । अर्थ इत्यस्य-बोधविषय इत्यर्थः । जाड्यादिगुणप्रयोज्यबोधविषयो वाहीक इत्यर्थः बोधे प्रयोज्यता च प्रवृत्तिनिमित्तारोपद्वारा बोध्या । ( अप्रसिद्धश्च संज्ञादिरपीति ) गौण इतिशेषः । गौणत्वे हेतुमाह ( तद्गुणारोपादेव बुध्यत इति ) यः कश्चित् पुत्रादेः रामेति कृष्णेति वा नाम करोति स रामादि-गतपित्राज्ञापालनकर्तृत्वादिकं पुत्रादावारोप्य तद्धेतो रामत्वा-दिकमारोप्य रामत्वादिना बोधं करोति,तथाच गुणप्रतिसन्धा-नप्रयोज्यशक्यतावच्छेदकप्रकारकबोधविषयत्वरूपगौणत्वस्य त-

र्थारोपेण प्रवर्तते । एवं चाप्रसिद्धत्वं गौणलाक्षणिक
चात्र गौणत्वम् । तेन प्रियत्रयाणामित्यादौ त्रयाणां
भवत्येव तत्र त्रिशब्दार्थस्येतराविशेषणत्वेऽप्युक्तरूपगौ
त्वाभावात् । किं चायं न्यायो न प्रातिपदिककार्ये कि
न्तूपात्तं विशिष्याऽर्थोपस्थापकं विशिष्टरूपं यत्र तादृ

त्रापि समन्वय इतिभावः इयानेव विशेषो यदेकत्रगुणप्रति
न्धानं ममात्मकमपरत्रारोपात्मकमिति ननुसंज्ञानाम शब्दः
णश्चार्थ इति संज्ञादिरपीत्यसङ्गतमिति चेन्न संज्ञयादीतिपाठ
सत्त्वात् संज्ञा आदिः प्रथमो बोधको यस्येति व्युत्पत्या सम
ग् ज्ञायते बोध्यते इतिसंज्ञेति व्युत्पत्या वार्थस्यैवलाभाच्च (
त्वमिवेति ) मुख्यार्थस्य प्राधान्यं गौणे मुख्ये वा सर्वत्र भा
मानत्वात् तदेवोपपादयति ( गौणे ह्यर्थ इत्यादिना ) साम
गौणत्वमुक्तं तच्चाप्यमप्रसिद्धत्वं गौणलाक्षणिकत्वञ्चेति बोध्य
गौणलाक्षणिकत्वन्तु गुणप्रयोज्यलक्षणाविषयत्वं लक्षणा
शक्यतावच्छेदकारोप एवेति बोध्यम् । गौर्वाहीक इत्यादौ आ
रोपितगोत्ववान वाहीकः, गोत्ववान् वाहीक इति वा बोध
त्युभयमप्यसङ्गतम्, गौर्वाहीक इतिबोध एव सम्यक् गोत्व
नित्यत्र संसर्गस्य प्रकारत्वात् मतुपा सम्बन्धिनउल्लेखात् । अ
ह्याब्राह्मण इत्यादौ नञ आरोपार्थकत्वे आरोपितमहत्त्व
एव प्रतीतावप्यारोपस्य गुणहेतुकत्वाभावेनोक्तगौणत्वाभा
दात्वसिद्धिः । ( किन्तूपात्तं विशिष्यार्थोपस्थापकं विशिष्ट
यत्र तादृशपदकार्य एवेति ) उपात्तमित्यस्य सूत्रे उच्चार्य
णमित्यर्थः । विशिष्यार्थोपस्थापकमित्यस्य स्ववृत्तिश्राव
त्यक्षविषयतावच्छेदकधर्मावच्छिन्नबोधकमित्यर्थः । विशिष्ट

पदकार्यं एव । परिनिष्ठितस्य पदान्तरसम्बन्धे हि गौर्वा-
हीक इत्यादौ गौणत्वप्रतीतिर्न तु प्रातिपदिकसंस्कारवे-
लायामित्यन्तरङ्गत्वाज्जातसंस्कारबाधायोगः प्रातिपदिक-
कार्ये प्रवृत्त्यभावे बीजम् । श्वशुरसदृशस्यापत्यमित्यर्थ-
के श्वाशुरिरित्यादावत इञः सिद्धये उपात्तमित्यादि । न
च प्रातिपदिकपदं तादृशमिति वाच्यम् । तेन हि प्रा-
तिपदिकपदवत्त्वेनोपस्थितिरिति तस्य विशिष्यार्थोपस्था-
पकत्वाभावात् । निपातपदं तु चादित्वेनैव चादीनामु-

पमित्यनेन स्ववृत्तिधर्म्म आनुपूर्वीरूप एवेति बोध्यते । तथाच
स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकपदोपादान एव परि-
भाषाप्रवृत्तिरिति बोध्यम् अत इञ इत्यादावत्पदस्य प्रातिपदि-
कपदस्य वोपादानं न तादृशमत्वस्य प्रातिपदिकपदवत्त्वस्य वा-
ऽऽनुपूर्वीरूपत्वाभावात् अत एव गौणेऽपि तस्य प्रवृत्तिः । नच
यद्धर्म्मावच्छिन्ने शक्तिर्गृह्यते तस्यैव तत्पदप्रयोज्यविषयतावच्छे-
दकत्वं प्रातिपदिकपदवत्त्वस्य च तन्न भवितुमर्हति । धातुभिन्न-
त्वादिविशिष्टार्थवत्त्वावच्छिन्ने कृदन्तत्वाद्यवच्छिन्ने च प्रातिपदि-
कपदसङ्केतस्य ग्रहादितिवाच्यम् । पाणिनिसङ्केतस्य तत्तद्धर्म्माव-
च्छिन्ने सत्वेऽपि लाघवानुरोधेन पाणिनिसङ्केतसम्बन्धेन प्राति-
पदिकपदवत्त्वावच्छिन्ने शक्त्यन्तरकल्पनेनादोषात् नच च्यन्ते
गोऽभवदित्यादौ प्रगृह्यसंज्ञावारणायोत्सूत्रे भाष्यकारेण कृता गौ-
णमुख्यन्यायप्रवृत्तिः विरुध्येतौत्पदस्य निपातपदस्य वोक्तरी-
त्याओदन्तत्वाद्यवच्छिन्नविषयताप्रयोजकत्वेन आनुपूर्व्यवच्छि-
न्नविषयताप्रयोजकत्वाभावेन विशिष्टरूपोपादानाभावादित्यत-

पस्थापकमिति तदुद्देश्यककार्यविधायके ओत् (१.१.१
इत्यादावेतत्प्रवृत्त्या गोऽभवदित्यादौ दोषो न। अं
आह (निपातपदन्तु चादित्वेन चादीनामुपस्थापकमित्यादि)
थाच चादित्वस्यानुपूर्वीरूपत्वाद्विशिष्टरूपोपादानमस्तीति
दोषः। ननु चत्वावच्छिन्ने वात्वावच्छिन्ने शक्तिकल्पना
यामपि स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वस्याभाव
इति चेन्न स्ववृत्तित्वं विहायानुपूर्व्यवच्छिन्नेत्यादेरेव
शात्। ननु तथा सति शक्यतावच्छेदकभेदेन शक्तिभेदापत्ते
सर्वधर्म्मावच्छिन्नस्यैकदा बोधाभावप्रसङ्ग इति चेन्न चा
न्यतमत्वावच्छिन्ने शक्तिकल्पनया शक्यतावच्छेदकभेदाभा
शक्तिभेदाभावात् नन्वानुपूर्व्या साक्षादवच्छिन्नमुख्यविशेष्य
ताप्रयोजकपदोपादानं विशिष्टरूपोपादानमिति वक्तव्यमन्य
प्रातिपदिकवृत्तिविषयतायाः प्रातिपदिकत्वरूपानुपूर्व्या साक्षा
वच्छिन्नत्वेन प्रातिपदिकपदवत्त्वावच्छिन्नमुख्यविशेष्यतायाः
रंपरया आनुपूर्व्यऽवच्छिन्नत्वेन च प्रातिपदिकपदोपादानस्य
विशिष्टरूपोपादानत्वापत्तिरुक्तनिवेशे तु आद्यविषयताया मु
विशेष्यतात्वविरहात् अन्त्यायास्साक्षात्तदवच्छिन्नत्वाभावान्न
षः तथाच निपातपदस्य चाद्यन्यतमत्वावच्छिन्नबोधकत्वाङ्गी
रेऽपि तत्पदीयमुख्यविशेष्यतायाश्चत्वाद्यानुपूर्व्या साक्षादवच्छि
न्नत्वविरहात् चत्वादिना शाक्षादवच्छिन्नायाश्च मुख्यवि
ष्यतात्वाभावात्प्रातिपदिकस्येवास्याप्युपादानं न तादृशं, सा
दवच्छिन्नत्वं स्वावच्छिन्नत्वस्वावच्छिन्नावच्छेदकतानि
तावच्छेद्यत्वाभाववत्त्वोभयसम्बन्धेन स्वविशिष्टत्वं, मुख्यत
विशेष्यतायां प्रकारत्वासामानाधिकरण्यं किञ्च निपातपद
प्रातिपदिकपदेऽपि घटाद्यन्यतमत्वावच्छिन्ने शक्त्यापत्ति

षोमौ माणवकावित्यत्र प्रसिद्धदेवताद्वन्द्ववाच्यग्नीषोमपदस्य तत्सदृशपरत्वे ऽन्तरङ्गत्वादीत्वषत्वे भवत एव। घटादीनामानन्त्याच्चादीनाञ्च परिसंख्यातत्वान्नायं दोष इति वाच्यं चादेरपि आकृतिगणत्वेन उभयोः साम्यादिति चेदत्र वदन्ति अतत्सूत्रस्थभाष्यप्रामाण्यात् निपातपदस्य स्वाश्रयनिरूपितसङ्केतवत्त्वसम्बन्धेन निपातत्वरूपानुपूर्वीविशिष्टे शक्तिः कल्प्यते तथाच निपातपदप्रयोज्यमुख्यविशेष्यतानिरूपिता स्वाश्रयसङ्केतवत्त्वसम्बन्धावच्छिन्ना साक्षादवच्छेदकता निपातत्वरूपानुपूर्वीनिष्ठेति विशिष्टरूपोपादानत्वमुपपन्नं, प्रातिपदिकपदे च स्वनिरूपितसङ्केतवत्त्वसम्बन्धेन प्रातिपदिकपदविशिष्टे शक्तिरिति मुख्यविशेष्यता प्रातिपदिकपदेनैव साक्षादवच्छिना तत्वानुपूर्व्येति न तत्र विशिष्टरूपोपादानमिति दिक्। पदकार्य्यत्वञ्च, विभक्त्यनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वम्। अत्रायः औतोम्शसोः गोतोणिदित्यादीनां विभक्तिनिमित्तकत्वेन पदकार्य्यत्वाभावान्न तत्रैतस्याः प्रवृत्तिः, जानपदकुण्डेतिङीषः स्त्रीत्वनिमित्तकत्वेन पदकार्य्यत्वाभावात् गौणेऽपि प्रवृत्तिरत एव कौमुद्यां गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त उदाहरणमित्युक्तम्। पदकार्य्ये प्रवृत्तौ बीजमुक्तं (परिनिष्ठितस्य पदान्तरेत्यादिना) अनेन यदा गौणत्वप्रतीतिस्तदैतत्परिभाषया कार्य्याभाव इति सूचितन्तेन च प्रातिपदिकसंस्कारवेलायां गौर्वाहीक इत्यादौ अग्नीषोमौ माणावकावित्यादौ च न गौणत्वप्रतीतिरिति नैतत्परिभाषाप्रवृत्तिर्य्यदि च तत्रापि कदाचित्प्रातिपदिकसंस्कारवेलायामेव गौणत्वप्रतीतिस्तर्हि गौणमुख्यन्यायः प्रवर्त्तेत एवात एवाग्निसोमौ माणवकाविति भाष्यं सङ्गच्छते; एतत्फ-

सदृशलाक्षणिकाग्निसोमपदयोर्द्वन्द्वे तन्नामकाविसर्थेः नेत्वषत्वे आद्ये गौणलाक्षणिकत्वादन्त्येऽप्रसिद्धत्वात्। तएवाग्निसोमौ माणवकावित्यत्र गौणमुख्यन्यायेन वारणपरम् अग्नेः स्तुत्स्तोमसोमाः (८.३.८२) इति ऋस्थं भाष्यं सङ्गच्छते । गाम्पाठयेत्यादौ मुख्यगोपदस्य पाठनकर्मत्वासम्भवेन विभक्त्युत्पत्तिवेलायां

लितमेव पदकार्यं अयन्न्यायो न प्रातिपदिककार्ये नु विभक्त्यनिमित्तकत्वांशस्यैतत्फलितत्वेऽपि ङीत्वांशे त्तकत्वांशे किं प्रमाणमिति चेन्न,जानपदेतिसूत्रे नागग्रहणे प्रमाणत्वादन्यथा गजवाचिनागशब्दात् मुख्यत्वे जातेर नैव ङीषि सिद्धे तस्य वैयर्थ्यापत्तेरुक्तांशज्ञापने तु चारितार्थ्यमिति न वैयर्थ्यम्, नच तत्रापिजातेरित्येवां मारोपितगजत्वजातिप्रकारेणैव तत्र बोधादिति वाच्यं स्वसा धिकरण्यस्वनिष्ठप्रकारतानिरूपितत्वोभयसम्बन्धेन जाति ष्टविशेष्यताकबोधजनकत्वरूपजातिवाचकत्वाभावात्, नतु भक्त्यनिमित्तकत्वांशो न फलितः, गां पाठयेत्यादौ कर्म य पाठनाक्रियान्वयस्य विभक्त्युत्पत्तिवेलायामेवावश्यकत्वेन ख्यगोपदार्थस्य पाठनान्वयासम्भवाद्गौणार्थकत्वस्य त्वादित्यतआह (गांपाठयेत्यादावेिति )( अपदस्यामप्रयोगे द्भिस्सर्वत्र पदस्यैन गौणार्थकत्वग्रहेणेति ) अयंभावः, रणानन्तरमेवार्थप्रतीतिरुच्चारणन्तु पदस्यैवापदस्य प्रयुञ्जी भाष्यात, तथाच पदत्वासिद्ध्युत्तरमेव श्रोतुर्गौणार्थक इति यदा श्रोतुर्गौणार्थकत्वग्रहसम्भवस्तदैव गौणमुख्यन्या प्रवृत्तिरितिकल्पनात् प्रयोक्तुः पूर्वं गौणार्थकत्वग्रहेऽपि न

क्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थकत्वस्य ग्रहेणात्वंत्वं सम्पद्यते। अमहान् महान् भूतस्त्वङ्कवतीत्यादिभाष्यप्रयोगे त्वाद्यादेशदीर्घा दीनांकरणेन चास्य न्यायस्य पदकार्यविषयत्वमेवोचितम्। अन्यथा वाक्यसंस्कारपक्षे तेषु तदन्ना-

भाषाप्रवृत्तिरिति अग्निसोमावित्यादावप्यग्निः सोमः इत्यादौ द्वन्द्वात् प्रागपि श्रोतुर्गौणार्थकत्वग्रहस्सम्भवतीति तत्रापि न्यायप्रवृत्ति, यदि द्वन्द्वोत्तरं तथा प्रतीतिस्तर्हि ईत्वषत्वेभवत एवेति फलितमेव विभक्त्यनिमित्तककार्य्ये प्रवृत्तिरिति। वस्तुतस्तु प्रयोक्तुरेव प्रयोगनिमित्तज्ञानं वक्तुर्युक्तमिति तस्यैव मुख्यार्थतात्पर्य्ये शास्त्रप्रवृत्तिर्गौणार्थतात्पर्य्ये शास्त्राप्रवृत्तिरित्येव कल्पना ज्यायसीति अग्नीषोमावित्यादौ तात्पर्य्यग्रहसमयभेदेन कार्यतदभावौ सिद्धौ तथाच न फलितमिदं विभक्तिनिमित्तककार्य्ये न प्रवृत्तिरिति गां पाठयेत्यादौ विभक्त्युत्पत्तिवेलायामेव गौणार्थतात्पर्य्यस्यावश्यकत्वादित्यरुचेराह (अत्वं त्वं सम्पद्यते इत्यादीति) तथाचैतद्भाष्यप्रामाण्यादुक्तरूपे पदकार्य्ये एव परिभाषाप्रवृत्तिरिति, अत्वं त्वं, सम्पद्यत इत्यत्र च्वि प्रत्ययो वैकल्पिकत्वान्न भवति, एवममहान्महान् भूत इत्यत्रापि बोध्यम्। परन्तु आरोपितसम्बोध्यत्वादिप्रकारेणैव बोधाद्गौणत्वमस्तीतिभावः (त्वाद्यादेशदीर्घादीनामिति) त्वं सम्पद्यत इत्यत्र त्वाहौ सावित्यनेन त्वादेशः, अयुवा युवा बुध्यते अयूयं यूयं बुध्यन्ते इत्यादौ युवादेशादेरादिपदेन संग्रहः दीर्घादीत्यादिना, त्वङ्कवतीत्यादौ प्रत्ययोत्तरपदयोश्चेत्यस्य संग्रहः तत्रापि विभक्तावित्यनुवृत्त्या पदकार्यत्वाभा-

पत्तिः । किञ्च शुक्लामित्युक्ते कर्म निर्दिष्टं, कर्तृ
चानिर्दिष्ट इत्याद्युक्त्वेहेदानीं गामभ्याज कृष्णां देव
त्यादौ सर्वं निर्दिष्टं गामेव कर्म देवदत्त एव कर्ता
भ्याजैव क्रियेत्यर्थकेनार्थवत्सूत्रस्थभाष्येण कारक
मात्रप्रयोगे योग्यसर्वक्रियाध्याहारे प्रसक्ते नियमार्थः
यावाचकादिप्रयोग इत्येतत्तात्पर्यकेण सामान्यतः क्रि
जन्यफलाश्रयत्वमात्रविवक्षायां द्वितीयादीनां साधु
न्वाख्यानमित्यर्थलाभेन पाठनक्रियान्वयकाले पदं

वोऽत एवान्तरङ्गानपि विधीन्बाहिरङ्गो लुग्बाधत इत्येतज्ज्ञा
प्रत्ययग्रहणेन सङ्गच्छते अन्यथा युष्मच्छब्दाणिं
आदेशार्थं तस्यावश्यकत्वेन ज्ञापकत्वस्यासङ्गत्या
( अन्यथेति ) विभक्तिनिमित्तककार्य्येऽपि परिभाषाप्र
त्त्वित्यर्थः । ननु त्वाद्यादेशकरणेन पदं संस्कृत्या
ङ्क्षावविवक्षायां जातसंस्कारस्य बाधायोगेन नैते
एकतरपक्षेण लक्ष्ये सिद्धे पक्षान्तरेण दोषदानस्या
दित्यरुचेराह ( किञ्चेति ) शुक्लामित्युक्ते कर्म्मानिर्दिष्ट
दिर्भाष्येण सामान्यतः क्रियाकर्म्मत्वविवक्षया द्विती
स्साधुता भवतीत्यस्य लाभेन गौणस्थलेऽपि मुख्यार्थे एव
यःकर्म्मत्वादिविवक्षया पदं संसाध्य पश्चाद्गौणार्थविवक्षा
क्तुरपि भवतीत्यर्थः स्पष्टमेव लभ्यते, तेन फलितमेवं
र्य्ये अयं न्यायो न प्रातिपदिककार्य्ये इति । अग्नीषोमौ
सोमावित्युभयोर्दर्शनात् क्वचिद् द्वन्द्वं कृत्वा गौणार्थवि
क्वचित् पदे एव गौणार्थविवक्षां कृत्वा द्वन्द्वकरणमिति

गौणार्थत्वप्रतीतिः प्रयोक्तुरपि। एवमेतन्मूलकः "अ-
भिव्यक्तपदार्था ये" इति श्लोकोऽपि पदकार्यविषयकः।
ध्वनितं चेदं सर्वादीनि (१.१.२७) इति सूत्रे संज्ञाभू-
तानां प्रतिषेधमारभता वार्त्तिककृता पूर्वपरेति[१.१.३४]
सूत्रेऽसंज्ञायामिति वदता सूत्रकृताऽन्वर्थसंज्ञया तत्प्रत्या-
ख्यानं कुर्वता भाष्यकृता च। अर्थाश्रय एतदेवं भवति
बलेन कल्प्यत इति विभावयन्तु सुधियः "कर्त्ता क्रिया चानि-
र्दिष्टे इति पुमान्स्त्रियेतिसूत्रेण पुम्बोधकस्यैव शेषेण निर्दिष्टा-
विति युक्तम् गामेव कर्म्मेति गामित्येतत्पदवाच्यमेवेत्यर्थः।
केचित्तु पदात्परत्वव्याप्यविषयताप्रयोजकशास्त्रविहितं कार्य्यं प-
दकार्य्यमिति वदन्ति आन्महत इत्यात्वमीत्वषत्वे च भवति
तथाभूतमिति तत्र न्यायः प्रवर्त्तते, त्रेस्त्रयः औतोम्शसोरित्या-
दिशास्त्रं च न तथाभूतमिति न तत्र परिभाषाप्रवृत्तिस्तदीयायाः
कस्या अपि विषयतायाः पदात्परत्वव्याप्याया अभावात्।
सुबन्तादेव तद्धितोत्पत्त्या तद्धितनिष्ठायास्तस्यास्तथाभूतत्वेन
अत इञ इत्यादेःपदकार्य्यत्वसिद्धिः। (एतन्मूलक इति) गौणमु-
ख्यन्यायमूलकइत्यर्थः। (अभिव्यक्तेति) अभिव्यक्तपदार्था ये
स्वतन्त्रालोकविश्रुताः शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्ति-
ष्विति श्लोकः, (ध्वनितश्चेदमिति) गौणमुख्यन्यायस्य पदका-
र्य्यविषयकत्वं ध्वनितमित्यर्थः,अन्यथाऽनेनैव न्यायेन संज्ञायां
सर्वनामत्वाद्यप्राप्तौ तदर्थः प्रयासो विफलः स्यादाचार्याणा-
मितिभावः।(महासंज्ञयेति)संज्ञाशास्त्राणां विधिनिमित्तनिमित्तक-
त्वेन सर्वादीनि सर्वनामानीत्यस्य विभक्तिनिमित्तकत्वात्पद-
कार्यत्वाभावः (आरभतेति) अनुदात्तेत्त्वलक्षणमात्मनेपदम-

शब्दाश्रये च वृद्ध्यात्वे इति ओत्सूत्रस्थभाष्यस्य
किकार्थवत्त्वयोग्यपदाश्रय एष न्यायस्तद्रहितशब्द
च ते इत्यर्थः। गोतः (७.१.९०) इति यथाश्रुत
विशिष्टरूपोपादानसत्त्वेनोक्तरीत्यैव तस्य भाष्यस्य
ग्र्येयेत्वादित्यलम् ॥ १५ ॥

अर्थवद्ग्रहणे इत्यस्यापवादमाह—

## अनिनस्मन्ग्रहणान्यर्थवता चानर्थके
## न च तदन्तविधिं प्रयोजयन्ति ॥ १६ ॥

नित्यमित्यभिप्रायेण श्रुता, आरभमाणेनेति तु
ननु गौर्वाहीकः गां पाठयेत्यादौ गौणमुख्यन्यायेन
त्वयोरप्राप्तिमाशंक्य अर्थाश्रये एतदेवं भवति शब्दाश्रये
वृद्ध्यात्वे इति समाधानस्य भाष्ये करणेन प्रातिपदि
यत्वेन परिभाषाप्रवृत्तिवारणमसङ्गतमित्यत आह "लौ
कार्थवत्त्वेति" लौकिकार्थवत्त्वस्य पदे एव सत्त्वेन अर्था
त्यस्य पदाश्रय इत्यत्र तात्पर्य्यं, शब्दाश्रय इत्यस्य
किकाश्रय इत्यत्र तात्पर्यमितिभावः। यथाश्रुतार्थकत्वे
णिदितिसूत्रन्याससत्त्वे विशिष्टरूपोपादानसत्वादर्थोप
वृद्ध्यात्वयोरप्यर्थाश्रयत्वेन परिभाषावारणस्याशक्यत्वा

तदन्तविधिं प्रयोजयन्ति = ते अन्ता येषान्तानि त
नि तेषु विधिस्तम्, अर्थवता अनर्थकेनेत्यभेदे प्रकृत्यादि
तृतीया तत्पदार्थे तस्यान्वयः। अथवा लक्ष्यस्थमनादि
स्वान्ते विधिं प्रयुङ्क्ते करोति तेन सूत्रस्थानि प्रयोजयन्ति

येन विधिः (१.१.७२) इत्यत्र भाष्ये वचनरूपेण पठितैषा। तेन राज्ञा साम्नेत्यादावल्लोपो दण्डी वाग्मीत्यादाविन्हन् (६.४.१२) इति नियमः सुपयाः सुस्रोता इत्यादौ अत्वसन्तस्य (६.४.१४) इति दीर्घः सु-

विवक्षया प्रयोज्यकर्त्तरि तृतीया बोध्या,अनिति प्रकृतिभाववाधनार्थं:कार्म्मस्ताच्छील्य इतिनिपातनमेकदेशानुमत्याऽस्यां ज्ञापकमन्यथाऽनर्थकत्वात् कार्मे इत्यत्र प्रकृतिभावाप्राप्त्या नस्तद्धित इत्येव सिद्धे:तद्वैयर्थ्यं स्पष्टमेव,राज्ञेत्यत्रान् अर्थवान्,उणादीनामव्युत्पन्नत्वे सुजम्भ्न इत्यनिजन्तेऽर्थवदुदाहरणम्बोध्यम्। अथवा अनधातोः क्विप्यान्शब्दादपत्येऽणि आन्न इत्यादाववानितिप्रकृतिभावःस्यान्नत्वनर्थक इतिबोध्यम्। दण्डीत्यत्रेन् अर्थवान् वाग्मीत्यत्रानर्थकः। सुपया इत्यत्रास् अर्थवान,अव्युत्पत्तिपक्षे प्रजामाचष्टे इत्यर्थे णिचि टिलोपेक्किपिणिलोपेच तदन्तबहुव्रीहावासांच सप्रजा इत्युदाहर्तव्यम्। सुश्रोता इत्यत्र श्रुधातोरसिप्रत्ययस्तस्य तुडागमेनागमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वेनास्अनर्थकः नतु यदागमन्यायेनासपदेनागमसहितस्यासोग्रहणेन तस्य चार्थवत्त्वेनानर्थकोदाहरणमयुक्तम् नच निर्दिश्यमानस्यासो ग्रहणेन तस्यानर्थकत्वमेवेतिवाच्यम् अस्पदोत्तरषष्ठ्यभावेन तस्या अनुपस्थानात् निर्दिश्यमानपरिभाषया अर्थवदसन्तीवयवास्पदीयनिर्दिश्यमानावयवस्योपधाभूतस्य दीर्घ इत्यर्थस्यैव सत्वेन निर्दिश्यमाने अर्थवत्त्वस्यानन्वयाच्च नचोणादीन्यव्युत्पन्नानीतिदृष्ट्या श्रोतसित्यस्यैवार्थवत्वेनासोऽनर्थकत्वमितिवाच्यन्तथासति सुपया इत्यत्राप्यनर्थकस्यैवासस्सत्वेनार्थवदुदाहरणदानासङ्गत्यापत्तेरितिचेन्न श्रुधातोर्विचि गुणे श्रो इति तस्मात्पञ्चम्यन्तात्तसिप्रत्यये श्रोतसिति तदनुकरणस्य सुश-

शर्म्मा सुप्रथिमेत्यादौ मन्‌: (४.१.११] इति ङिप्‌
धश्च सिद्धः । अन्ये तु परिवेविषीध्वमित्यत्र दत्व
त्तये क्रियमाणादिणः षीध्वम् [८.३.७८] इत्यत्राङ्ग
णादर्थवत्परिभाषाऽनित्या तन्मूलकमिदमित्याहुः । कि

ङ्गेन बहुव्रीहौ सुश्रोता इत्यत्रासोऽनर्थकत्वमित्याशयात् (
शर्मेति ) अत्र मन्नर्थवान् ( सुप्राथिमेति ) अत्रेमनिच्प्रत्य
वयवस्य मनोऽनर्थकत्वम्बोध्यम् । शोभनः प्राथिमाऽस्या
अनित्यनर्थकस्य ग्रहणादनोबहुव्रीहेरित्येव सिद्धे अनर्थ
मनोग्रहणेनैतदुदाहरणं युक्तं, न सुप्राथिमाऽसुप्राथिमेति
ह्युत्तरपदकनञ्तत्पुरुषे उदाहरणमितिपरे । अनोबहुव्रीहे
त्र बहुव्रीहिपदेन प्रातिपदिकस्य विशेषणात् तदन्तविधि
तत्रापि सिद्धे प्रथिमानमतिक्रान्ता अतिप्राथिमेत्युदाहरण
तमित्यपरे । केचित्तु सुप्राथिमेत्यादौ अनोबहुव्रीहेरित्यस्य
राज्ञीत्यत्रेव बाधेन पक्षे अन उपधालोपिन इतिङीवापत्ति
र्थकस्य मनोग्रहणे तु मन इत्यनेन बाध्यसामान्यचिन्त
तस्यापि बाध इत्यनर्थकस्य मनो ग्रहणे फलं सम्यगेवेत्या
वस्तुतः सुगरिम्नीतनूमसुकनाम्नीमितिप्रयोगदर्शनात्
इत्यस्यापि अन उपधेत्यत्र बाधकमित्यातिप्रथिमेत्येव यु
त्यम्वाकर्त्री । सुगता प्रथिमानं सुप्राथिमेतिनवीनाः । (
वेविषीध्वमिति ) परिपूर्वकाज्जौहोत्यादिकाद्विषधातोर्विधि
सीयुडागमे सकारलोपे द्वित्वेऽभ्यासगुणे परिवेविषीध्व
साधुः । असधातोर्विधिलिङि कर्म्मव्यतिहारे आत्मनेपदं
तिषीध्वमित्यत्रार्थवतः षीध्वमः सम्भवेन तत्र मूर्धन्यवि
याङ्ग्रहणस्य चारितार्थ्यात् ज्ञापकासङ्गतिरिति तु न

षेटः [८.३,७९] इत्यत्रानर्थकस्यैव षीध्वमः सम्भवाद-त्रापि तस्यैव ग्रहणमिति भ्रमवारणायाङ्गादिति परे ॥१६॥

ननु उश्च [१.२.२१] इत्यत्र लिङ्सिचौ[१.२११) इत्यत आत्मनेपदेष्विवत्येव सम्बध्येतानन्तरत्वादत आह—

एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ॥ १७ ॥

वाशब्दएवार्थे। परस्परान्वितार्थकपदानां सहैवा-नुवृत्तिनिवृत्ती इत्यर्थः। एककार्येनियुक्तानां बहूनां लो-के तथैव दर्शनादिति भावः। यत्त्वत्र ज्ञापकं नेड्वशि

तत्रोपसर्गप्रादुर्भ्यामितिविहितषत्वस्यासिद्धत्वेन षीध्वमोऽभा-वेनाङ्गग्रहणस्य चारितार्थ्याभावात् आगमसमभिव्याहारे तद्वि-शिष्टस्यैवार्थवत्त्वेनेटः परस्य षीध्वमोऽर्थवत्त्वासम्भवात्तत्रार्थवत्प-रिभाषाबाधेऽप्यत्र बाधे मानाभावादङ्गग्रहणं ज्ञापकमेवेतिदिक्।

एकयोगनिर्दिष्टानामिति =। एकस्मिन् योगस्सम्बन्धस्तेन निर्दिष्टानामेकान्वितानामित्यर्थः। यथा क्त्वेअन्वितानां लि-ङ्सिजात्मनेपदानामितिबोध्यम्। एतदेवाह (परस्परान्वितार्थ-कपदानामिति) स्वप्रयोज्यविषयतया साक्षात्परम्परया वा नि-रूपिता या विषयता तत्प्रयोजकानामित्यर्थः। योगपदं कार्य-परमितिकेनचिदुक्तं न युक्तं योगशब्दस्य कार्यपरतायाः क्वाप्य-दृष्टत्वादनन्वयाच्च, एकत्रार्थे योगस्सम्बन्ध इति मूलेन विरो-धाच्च। एतेषामेव क्वचित्सहानुवृत्तिनिवृत्ती क्वचिदेकदेशानुवृत्ति-रितिपरिभाषाद्वयेनोच्यते। अतएवैतत्पदस्यैवार्थोऽयमेवाग्रिमपरि-

(७.२,८] इत्यत इडित्यनुवर्तमान आर्द्धधातुकस्येट्[… ३५] इत्यत्र पुनरिड्ग्रहणं तद्धि नेत्यस्यासम्बन्धार्थ… तन्न, दीधीवेवीटाम् (१.१.६.) इति सूत्रे भाष्ये … स्येड्ग्रहणप्रत्याख्यानायेड्ग्रहणेऽनुवर्त्तमाने पुनरिड्ग्र… स्येटो गुणरूपविकाराभावार्थकत्वस्योक्तत्वेन तद्विरो… त्। नञो निवृत्तिस्तु क्वचिदेकदेशोऽप्यनुवर्त्तत… न्यायेन सिद्धा। वस्तुतस्तु दीधीवेवीटाम् (१.१.… इति सूत्रस्थ भाष्यमेकदेश्युक्तिः । आर्द्धधातुकस्य(७.… ३५) इतिसूत्रस्थेड्ग्रहणस्य नेड्वशि (७.२.८] इति … भाष्ये प्रत्याख्यानात् । तत्करणेन गुरुतरयत्नमाश्रि… त्प्रत्याख्यानस्यायुक्तत्वात् ॥ १७ ॥ नन्वलुगधि… प्रागानङ उत्तरपदाधिकारः प्रागङ्गाधिकारादित्यनु… ज्ञमेकयोगनिर्दिष्टत्वात् । तथा दामहायनान्ताच…

भाषाव्याख्यावसरेऽपि एकत्रार्थे योगस्सम्बन्धस्तेन निर्दि… रित्यक्षरेण कृतः, पुनरर्थकरणं समुदायाभिधायिद्वन्द्वनिर्दि… रित्यर्थस्य कैयटोक्तस्य खण्डनार्थम् । अतएवाग्रे कैयट… क्तम्। द्विवचननिर्देशस्तु बहुवचनस्याविवक्षाबोधनार्थः।… रान्वितार्थकं क्वचित्पदत्रयं, क्वचित्पदद्वयं सर्वं ग्राह्यमितितात्प… (तद्विरोधादिति) इदमुपलक्षणं सूत्रारम्भसामर्थ्यान्नञो नि… ज्ञापितायां स्वांशे चारितार्थ्याभावादित्यपि बोध्यम् ।… कजिज्ञासायां तु ईदूदेद्द्विवचनं प्रगृह्यमित्यत ईदूदित्ये… त्रानुवृत्त्यैव सिद्धावेकारानुवृत्त्यर्थं क्रियमाणमदसोमादि…

१.२७] इत्यादौ सङ्ख्याव्ययादेः (४.१.२६) इत्यतः सङ्ख्यादेरित्यनुवर्त्ततेऽव्ययादेरिति निवृत्तमिति चानुपपन्नमत आह—

## एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्त्तते ॥ १८ ॥

एकत्वार्थे योगः सम्बन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थ इति पक्षात्तिः [५.२.२५] इति सूत्रे कैयटः। तावन्मात्रांशे स्वरितत्वप्रतिज्ञाबलाल्लभ्यमिदम्। स्पष्टाचेयं दामहायनान्ताच्च [४.१.२७] इति सूत्रेऔतोऽम्शसोः [६.१.९३] इति सूत्रे च भाष्ये पूर्वो च ॥ १८ ॥

माद्ग्रहणमेव, ज्ञापितायान्त्वाधायायामेकारानुवृत्तिनिरासाय चरितार्थम्,लिङ्सिचावित्यतः सिज्ग्रहणानुवृत्त्यैव सिद्धौ हनः सिच इत्यत्रत्यं सिज्ग्रहणञ्च ज्ञापकम्। दामहायनान्ताच्चेत्यत्र संख्यादेरितिवक्तव्यमितिवार्तिकप्रत्याख्यानमेकदेशस्यापि संख्याव्ययादेर्ङीवित्यतःसंख्यादेरित्यस्यानुवृत्त्या कृतमस्याया अभावे अव्ययस्यानुवृत्तये संख्यादेरित्यस्याप्यनुवृत्तेः प्रत्याख्यानासङ्गतिः स्पष्टैवेति बोध्यम् ( कैयट इति ) अनेनारुचिस्सूचिता अलुगुत्तरपदे इत्यवतरणभाष्याविरोधादौतोम्शसोरित्यत्राऽचिश्नवामित्यत्रात्वाप्रवृत्त्यर्थं वासुपीत्यतो वेतिनिवृत्तं सुपीत्यनुवर्त्तत इति भाष्यविरोधाच्च उभयत्र समासस्याभावात् १८

ननुत्यदादीनामः [७.२.१०१] इत्यादिनेमाकि
दावनुनासिकः स्यादत आह—

भाव्यमानेन सवर्णानां ग्रहणं न॥१

अणुदि [१.१.६९] त्सूत्रे ऽप्रत्यय इत्यनेन साम
त्सूत्रेण प्राप्तं जातिपक्षेण प्राप्तं गुणाभेदकत्वेन च
नेत्यर्थः । अत एवाणुदित्सूत्रे प्रत्ययादेशागमेषु स

इमावित्यादौ त्यदादीनाम इत्यनेनानुनासिकाकारस
धानेऽपि ऐचोऽनुनासिकस्याभावेन शुद्धस्यैवौकारस्य
चीत्यनेन विधानात्, इमे इत्यत्र परस्येकारस्य द्विमात्र
तत्सदृशगुणकस्यैव विधानेन दोषाभावेन द्विवचनाद्य
कवचनस्य प्राथम्याच्च द्वितीयैकवचनान्तमवतरणम् ।(
व्यमानेन सवर्णानां ग्रहणन्नेति ) कर्त्तरि तृतीया, ग्रहण
भावे प्रत्ययः, ननु भाव्यमानं विधेयभूतं लक्ष्यस्थं तेन स
ग्रहणं न प्रसक्तं सूत्रे एवाणुदित्सूत्रप्रवृत्तेर्लक्ष्ये सवर्णग्राह
या अनुपयोगाच्च तत्र निषेधो व्यर्थ इतिचेन्न, वोध्यवोधक
भेदेन भाव्यमानपदेन विधेयताप्रयोजकपदस्य ग्रहणात् ।
पदे सवर्णग्राहकतायां वोधकत्वसम्बन्धेनाणहेतुरण्वोधक
पदं सवर्णग्राहकमित्यणा वोधकत्वसम्बन्धेन पदे सता ह
पदेन सवर्णग्रहणम्भवति । भाव्यमानेन विधेयभूतेन तेन
ना सवर्णानां ग्रहणन्न भवतीति परिभाषार्थस्तथाच हे
तृतीया विधेयवोधकमेव भाव्यमानपदमिति वोध्यम् ।(
त्यय इत्यनेनेति; अस्य वोध्यत इत्यनेनान्वयः । (नेत्यर्थ
अस्य वोध्यत इति शेषः । अयम्भावः, अणुदित्स
चाप्रत्यय इत्यत्राप्रत्यय इति पृथक् योगः, प्रत्ययः

ग्रहणाभावं प्रकारान्तरेणोक्त्वा• एवं तर्हि सिद्धे यदप्रत्यय इति प्रतिषेधं शास्ति तज्ज्ञापयति भवत्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहणं नेति । किञ्च ज्याद ईयस इत्येवान्तर्यतो दीर्घे सिद्धे ज्यादात् [६.४.१६०] इति दीर्घोच्चारणमस्या ज्ञापकम् । अणुदित्सूत्रे ज्यादादिति सूत्रे च भाष्ये स्पष्टैषा । चोः कुः (८.२.३०) इत्यादौ

र्णग्राहको नेत्यर्थः। यदिचायं सूत्रप्राप्तस्यैव निषेधस्तदा योगविभागो व्यर्थस्तत्सामर्थ्यात् प्रदर्शितप्रकारत्रयेण प्राप्तम्वार्यते परन्तु तावतापि व्यर्थमेवेहल्यघोरित्यनेन ह्रस्वेकारकरणेनैव ग्राहकसूत्रबलेन दीर्घे सिद्धे ईकारकरणात्, ज्यादादीयस इत्यत्रअदादेशेनैव ग्राहकशास्त्रबलेन दीर्घे सिद्धे दीर्घोच्चाणाच्चादेशे, इड्विधानेनैवाणुदित्सूत्रबलेन दीर्घस्यापि विधिसिद्धौ वृतोवेतिसूत्रारम्भसामर्थ्यादागमे, अनभिधानात्प्रत्यये, सवर्णाग्रहणे सिद्धे अप्रत्ययग्रहणम्व्यर्थमेवेति सामर्थ्यादनेनैवाप्रत्ययगृहणेनैकदेशानुमत्येयं परिभाषा ज्ञाप्यते, भाव्यमानस्य प्रत्ययागमादेशरूपांशत्रयात्मकत्वादिति भावः । ननु नेदमप्रत्ययगृहणमुक्तपरिभाषाज्ञापकमपि तु प्रतीयते विधीयत इतिव्युत्पत्या प्रत्ययपदस्य वाच्यार्थ एव परिभाषार्थः अथवा प्रत्ययस्यैवागृाहकत्वमागमादीनामित्येत्र सामर्थ्यात् कुतो न कल्प्यत इत्यत आह ( अतएवाणुदित्सूत्र इति ) ( प्रकारान्तरेणेति )• उक्तप्रकारेणेत्यर्थः, ज्ञापयतीति, एकदेशानुमत्या वोधयतीत्यर्थः। वाच्यार्थत्वे नैवं वदेदितिभावः ( नेत्यर्थ इति ) भाष्ये उक्तमिति शेषः। अतैवाणुदित्सूत्र इत्यस्यान्वयः । उक्तभाष्यस्य वाच्यार्थपरतयापि कथञ्चिज्ज्ञाप-

भाव्यमानेनापि सवर्णग्रहणम् विधेये उदिदुच्चारण
सामर्थ्यात् । एतन्मूलकमेव भाव्यमानोऽण्सवर्णान्न
हृणातीति नव्याः पठन्ति ॥ १९ ॥

नागूहे आह ( किञ्चेति ) इदं भाष्यं परिभाषार्थस्याप्रत्य
दूवाच्यत्वे विरुद्धेदितिभावः । तेन च प्रत्ययसंज्ञक
इतिसिद्धम् । ज्ञापितायामप्यस्यां कथं दीर्घोच्चारणं सा
रितार्थं ह्रस्वाकारविधानेपि सवर्णदीर्घेण रूपसिद्धे अत्र
बाधकम्भविष्यतीति वाच्यं लोपग्रहणमनुवर्त्येकारस्य लो
धानेनैव सिद्धेऽकारविधानसामर्थ्येन पररूपस्याप्रवृत्त्या
र्घसिद्धेरितिचेन्न लोपेऽकृत्सार्वधातुकयोरितिदीर्घापत्त्या
विधानस्य पररूपे सत्यपि व्यर्थत्वाभावात् नचाङ्गकार्ये
परिभाषया अकृदितिदीर्घाभाव इति वाच्यन्तस्या भाष्ये
क्ष्यसंस्काराय क्वाप्यनाश्रयणात् । ननु धृष्णुयेत्यत्र दीर्घ
णायाकृदित्यत्र ङ्कितीत्यस्यानुवृत्तेरावश्यकतया लोपे दी
भाव इति चेदत्रोच्यते अकारविधानसामर्थ्येन पररू
कल्पेताहोस्विदाविकृताकार एव श्रूयते इति वा कल्पे
विनिगमकाभावेनाकारविधानस्यावश्यकत्वात्, किञ्चा
विधित्सया दीर्घोच्चारणं पाणिनिना कृतन्तदनुपपन्नं ह्रस्व
णेनापि ग्राहकसूत्रबलेनाऽऽकारविधिसम्भवेन दीर्घोच्चा
कप्रयत्नस्यानुपयोगात् तस्मात्परिभाषाज्ञापने ह्रस्वकरणे
र्घविधानस्याशक्यत्वात्तदर्थं दीर्घोच्चारणमावश्यकमिति ना
पन्नं दीर्घोच्चारणमेतदेव स्वांशे चारितार्थ्यं नाम येनानुपपद्ये
ङ्चिज्ज्ञाप्यन्तेन ज्ञापितेन सानुपपत्तिरवश्यं परिहरणी
अकारविधानमेवास्तु दीर्घेण रूपसिद्धिर्भविष्यतीदन्त्वन्यद
व किं समाधानमितिचेत्पूर्वोक्तमेव गृहाणेत्यलम् । ननु क्वो

रिभाषार्थः । न तावत् विधेयताप्रयोजकं पदं स्वस्वर्णग्राहकम्नेत्यर्थः, त्यदादीनाम इत्यत्र विधेयताप्रयोजकमेति पदन्तत्स्वसवर्णस्य शुद्धह्रस्वाकारस्यापि दीर्घानुनासिकयोरिव ग्राहकत्वस्यात्विति तत्सूत्रस्यैव वैयर्थ्यापत्तिः, यदि च स्वबोध्यसवर्णग्राहकत्वमित्यर्थस्तथापि स एव दोषः स्वबोध्यो ह्रस्वोऽकारस्तत्सवर्णस्य एवं, यदि त्व स्वबोध्यविशिष्टग्राहकम्नेत्यर्थः, वै० स्वभिन्नत्व स्वसवर्णत्वोभयसम्बन्धेन, स्वस्मिन् स्वाभिन्नत्वाभावान्न दोष इत्युच्यते तथापि जातिपक्षे स्वबोध्यो दीर्घोऽपि सानुनासिकोऽपि तद्विशिष्टत्वमुक्तसम्बन्धाभ्यां शुद्धह्रस्वाकारे तस्याग्रहणस्यापरिहार एव, एवं स्वबोध्य एको ह्रस्वोऽकारस्तद्वैशिष्ट्यमपरस्मिन् तादृशेऽकारे तस्याग्रहणापत्तौ स इत्यत्र स्यात्, एप इत्यत्र न स्यात्, अत्रोच्यते विधेयताप्रयोजकं पदं स्वविशिष्टग्राहकम्नेत्यर्थः वै० स्वसवर्णत्व–स्वावृत्तिधर्म्मवत्त्वोभयसम्बन्धेन त्यदादीनाम इत्यत्र स्वमेति तद्विशिष्टस्सानुनासिको दीर्घश्च तत्र स्वसवर्णत्वस्य स्वावृत्तिधर्मोऽनुनासिकत्वं दीर्घत्वञ्च तस्य च सत्वात्तयोर्ग्रहणाभावः शुद्धह्रस्वाकारे च स्वावृत्तिधर्म्मवत्त्वस्याभावान्न दोषः, नचैवं तत्पुरुषीयत्व तत्कालिकत्वादयः स्वावृत्तयो धर्म्मास्तद्वत्त्वस्य तत्रापि सत्वात् स दोषो दुरुद्धर इतिचेन्न श्रावणप्रत्यक्षाविषयतावच्छेदकस्यैव धर्म्मस्य ग्रहणेन तेषां धर्म्माणामतादृशत्वेन दोषाभावात् नच तद्व्यक्तित्वन्तथाविधन्तदादाय दोषानिस्तार इति वाच्यं तदतिरिक्तत्वेनापि धर्म्मस्य विशेषणात् नचाननुगम इति वाच्यं भेदाविशिष्टान्यत्वेनानुगमसम्भवात् वै० स्वप्रतियोगिवृत्तित्व स्वसामानाधिकरण्योभयसम्बन्धेन बोध्यम् नचैवमपि स्वावृत्तयो धर्म्मास्तादृशा उदात्तत्वस्वरितत्वादयस्तद्वतामपि ग्रहणन्न स्यात् तथाच वृक्षेभ्य इत्यादावुदात्तानुदात्तयोःस्थान्यन्तर-

तभयोर्विधानन्न स्यादिष्यते तु गुणानामभेदकतया सवे
दात्तादीनामेकाराणाम्विधानमिति वाच्यं स्वरत्वव्याप्य
तरत्वस्यापि निवेशनीयत्वात् अथवा स्थानप्रयत्नजन्यताव
दकस्यैव धर्म्मस्य निवेशस्तत्पुरुषीयत्व–तद्व्यक्तित्वादय
तथेति न तादृशधर्म्ममादाय दोषः स्वरत्वव्याप्यधर्मेतरा
त्रापि दृयमेव तेषामपि तादृशजन्यतावच्छेदकत्वात्,
वमपीकोयणचीत्यादौ दोष एव तत्र विधेयताप्रयोजकं य
तत्सवर्णाप्रसिद्ध्या विशिष्टस्याप्रसिद्धत्वेन परिभाषाया
अवृत्या सानुनासिकयोर्यकारवकारयोरपि विधानापत्तेर्न
बोध्यविशिष्टानिवेशाद्दोष इतिवाच्यन्त्यदादीनाम इत्यत्र
तिपक्षे स्वबोध्यो दीर्घस्तद्विशिष्टो ह्रस्वस्तस्याग्रहणापत्ते
वाच्यं,यतः स्वतादात्म्य–स्वनिष्ठशक्तिनिरूपकतावच्छेदक
दायघटकत्वबत्वैतदन्यतरसम्बन्धेन स्वविशिष्टो यस्तद्वि
स्य ग्राहकं विधेयताप्रयोजकं पदन्न भवतीत्यर्थः,अन्त्ये
ष्टं पूर्ववदेव बोध्यम् तादात्म्यनिवेशात् त्यदादीनाम इत्या
दोषोद्वितीयसम्बन्धनिवेशादिकोयणचीत्यादौ न दोषोऽवि
शिष्ट्यनिवेशफलन्तु पूर्वमुक्तमेवेति सुधियो विभावयन्तु॥
नन्वेवमिति,भाव्यमानस्य सवर्णाग्राहकत्वे,इत्यर्थः,ननु उभ
ति ह्रस्वदीर्घयोस्समाहारद्वन्द्वेन तत्रोभयोर्विधानासिद्धिरतए
मुध्यामुक्तं ह्रस्वदीर्घयोस्समाहारद्वन्द्व इति चेन्न उश्चऊश्चेतिस
रद्वन्द्वे घित्वात् ह्रस्वस्य पूर्वनिपाते नपुंसकह्रस्वत्वदीर्घत्वयो
श्चावपरनिमित्तकत्वेनान्तरङ्गत्वात् ह्रस्वे पश्चात् सवर्णदीर्घे
लक्षणन्यायेन पुनर्ह्रस्वाप्रवृत्तौ दीर्घस्यैव श्रवणापत्तेः, दि
ति,तपरकरणं हि दीर्घव्यावृत्यर्थमेतत्परिभाषाया असत्वे तु
स्य पूर्वपरिभाषयाऽविधानासिद्धेस्तद्वैयर्थ्यं स्पष्टमेव;नच
पि स्वांशे चारितार्थ्याभावः,सवर्णग्राहकत्वेपि वकारस्य

नन्वेवम् अदसोऽसेः (८.२.८०) इत्यादिना ऽमू इत्यादौ दीर्घविधानं न स्यादत आह—

भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति ॥२०॥

नो द्विमात्रान्यूनकालिकत्वेनान्तरतम्याद्ध्रस्वस्यैव प्रवृत्तेः, न तु च्छ्वोश्शूडिति सूत्रे ङ्कितीत्यस्याननुवृत्तेः द्युभ्यामित्यादौ परत्वात् पूर्वमूठि आन्तरतम्यात् दिव उदित्यनेन प्राप्तस्य दीर्घस्य वारणार्थं, दिबुधातोः क्विपि ऊठि भ्यामि द्युभ्यामित्यादौ ह्रस्वार्थश्च तपरत्वं चरितार्थमिति चेन्न प्रतिपद्विधित्वेन पूर्वं दिव उदित्यस्यैव प्रवृत्तेः, निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषया दिबुधातोः क्विप्यप्रवृत्तेश्चेति वाच्यं दिवमिच्छतीत्यर्थे क्यजन्तात् क्विप्यल्लोपयलोपयोरूठि भ्यामि द्युभ्यामित्यादौ ह्रस्वार्थं तस्यावश्यकत्वात्, नचोठि अल्लोपस्य स्थानिवत्त्वं, क्वौ विधिं प्रतीति निषेधात् नचोत्वे तस्य स्थानिवत्त्वेनापदान्तत्वादुत्वाभावः स्थानिभूतादचः पूर्वत्वेन दृष्टस्य कार्याभावात् कार्यं हि उकारस्य सच नस्थानिभूतादचः पूर्वत्वेन दृष्टः स्थानिवत्सूत्रेण तु तथा दृष्टत्वमलभ्यमशास्त्रीयत्वात्पूर्वत्वादिघटितस्यातिदेशाभावाच्च (ऋतउदिति ) नच तपरत्वं सूत्रान्तरप्राप्तदीर्घस्याप्यभावार्थमत एव पितूराज्यमित्यादौ दीर्घोसाधुत्वमितिवाच्यम् उरणपर इतिसूत्रस्थे ऊरपरइतिभाष्यप्रयोगे सवितूरस्रयो यथेति रामायणप्रयोगे च दीर्घदर्शनात् अक्षरमर्यादयाऽलाभाच्च सूत्रान्तरप्राप्तस्य तस्येष्टत्वात् । अत्रकेचित् इयं परिभाषा सूत्रकारानभिमता, ह्रस्वोकारकरणेनाप्यान्तरतम्यात् दीर्घे सिद्धे ऊदुपधायागोह इत्यत्रोदिति दीर्घोच्चारणस्य सूत्रकृतो वैयर्थ्यापत्तेः, भाष्यकारानभिमता च कथमन्यथा ऊदिति प्रश्लिष्टस्य गोह इति वि-

दिव उत् (६.१.१६१) ऋत उत् (६.१.

इति तपरकरणमस्या ज्ञापकम् । तित्स्वरितम् (६.१.

इति सूत्रे भाष्ये स्पष्टैषा ॥ २० ॥

कृतनिर्देशः प्रत्याख्यातः ह्रस्वोकारकरणेनापि परिभाष
दीर्घसिद्ध्या विकृतनिर्देशस्य प्रत्याख्यानसम्भवेन प्रश्ले
कल्प्यापत्तेरित्याहुः तन्न दोषोणावित्यत्र दुषोणावित्यसं
वचत्वेन तत्र दीर्घविधानार्थत्वेनोत्तरार्थत्वात् नच ह्रस्वो
त्त्युक्तावपि परिभाषया दीर्घसिद्धिः,तक्रन्यायेन गुणं
त्वाऽऽन्तरतम्याद्ध्रस्वस्यैव विधानापत्तेर्न्नच ह्रस्वस्य
धानमप्यर्थं, गुणबाधनार्थत्वात्, नवा भाष्यविरोधः
निर्देशाभावे ह्रस्वोकारकरणे तक्रन्यायेन गुणं बाधित्वा
इत्यादावान्तरतम्याद्ध्रस्वविधानापत्तेः दीर्घप्रश्लेषे तु
र्थ्यात्तक्रन्यायाप्रवृत्त्या पूर्वं गुणे आन्तरम्याद्दीर्घसिद्धि
प्रश्लेषस्सार्थकः,नच ह्रस्वकरणे ह्रस्वस्यैव विधाने नाप्य
चीत्यस्याग्रे गुहश्चेतिकरणेन गुह उपधाया गुणो नेत्यर्थेन
भावोपपत्तौ ह्रस्वविधानसामर्थ्यात् तक्रन्यायबाधेन गुणे
न्तरतम्याद्ध्रस्वकरणेऽपि दीर्घविधानसिद्धौ दीर्घप्रश्लेषा
स्तदवस्थैवेति वाच्यम् गुहधातोर्णिजन्ताल्लुङि अजुगूहदि
गुपधागुणेऽनेन प्रतिपदोक्तत्वाद्ध्रस्वात्पूर्वं दीर्घोकारे विधा
र्थ्यात् णौ चङ्युपधाया ह्रस्व इति ह्रस्ववारणेन दीर्घप्रश्लेष
र्थक्यात् वस्तुतस्तु नैतत्परिभाषायाः फलन्नचाम् इत्य
विधानं फलम्, अदसोऽसेरितिसूत्रे ह्रस्वदीर्घयोस्समाहार
पि तत्सिद्धेः नच निर्देशासङ्गतिः सूत्रत्वाद्दीर्घे कृते ह्रस्व
रितिकल्पनया निर्देशोपपत्तेरिति दिक् ॥ २० ॥

ननु गवे हितं गोहितमित्यादौ प्रत्ययलक्षणेनावाद्यादेशापत्तिरत आह—

## वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥२१॥

वर्णप्राधान्यविषयमेतत् तत्त्वं च प्रत्ययलोपे (१.१.६२) इति सूत्रे स्थानिवत् (१.१.५६) इत्यनुवृत्त्यैव

ननु गवे हितं गोहितमित्यादौ प्रत्ययलक्षणेनेति। ननु नलुमताङ्गस्येत्यनेन लुमच्छब्देन लुप्तप्रत्ययनिमित्तकं कार्यमङ्गस्य नेत्यर्थकेनात्रप्रत्ययलक्षणाभावान्न दोष इत्यवतरणासङ्गत न्नचाङ्गत्वावच्छिन्नोद्देश्यताककार्य्यस्यैव तेन निषेधात्प्रकृते न दोषोऽवादेशस्याङ्गत्वावच्छिन्नोद्देश्यताकत्वाभावादिति वाच्यं फलाभावेन तादृशनिवेशस्याभावात् नचावादेशयोद्देश्यताया अङ्गपर्य्याप्तत्वाभावादङ्गपर्य्याप्तोद्देश्यताककार्य्यस्यैव तेन निषेधोऽत एवोत्क्रामेत्यादौ हेर्लुकि प्रत्ययलक्षणेन परस्मैपदपरकाशित्परकक्रमेरचो दीर्घोऽन्यथाऽपर्य्याप्त्या तत्राप्यचत्वावच्छिन्नोद्देश्यतायाअङ्गवृत्तित्वेन निषेधापत्तिरिति वाच्यं शब्दानित्यत्ववारणायाजव्यवहितपूर्वत्वविशिष्टस्यैज्घटितस्योच्चारणप्रसङ्गेऽयादिघटितस्साधुरित्यर्थावश्यकत्वेन एज्घटितगोशब्दरूपेऽङ्ग एवोद्देश्यतायाः पर्य्याप्तत्वादिति चेदत्रोच्यते शब्दानित्यत्ववारणायैवमर्थकरणे केशवोऽत्रेत्यादावप्यजव्यवहितपूर्वस्यैज्घटितस्य केशवशब्दस्यापि प्रसङ्गेऽय्घटितस्य तस्य साधुत्वापत्त्याऽजव्यवहितपूर्वो य एच् तद्घटितस्योच्चारणप्रसङ्गे अयादिघटितस्साधुरित्येवार्थः कर्तव्यः तथाचैचोऽजव्यवहितपूर्वत्वाभावेन न दोषः। नलुमताङ्गस्येत्यनेन च लुमता लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नाङ्गपर्य्याप्तोद्देश्यताककार्य्यस्यैव निषेधः

पूर्वोक्तार्थे तु दधि मध्वित्यादावपि सुप्तिङन्तपदमितिपदसं
निषेधापत्तिस्तस्या अपि लुप्तप्रत्ययनिमित्तकत्वाऽङ्गपर्याप्त
श्यताकत्वयोः सत्वात्, तथाचाङ्गपर्य्याप्तोद्देश्यतायां एज
तानिष्ठाया लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नत्वाभावात्
ष्ठायास्तस्याश्चाङ्गपर्य्याप्तत्वाभावात्प्रकृते न प्रत्ययलक्षणं
इत्यवतरणं सम्यगेव, नचैज्घटितनिष्ठाया अप्युद्देश्यतायाः
रया लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नत्वादवतरणासङ्ग
साक्षादवच्छिन्नत्वानिवेशे फलाभावादिति वाच्यं सुप्त्या
दौ क्रमत्वावच्छिन्नाया अङ्गपर्य्याप्तायाः परंपरया लुप्त
यपरस्मैपदाव्यवहितपूर्वत्वेनावच्छिन्नत्वेन निषेधापत्त्या
दवच्छिन्नत्वनिवेशस्यावश्यकत्वात् नच केशवोऽत्रेत्यादौ
नाजव्यवहितपूर्वत्वविशिष्टस्यैजन्तस्योच्चारणप्रसङ्गेऽयावन्त
धुरित्येवार्थः क्रियते तथाचाङ्गपर्य्याप्ताया एजन्तत्वाव
विषयताया लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छि
नावतरणासङ्गतिरेवेति वाच्यम् गोरग्रवचनं स्वरसि
मिति वार्त्तिकरीत्या गवाग्रमित्यादौ गोशब्दस्यागाग
अइतिस्थिते आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थ
मित्यनुसारेण गोशब्दस्यानर्थकत्वात्तस्यार्थवोधनाय
स्यैताभावेनावादेशानापत्तेरजव्यवहितपूर्वत्वविशिष्टेय
तद्घटितस्येत्युक्तौ तु अच् अकारस्तदव्यवहितपूर्वत्व
ष्ट एच् ओकारस्तद्घटितस्यार्थवतो गोअइत्यस्योच्चारण
ऽवघटितस्य गवेत्यस्य साधुत्वेनादोषात् नचैवमपि
जरसन्यतरस्यामित्यस्य जराशब्दान्तं यदङ्गन्तदवयव
रापदीयानिर्दिश्यमानस्याजादिप्रत्ययाव्यवहितपूर्वस्य
त्यर्थेन निर्जरपुत्र इत्यादौ प्रत्ययलक्षणेन जरसादेशापत्ति
र्य्याप्तोद्देश्यताया लुप्तप्रत्ययाव्यवहितपूर्वत्वेनावच्छिन्नत्वा

त्वात् नलुमताङ्गस्येत्यस्याप्राप्तेरिति वाच्यम् अङ्गपर्य्याप्तध-र्म्मेण साक्षात् परंपरया वाऽवच्छिन्ना या लुप्तप्रत्ययाव्यवहित-पूर्वत्वेन साक्षादवच्छिन्नोद्देश्यता, तन्निरूपककार्य्यन्नेत्यर्थक-रणेन निर्दिश्यमानत्वावच्छिन्नोद्देश्यता याऽस्ति तस्याः परंपर-याऽङ्गपर्य्याप्तधर्म्मेण, साक्षाल्लुप्तप्रत्ययाव्यवहितपूर्वत्वेन चाव-च्छिन्नत्वात्तामादायैव निषेधप्रवृत्तेः, यदि चाङ्गवृत्तिर्या षष्ठ्यन्त-दप्रयोज्या विषयता लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छि-न्ना तन्निरूपकं कार्य्यन्नेत्यर्थः,उत्क्रामेत्यादौ च परस्मैपदेन साक्षा-दवच्छिन्नायास्सप्तम्यन्ताशितृपदप्रयोज्यविषयतायाः षष्ठ्यन्तप-दप्रयोज्यत्वाभावेन निषेधाप्रवृत्तिः प्रकृते त्वचेत्पदप्रयाज्यायाः विषयतायाः षष्ठ्यन्तपदप्रयोज्यत्वस्य लुप्तप्रत्ययाव्यवहितपूर्व-त्वेनसाक्षदवच्छिन्नत्वस्य च सत्वेन निषेधादवतरणमसङ्गतमि-त्युच्यते तदा चित्रायायाता चित्रेत्येवावतरणं वोध्यम्। नन्वन्त-रङ्गानपि विधीन् वहिरङ्गोलुग्वाधत इतिन्यायेनेत्संज्ञालोपाभ्यां प्रागेव लुकि प्रत्ययलक्षणेन ङेवुद्धिरेव स्यान्नत्वेवुद्धिरित्यच्-परत्वाभावेनावादेशाप्राप्तेरवतरणमसङ्गतमेव, ननु सूत्र एवेत्सं-ज्ञालोपयोः कृतयोरनुबन्धविनिर्म्मुक्तस्यैव लक्ष्यस्थत्वेन लुकि प्रत्ययलक्षणेनाच्परत्वं सूपपादमिति चेन्न लुक्प्रयोजकसमा-सादीनामपि तेन न्यायेन प्रावल्यवोधनादित्संज्ञालोपयोर्लुक्-प्रयोजकसमाससम्भावनायां पूर्वमप्रवृत्तेरत एव गोमत्प्रिय इत्यादौ पदान्तरसापेक्षसमासात्पूर्वमपि गोमत्प्रकृतिकसोर्हल्ङ्यादिलो-पो नेति चेन्न, हेवारे इतिभाष्यप्रयोगात्संज्ञापेक्षया लुकः प्रा-वल्यावोधनात् कथमन्यथा सम्वुँद्धिसंज्ञायां कृतायां लुकि प्रत्य-यलक्षणेन सम्वुँद्धिगुणस्तत्र। नन्वस्तूक्तभाष्यात् सम्वुद्धिसंज्ञा-याः पूर्वं प्रवृत्तिरित्संज्ञालोपयोः पूर्वं प्रवृत्तौ वीजाभाव इतिचेन्न धर्म्मिग्राहकमानेन लाघवेन च साधुत्वविधायकशास्त्रापेक्षयैव

लुकः प्राबल्यबोधनात् संज्ञाशास्त्रेण, तस्य लोप इतिशास्त्रेण कस्यचित् साधुत्वम्बोध्यत इति स्पष्टमेव, नन्वेतादृशविशेषांशकत्वे फलाभाव इति चेद्धेवार इत्यस्यैव फलत्वसंभवात् संज्ञापेक्षया प्राबल्यं न बोध्यत इत्यपेक्षया साधुत्वविधायपेक्षया प्राबल्यं बोध्यत इत्येतत्कल्पनायामेव लघुत्वात् एव ञित्स्वरविधौ प्रत्ययलक्षणप्रतिषेधो वक्तव्य इतिवाचरितार्थं गर्गा विदा इत्यादौ यञो लुकि प्रत्ययलक्षणेनत्स्वरप्राप्तौ तत्प्रतिषेधार्थं हि वार्त्तिकमित्संज्ञातः पूर्वं लुकिराप्राप्तौ तद्वैयर्थ्यापत्तेः, लुकि न स्थानिवदित्यप्यत एव चारिन्तार्थं पञ्चेन्द्राण्योदेवता अस्य पञ्चेन्द्र इत्यादौ द्विगोपत्य इत्यणो लुकि लुक् तद्धितलुकीत्यनेन ङीषो लुकि सयोगशिष्टानामिति परिभाषयाऽऽनुको निवृत्तौ कर्त्तव्यायां लुकः स्थानिवद्भावेनान्यतरापायाभावादानुको निवृत्त्यप्राप्ते स्थानिवत्त्वनिषेधार्थं, लुकि लुप्तन्न स्थानिवदिति तदर्थंज्ञालोपाभ्यामपि पूर्वं लुकि अज्मात्रस्थानिकादेशाभावान्निवत्त्वाप्राप्तौ तद्वैयर्थ्यापत्तिः, किञ्च प्रत्यय इतिमहासंबोधकस्यैव प्रत्ययत्वेन लोके ङकाररहितस्यैवै इत्यस्य कत्वेन प्रत्ययसंज्ञा स्यान्नतु ङे इत्यस्य प्रत्ययादर्शनस्यैव क्पदार्थत्वेन प्रत्ययत्वसंपादनद्वारेत्संज्ञालोपयोरुपजीन लुका बाधाभाव इति दिक्। परेतु गवेहितमितिवद्गोहित्यादाववादेशापत्तिरित्यर्थः गावौ हितौ यस्य तद्गोहित समास इति नकोऽपि दोष इत्याहुः (वर्णाश्रये नास्ति प्रत्ययलक्षणमिति) वर्णं आश्रयो निमित्तय्यँस्येत्यर्थः। ननु वर्णोद्देश्यककार्ये कर्त्तव्ये प्रत्ययलक्षणसूत्रन्न प्रवर्त्तते इत्यहि त्रेधा इत्यादौ ससजुषोरुरितिरुत्वे कर्त्तव्ये प्रत्ययपदत्वानापत्तौरुत्वस्य वर्णाश्रयत्वादिति चेन्न प्रत्यासत्

सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्येतराविशेषणत्वरूपं यत्र प्राधान्यं तत्रैव प्रवृत्यर्थमित्येतत्सिद्धम् । वर्णप्राधा-

प्रत्ययवृत्तिवर्णत्वव्याप्यधर्म्मावच्छिन्नोद्देश्यताके कार्य्ये इत्यर्थात्, ननु तावतापि तत्रैव दोषस्सत्वस्य लुप्तप्रत्ययवृत्तित्वादिति चेन्न लुप्तप्रत्ययवृत्तिर्या वर्णत्वव्याप्यधर्म्मावच्छिन्ना विषयता तन्निरूपके कार्य्ये इत्यर्थेनादोषात् प्रकृते तादृशविषयताया अभावात्, तत्त्वञ्च परिभाषारूपञ्चेत्यर्थः परंत्वस्मिन्नर्थे त्वप्रत्ययोऽयुक्तः तच्चेत्येव वक्तुर्म्युक्तम् वस्तुतस्तु तत्त्वंचेत्यस्य सारांशस्त्वित्यर्थः। अयम्भावः यथाऽन्यत्र किञ्चिज्ज्ञापकम्भवति ज्ञापनोत्तरं स्वांशे चारितार्थ्यं भवति तथा प्रकृते नास्ति किन्तु तत्तत्पदमहिम्ना प्रत्ययलोपसूत्रस्यैव तथाऽर्थोऽस्ति येन वर्णाश्रये न प्रवृत्तिर्भवतीति, तल्लक्षणमित्येवासिद्धे प्रत्ययपदस्वारस्यात् प्रत्ययत्वव्याप्येतिवक्ष्यमाणोर्थः, स्थानिवदित्यनुवृत्यैव सिद्धे प्रत्ययलक्षग्रहणात् प्रत्यये प्राधान्यलाभः, प्रत्यस्येतराविशेषणत्वमिति) ननु यद्यदि इतरनिष्ठविशेष्यतानिरूतप्रकारत्वानाश्रयत्वरूपं तदा गोहितमित्यादावेज्निष्ठविशेष्यतानिरूपिताव्यवहितपूर्वत्वावच्छिन्नप्रकारताश्रयत्वेन लुप्तप्रत्ययस्य प्राधान्याभावात्प्रत्ययलक्षणाभावेऽपि हे दीर्घाहो निदाघेत्यादौ प्रत्ययलक्षणेनासुपीतिनिषेधानापत्त्या रत्वेनोत्वानापत्ति लुप्तप्रत्ययस्योक्तप्राधान्याभावात् दधि मध्वित्यादौ प्रत्ययलक्षणेन सुप्तिङन्तमितिपदत्वानापत्तिश्च सुपः प्राधान्याभावात् सखेत्यादावनङ्घभावश्चेत्तिचेन्न वर्णत्वव्याप्यधर्म्मावच्छिन्नविशेष्यतानिरूपितप्रकारतानाश्रयत्वस्य प्रत्ययप्राधान्यपदार्थत्वात् तस्य च गोहितमित्यादौ चित्रायांजाता चित्रेत्यादौ चाभावान्न प्रत्ययलक्षणम् नच ह्रस्वस्य पिति कृतीति तुक् कु-

न्यं च वर्णस्येतराविशेषणत्वरूपं प्रत्ययनिरूपितवि
ष्यतारूपं च,तेन गोहितमित्यादावव्वादि ने चित्रायां
दित्यादौ न स्यात् प्रत्ययस्य प्राधान्याभावेन प्रत्ययलक्ष
वृत्तेरिति वाच्यं ह्रस्वान्त एव प्रत्ययस्यान्वयात् किञ्चावय
सम्बन्धावच्छिन्नप्रकारताभिन्नप्रत्ययत्वव्याप्यधर्म्मावच्छिन्न
विषयताश्रयत्वं प्रत्ययप्राधान्यं अणो योऽकारस्तदन्तात्प्राति
कान्ङीवित्यर्थात् चित्रायां जाता चित्रेत्यादौ तादृशप्रकार
न्नविषयता नास्ति, गोहितमित्यादौ एकारनिष्ठविषयता
प्रत्ययत्वव्याप्यधर्म्मावच्छिन्नत्वाभाव इति प्रत्ययप्राधा
भावः ( वर्णप्राधान्यञ्च इतराविशेषणत्वरूपमिति) यदीतर
ष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वं तर्हि गोहितमित्या
न्निष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वेन प्राधान्याभावा
धानापत्तिः यदीतरपदेन प्रत्ययस्य ग्रहणात् प्रत्ययत्वव्या
धर्म्मावच्छिन्नविशेष्यतानिरूपितप्रकारतानाश्रयत्वं तत् त
नैव चित्रेत्यादौ वर्णस्य प्राधान्यात् प्रत्ययनिरूपितविशेष्य
पञ्चेतिलक्षणान्तरस्य वैयर्थ्यमितिचेदत्रोच्यते इतरपदेनाव
वी गृह्यते ततश्चावयविनिष्ठविशेष्यतानिरूपितप्रकारतान
त्वमितराविशेषणत्वमित्यस्यार्थः, तच्च गोहितमित्यादा
चित्रेत्यादौ चावयिवी प्रातिपदिकन्तन्निष्ठविशेष्यतानि
तप्रकारताश्रयत्वस्यैवाकारे सत्वेन प्राधान्यानापत्या प्रत्य
रूपितविशेष्यतारूपमुक्तम् । यदि प्रत्ययत्वव्याप्येत्यादिवि
वोभयत्र प्राधान्यसिद्धौ प्रत्यनिरूपितेत्यादिलक्षणान्तरं व
र्थ्यमित्युच्यते तर्हीष्टापत्तिः,मित्रशीः अतृणेडित्यादौच वर्णप्र
न्याभावान्न प्रत्ययलक्षणानिषेधः,भाष्यकारमते प्रत्ययल
न्नियमार्थमेव स्थानिवत्सूत्रेण सर्व्वत्र निर्व्वाहात् मित्रशीः

त्ता चित्रेत्यादावणोयोऽकारस्तदन्तान्ङीविति ङीप्च न। इयमल्विधौ स्थानिवत्त्वाप्राप्तावपि प्राप्तस्यप्रत्ययलक्षणविधेर्निषेधिकेति स्पष्टं भाष्ये॥ २१॥

ङित्यादावीत्वादेर्हलादित्वनिमित्तकस्य विशेषणतयाऽल्विधित्वात्स्थानिवत्त्वेन यद्यपि न निर्व्वाहस्तथापि तत्रोपायान्तरस्य शब्दरत्ने उक्तत्वात् तन्मते गोहितं चित्रेत्यादावनल्विधाविति निषेधेन स्थानिवद्भावाप्राप्तिरेव, ननु नियमशास्त्राणां स्वमते विधिमुखेनैव प्रवृत्त्या गोहितमित्यादौ प्रत्ययलक्षणन्दुर्व्वारमिति तदर्थं वर्णाश्रय इति परिभाषाऽऽवश्यकीतिचेन्न तल्लक्षणमित्येव सिद्धे प्रत्ययग्रहणस्य प्रत्ययत्वव्याप्यधर्म्मस्य यत्राश्रयणं तत्रैवेदं सूत्रं प्रवर्तत इत्यर्थेन गोहितमित्यादौ प्रवृत्त्यभावात् नच तथाप्यण्सम्बन्ध्यकारत्वस्य प्रत्ययत्वव्याप्यत्वेन चित्रेत्यादौ प्रत्ययलक्षणप्राप्त्या परिभाषा मन्तव्येति वाच्यमेकपदेन प्रत्ययत्वव्याप्यस्य यत्राश्रयणमित्यर्थेन तस्यैकपदोपात्तत्वाभावात् तदाह (इयमल्विधौ स्थानिवत्त्वाप्राप्तावपीति) तथाच वार्तिकमते मित्रशीः अतृणेडित्यर्थं सूत्रस्यावश्यकत्वेन गोहितमित्यादावपि प्रत्ययलक्षणापत्त्या वर्णाश्रय इति मन्तव्येति भावः, मित्रशीरित्यादावुपायान्तरन्तु भाष्यकृदूहितन्न वार्त्तिककारोहितम्, ननु वार्त्तिकमतेऽपि प्रत्ययत्वव्याप्यधर्म्माश्रय मेव कार्यं प्रत्ययलोपे सतिभवतीत्येवार्थस्सूत्रस्य कर्त्तव्यः प्रत्ययलोपे तल्लक्षणमित्येव सिद्धे प्रत्ययग्रहणात्, तथा च मित्रशीरित्यादौ कथं प्रत्ययलक्षणमीत्वादौप्रत्ययत्वव्याप्यस्यानाश्रयणात् नच हलादिप्रत्ययत्वं तथा तस्य तथात्वेऽपि एकपदोपात्तत्वाभावात् इति चेन्न प्रत्ययत्वव्याप्यविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्म्माश्रयं कार्यमेव प्रत्ययलोपे सतिभवतीत्यर्थस्यैव तन्मते प्रत्ययग्रहणेन बोध-

ननु अतः कृकमि (८.३.४६) त्यत्र कमि
सिद्धे कं सग्रहणं व्यर्थमत आह—

उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥

इदमेवास्या ज्ञापकमिति कैयटादयः कंसेस्तु
सोऽनभिधानात्। प्रत्ययस्य लुक् (१.१.६१) इत

नात् तथाच तत्र हलादित्वस्य तथाभूतत्वेनादोषात् सुदृषत्
इत्यादौ वार्त्तिकमते दोष एव अस्त्वस्यातथात्वेनैतत्
प्तावपि स्थानिवत्सूत्रप्राप्तिसत्वादत एव भाष्यकारेण
नियमफलमुक्तम् वार्त्तिकमतेऽपि तत्र दूषणोद्धारः शब्
दावुक्तः तत्रैव द्रष्टव्यइत्यलम् ॥

कमिग्रहणेनसिद्धेइति = विष्वग्देवयोश्चेतिसूत्रे
ग्रग्रहणेन धातुग्रहणेऽपि तदादिविधिज्ञापनात्कमादयु
पर इत्यर्थेनायस्कंस इत्यस्य सिद्धावित्यर्थः, (उणादयोऽ
न्नानि प्रातिपदिकानि) उणाद्यन्ततदादीनि अव्युत्पन्नानि
तिप्रत्ययविभागशून्यानीत्यर्थः। यथाश्रुतन्तुन युक्तमुणा
त्ययमात्रस्य प्रातिपदिकत्वाभावात् ननु तावतापि उणा
तदादीनि प्रकृतिप्रत्ययविभागशून्यानीति विरुद्धमेवेति
गोणाद्यन्ततदादित्वेन शाकटायनाभिप्रेतानि वस्तुतः
तिप्रत्ययविभागशून्यानि, उणाद्यन्तानि प्रकृतिप्रत्ययवि
योज्यपाणिनिसूत्रप्रवृत्त्यनर्हाणीति वाऽर्थात् (इदमेवेति)
पमेवेत्यर्थः (अनभिधानादिति) कमेः सः कंस इतिभा
रोक्तेरितिभावः। नन्वेवं सर्पिष्शब्दस्य यजुष्शब्दस्य
त्पन्नत्वे सर्पिषा यजुषेत्यादौ प्रत्ययावयवसकाराभावेन

भाष्ये स्पष्टा। ण्वुल्तृचौ [३.१.१३३] इत्यादौ भाष्ये व्युत्पन्नानीत्यपि। इदं शाकटायनादिरीत्या। पाणिनेस्त्वव्युत्पत्तिपक्ष एवेति शब्देन्दुशेखरे निरूपितम्। आयनेयी- (७.१२) इति सूत्रे भाष्ये स्फुटमेतत् ॥ २२ ॥

ननु देवदत्तश्चिकीर्षतीत्यादौ देवादेः सन्नन्तत्वप्रयुक्तधातुत्वाद्यापत्तिरत आह—

## प्रत्ययग्रहणे यस्मात्सविहितस्तदादेस्तदन्तस्य ग्रहणम् ॥ २३ ॥

त्वापत्तिरिति चेन्न उणाद्यन्तत्वेन पराभिमतानि बहुलं साधूनीत्यर्थकेनोणादयो बहुलमिति सूत्रेण षत्वोपपत्तेः। (आयनेयीतिसूत्रेभाष्ये इति) तत्रहि शमेः खः शंखः शण्ढ इत्यादावीनादिकमाशंक्य प्रातिपदिकाविज्ञानाच्च भगवतः पाणिनेस्सिद्धमित्युक्तम् प्रातिपदिकविज्ञानादित्यस्य प्रकृतिप्रत्ययविभागशून्यप्रातिपदिकविज्ञानादित्यर्थः ॥

देवदत्तश्चिकीर्षतीत्यादौ देवादेरिति, धातुत्वे सुपोधात्विति लुगापत्ति र्नच प्रातिपदिकावयवसुप्साहचर्य्येण धात्ववयवोऽपि सुप् संज्ञाप्रयोजक एव गृह्यतइति प्रकृते धातुसंज्ञाप्रयोजकत्वाभावान्नलुगिति वाच्यं पदसंज्ञाप्रयोजकत्वस्य तत्रापि सत्वाद्वृत्तिप्रयोजकत्वमपि साहचर्य्यादलभ्यमिदानीं देवदत्तोगार्ग्य इत्यत्र देवदत्तोगार्ग्येति समुदायस्यापि तद्धितान्तत्वेन प्रातिपदिकत्वात्तदवयवस्य सुपो वृत्यप्रयोजकस्यापि सम्भवेन साहचर्य्यस्यासम्भवात्, देवादेर्द्वित्वापत्तिरपि दोषः, यदि सन्यको-

यस्मात्प्रत्ययविधिः (१.४.१३) इति सूत्रे य-
त्प्रत्ययविधिस्तदादि प्रत्यय इति योगो विभज्यते।
ह्यमाण उपतिष्ठत इति शेषः। तेन तदाद्यन्तांश-
द्धः। तदन्तांशस्तु येन विधिः (१.१.७२) इ-
सिद्धः। स च शब्दरूपं विशेष्यमादाय विशेषणा-

रित्यत्रानभ्यासस्येत्यस्य सम्बन्धस्तच्च बहुव्रीहिवक्तात्म
विशेषणं तदा स दोषो नास्ति, नच वाक्यसंस्कारपक्षे प्र
व देवादेर्द्वित्वापत्तिरिति वाच्यमेकतरपक्षेण लक्ष्यसिद्धे।
न्तरेण दोषदामस्यानुचितत्वेन तत्पक्षानाश्रयणेनापि तां
वारणसम्भवात्(प्रत्ययग्रहणे यस्मादिति)सनाद्यन्ता धातव
दौ सन्निहितप्रत्ययग्रहणस्य सत्वात् तदादिरित्यस्योप
स्तत्र सनाद्यन्ता इत्यस्याभेदेनान्वयस्तथाच सनादि
द्विहितस्तदादिर्यस्सनाद्यन्त इत्यादिक्रमेण बोधः यत्र चा
नास्ति यथा ङ्याप्प्रातिपदिकादित्यत्र तत्र तदादेरित्य
पस्थितस्य ङ्याब्भ्यामभेदेन विशेषणाद्येन विधिरिति त
विधिना ङ्यावन्तात्तदादेरित्यर्थस्तदाह (तदन्तांशस्तु ये
(सच शब्दस्वरूपमिति) इदमत्र बोध्यम् यत्र प्रत्ययस्य
शेष्यं सूत्रे नोपात्तं यथा ङ्याबित्यत्र तत्रोपस्थिततदादि
स्वरूपविशेषणादेव ङ्याब्भ्यां तदन्तविधिर्यत्र विशेष्य
सूत्र उपात्तमस्ति यथा यञिञोश्चेत्यत्र प्रातिपदिकादि
प्रातिपदिकमेव विशेष्यीकृत्य प्रत्ययेन तदन्तविधिर्धर्मिण
स्थितौ फलाभावेन तदादित्वमात्रस्योपस्थितस्य स्वरूप
न्धेन प्रत्ययान्तेऽन्वयः। नामार्थत्वेन स्वरूपसम्बन्धेन
मन्वय इतिचेदस्तु तदनुरोधेन धर्मिणस्तदादेरुपस्थिति

सत्त्वे। यत्तु प्रत्ययेन स्वप्रकृत्यवयवकसंमुदायाक्षेपात्त-
चाभेदेन तदन्तेऽन्वयः तदेवोच्यते (विशेष्यान्तरासत्व
इति) क्वचित्तु लक्ष्यानुरोधात् प्रमाणान्तराद्वा विशेष्यान्तरसत्वे-
ऽपि तदादिरूपविशेष्यमादाय प्रत्ययेन तदन्तविधिं कृत्वा
पुनर्विशेष्यान्तरमादायप्रत्ययान्ततदादिना तदन्तविधिर्य्यथा
वनोरचेत्यादौ वन्नन्तान्तादित्यर्थेनातिधीवरीत्यस्य सिद्धिः,
प्रमाणन्तु, नित्यं समासेऽअनुत्तरपदस्थस्येति सूत्रेऽनुत्तरपदग्रह-
णमेव तद्धि परमसर्पिः कुण्डिकेत्यादौ षत्ववारणाय, समा-
सात्पूर्वपदस्याध्याहारेण तदेव विशेष्यान्तरमादायेसुसप्रत्ययौ
तदन्तबोधकौ ताभ्यामुपस्थितं तदादित्वन्तु स्वरूपसम्बन्धेन
तत्रैव विशेषणमिसुसप्रत्ययान्तस्यँत्पूर्वपदन्तदादित्वविशिष्टन्त-
स्य षत्वमित्यर्थे परमसर्पिरित्यत्र प्राप्त्यभावेन तद्व्यर्थं सदु-
क्तार्थे ज्ञापकम्. ज्ञापिते तु इसुसन्ततदाद्यन्तपूर्वपदस्येत्यर्थेन
तत्र प्राप्त्या स्वांशे चारितार्थं यदितु सर्पिरादिकमव्युत्पन्नमेवे-
सुसपदन्न प्रत्ययबोधकन्तदाऽतिधीवरीतिलक्ष्यानुरोधादेव
तथा कल्प्यते( यत्तुप्रत्ययेन स्वप्रकृत्यवयवकेति ) प्रत्ययः स्वप्र-
कृत्यवयवकसमुदायविशिष्टः प्रत्ययत्वादित्यनुमितिरूपाक्षेपेणो-
पस्थितस्य स्वप्रकृत्यवयवकसमुदायस्य प्रत्ययेन विशेषणात्त-
दन्तविधौ प्रत्ययान्तः स्वप्रकृत्यवयवकसुसमुदाय इत्यर्थेन सिद्धौ
प्रत्ययग्रहणपरिभाषा निष्फलेति तदाशयः, अत्रेदं चिन्त्यते
एतादृशार्थे देवदत्तश्चिकीर्षेति समुदायस्य धातुत्वापत्तिरेव त-
स्य प्रत्ययान्तत्वेन तत्प्रकृत्यवयवकत्वेन च निरासासम्भवात्
यदि च स्वप्रकृत्याद्यवयवकसमुदायः साध्यत्वेनाभिमतस्तर्हि
बहुच्प्रत्यये व्यभिचारः नच परत्वावच्छिन्नविधेयताश्रयत्वं
हेतुस्तन्नास्ति तत्रेति न दोष इति वाच्यं रुणद्धीत्यादौ श्नमु-

द्विशेषणत्वेन तदन्तविधिरिति तन्न । इयानित्यादौ
तादृशसमुदायेन व्यभिचारेणाक्षेपासम्भवात् । यत्र
त्ययो निमित्तत्वेनाश्रीयते तत्र तदादेरित्यन्तांशमात्रो
स्थितिरिति अङ्गस्य (६.४.१)इति सूत्रे भाष्यकैयटयोः
एवं यत्रापि पञ्चम्यन्तात्परः प्रत्यय आश्रीयते तत्रापि
दादीत्यन्तांशोपस्थितिः परन्तु तत्र पञ्चम्यन्तता ।

प्रत्यये हेतोः सत्वेन स्वप्रकृतीरुश्रेति तदाद्यवयवकत्वस्य
समुदायेऽभावेन तत्र व्यभिचारस्य तावतापि सत्वात्
साध्ये प्रकृतित्वमपर्याप्त्या ऽपि गृह्यते रुमात्रस्यापि
तन्निष्ठाद्यवयवतानिरूपकत्वं रुनधसमुदायस्यास्ति घटका
पसाध्यतावच्छेदकसम्बन्धेन तद्विशिष्टोनेति न व्यभि
इत्युच्यते तदाह ( इयानित्यादाविति ) अत्र परत्वावच्छि
विधेयताश्रयत्वस्य सत्वेपि तादृशसमुदायो नास्तीति व्य
चारो दुरुद्धरः, यदि च परत्वे सति तादृशपरत्वावच्छिन्न
धेयताश्रयत्वं हेतुः प्रकृते विधेयतावच्छेदकीभूत परत्वा
न व्यभिचारः परन्तु शाब्दबोधे शब्दनिष्ठवृत्तिज्ञानाधी
स्थितेर्हेतुत्वेनानुमित्योपस्थितस्य शाब्दबोधे भानन्न
परिभाषा मन्तव्यैवेति बोध्यम् । (यत्र प्रत्ययो निमित्तत्वेना
यत इति ) यथा स्यतासी लृलुटोः सुपिचेत्यादौ, तत्र तद
शोपस्थितौ तु लृडन्तलुडन्ततदादौ सुबन्ततदादावित्यर्थे
द्वितीयाद्धातोर्द्वितीयस्याङ्गस्य च कार्य्यस्यात्तदन्ताऽनुपस्थि
यथासम्भवं लृलुटोरित्यत्र धातोरिति पञ्चम्यन्तानुरोधेन
म्यन्ततैव तदादेरित्यस्य, व्यपदेशिवद्भावाच्च स्वस्मिन्नेव
दित्वं, सुपिचेत्यादावङ्गस्येति षष्ठ्यन्तानुरोधेनात इत्यत्र

एव एङ् ह्रस्वात् (६.१.६९) इति सूत्रे एङन्तादित्यर्थलाभः। अस्याः परिभाषायाः प्रयोजनान्तरं येन बिधिः [१.१.७२]इत्यत्र भाष्य उक्तम् परमगार्ग्यायण इति परमगार्ग्यस्यापत्यमिति विग्रहेऽपि गार्ग्यशब्दादेव प्रत्ययो

च षष्ठ्यन्तत्वैवेति ध्येयम्, आन्महतस्समानाधिकरणजातीययोरित्यत्र जातीयप्रत्ययेनोपस्थिततदादिविशेष्यमादाय महच्छब्देन तदन्तविधावतिमहाजातीय इत्यत्रात्वसिद्धिस्तदन्तांशोपस्थितौ तु नस्यादितिबोध्यम्। (एङन्तादिति) आक्षिप्तस्य शाब्दबोधे भानाभावेनाङ्गस्याक्षेपेण तु तदन्तविधिर्न युक्तइत्यन्यत्रोक्तमिति भावः हेकत्तरदित्यत्र सम्बुध्यवयवाकारान्तस्यापि ह्रस्वान्ततदादित्वेन ततः परस्य सम्बुध्यवयवस्य हलो लोपापत्तिस्तु न एङ्साहचर्य्येणाङ्गानवयवभिन्नस्यैव ह्रस्वस्य ग्रहणात्, सम्बुध्यवयवाघटितस्यैव तदादेर्ग्रहणमुक्तसाहचर्य्यादिति तु न युक्तं, हेकुलेत्यत्र लोपानापत्तेः, सम्बुद्धिविशिष्टभिन्नस्यैव ह्रस्वस्यैङ्साहचर्य्येण ग्रहणम् वै० स्वावयवत्व-स्वावयवस्थानिकादेशभिन्नत्वोभयसम्बन्धेनेत्यपिकश्चित्। उभयत्रापि तदन्तांशानुपस्थितौ मूलमग्रिमा परिभाषैवेति तत्रैव स्पष्टीभविष्यति (परमगार्ग्यस्यापत्यमिति) राजपुरुषस्यापत्यं राजपौरुषिरिति वारणाय तद्धितप्रत्ययः स्वार्थान्वयितावच्छेदकधर्म्मावच्छिन्नवाचकतापर्य्याप्त्यधिकरणाद्भवतीत्यर्थस्याभ्युपेयतया परमगार्ग्यस्यापत्यमित्यर्थे स्वार्थापत्यरूपार्थान्वयितावच्छेदकं परमाभिन्नगर्गापत्यत्वं तदवच्छिन्नवाचकतापर्य्याप्त्यधिकरणं परमगार्ग्येति समुदायस्तस्य च यञन्ततदादित्वाभावो नेष्यते च ततः प्रत्ययः, यतश्चेष्यते गार्ग्यशब्दात्स च

न विशिष्टात् । निष्कृष्य तावन्मात्रेणैकार्थीभावा
वृत्तिर्भवत्येव । अत एवेदं भाष्यमेव मानमित्यन्य
स्तरः । प्रत्ययमात्रग्रहणे एषा न तु प्रत्ययाप्रत्यय

न तादृश इति कथं भाष्यसङ्गतिरित्यत आह (निष्कृ
एतस्यैव व्याख्यानं (तावन्मात्रेणेति) तत्पर्य्याप्तेत्यर्थः ।
भाष्यादेव भाष्यात्तादृशपर्य्याप्त्यधिकरणघटकार्थ
भवतीति कल्प्यते इतिभावः । नचैवं राजपौरुषिरिति
तिवाच्यं धर्म्मिग्राहकमानेन प्रत्ययान्तत्वव्याप्यधर्म्मावच्छि
द्देश्यताकतद्धितविषयकत्वादुक्तज्ञापनस्य, नचैवं शिवभा
वतोऽपत्यं शिवभागवतमित्यत्र भगवच्छब्दात्प्रत्ययो न
ण्प्रत्ययस्य प्रत्ययान्तत्वव्याप्यधर्म्मावच्छिन्नोद्देश्यताक
वादिति वाच्यम्, तद्भाष्यप्रयोगादेव समासस्येव प्रत्यय
सिद्धेः (प्रत्ययमात्रग्रहण इति) प्रत्ययबोधकत्वे सति प्रत्य
रावोधक इत्यर्थः । ननु प्रतीषिषतीत्यत्रेण्धातोस्सनि
यस्यैकाचस्सशब्दस्य द्वित्वे सन्यत इत्यभ्यासावयवा
त्वे तस्योत्तरखण्डरूपसन्परत्वेनाज्झन्गमामितिदीर्घमा
त्तरखण्डस्या प्रत्ययत्वाद्दीर्घाभाव इतिसन्नन्तप्रकरणे
खरे प्रतिपादितम् तत्र धातुत्वायोत्तरखण्डस्य सनाद्यन्ता
इत्यत्रत्यसन्पदेन ग्रहणावश्यकतया प्रत्ययेतरबोधकत्वे
त्ययमात्रग्रहणाभावात् कथं सनाद्यन्ता इत्यत्र परिभा
त्तिरिति चेन्न उत्तरखण्डस्य प्रत्ययत्वेनादोषात् अजन्ता
झलादौ सनि दीर्घइत्यर्थेन प्रत्यासत्त्या यादृशझलादौ
दीर्घस्तादृशसन्निरूपिताङ्गत्ववत एव दीर्घइत्यर्थस्य
त्तरखण्डस्यागन्तुकानामग्रे निवेश इतिन्यायेन विधेयत्वे

इति उगितश्च (४.१.६) इति सूत्रे भाष्ये। इयमङ्गसंज्ञा सूत्रे भाष्ये स्पष्टा ॥ २३ ॥

येन विधिः (१.१.७२) इति सूत्रे भाष्य एतद्घटकतदन्तांशस्यापवादः पठ्यते—

सन्निहितत्वाभावेन पूर्वभागस्य तन्निरूपिताङ्गत्वाभावेन प्रतीषिषतीत्यादौ दीर्घाभावः,शेखरे अप्रत्ययत्वादित्यस्याजन्तघटकत्वोपयोगिप्रत्ययत्वाभावादित्यर्थेन तद्विरोधाभावात् हनगमनयनाच्चसाहचर्येणाभ्यासानवयवस्यैवाचो ऽजन्ताङ्गावयवस्य ग्रहणेन दीर्घाप्राप्त्या शेखरस्य खण्डनीयत्वाच्च केचित्तु सन्यत इतीत्वे प्रतिपाद्विधित्वात् पूर्वं दीर्घे ह्रस्वः, अप्रत्ययत्वादिति शेखरोक्तन्तु न युक्तं, प्रतीषिषेत्यादावप्रत्ययादित्यप्रत्ययानापत्तेरित्याहुः। परेतु प्रत्ययमात्रग्रहण इत्यत्र मात्रपदेन प्रातिपदिकमात्रस्यैव निरासस्तथाच प्रत्ययबोधकत्वे सति प्रातिपदिकाबोधक इत्यर्थेनाप्रत्ययरूपोत्तरखण्डबोधकत्वेऽपि दोषाभाव इत्याहुः। अन्येतु प्रत्ययमात्रग्रहण इत्यस्य प्रत्ययविशिष्टे इत्यर्थः वै० स्वबोधकत्वस्वविशिष्टाबोधकत्वोभयसम्बन्धेन तत्र वै० स्वेतरत्व-स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरत्वैतदुभयसम्बन्धेन उत्तरखण्डस्याप्रत्ययत्वेपि न क्षतिरितित्याचक्ष्युरितिदिक् ॥ (उगितश्चेति) अत्रोगित्पदस्य सर्वनामभवतुरूपप्रातिपदिकबोधकत्वेन प्रत्ययमात्रबोधकत्वाभावेन परिभाषाया अप्रवृत्त्या निर्य्यवमतीत्यादिसिद्धिः ॥ २३ ॥

तदन्तांशस्यापवादः पठ्यत इति = । एतेन परिभाषायां तदन्तविधिर्न्नेत्यर्थः फलितः,तथाच प्रत्ययग्रहणेचापञ्चम्या इत्यस्याः पञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययत्वव्यापकधर्म्मा-

## प्रत्ययग्रहणे चापञ्चम्याः ॥ २४ ॥

यत्र पञ्चम्यन्तात्परः प्रत्ययः कार्यान्तरविधानाय

वच्छिन्नविषयताप्रयोजकं पदं तदन्तबोधकन्नेत्यर्थः ( यत्र पञ्चम्यन्तात्परः प्रत्यय इति ) यत्र शास्त्रे पञ्चम्यन्तार्थावधिकपरत्वविशिष्टः प्रत्यय इत्यर्थः; नच रदाभ्यामित्यस्य तकारविशेषणत्वेन पञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताया अभाव इतिवाच्यं प्रत्ययावयवे प्रत्ययत्वव्यवहारेण निष्ठावयवतत्वस्य प्रत्ययत्वव्याप्यत्वात् नच तदवच्छिन्नविषयताप्रयोजकं तत्पदं न निष्ठापदमितिवाच्यं तादृशविषयताप्रयोजकपदघटकमित्यर्थेनादोषात् (कार्य्यान्तरविधानायेति) न तु स्वस्यैव विधानायेत्यर्थः, एतेन परिभाषार्थे विषयतापदेन विधेयताभिन्ना विषयता गृह्यत इति सूचितम् तथाच पञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययत्वव्याप्यधर्म्मावच्छिन्नोद्देश्यताप्रयोजकमित्यर्थः फलितः । यत्र स्वस्य विधानायैव प्रत्ययग्रहणं यथा ऋन्नेभ्योङीबित्यादौ तत्रैतद्वाक्यार्थबोधात्प्राक् प्रत्ययग्रहणपरिभाषाप्रवृत्तिसमये ङीपः प्रत्ययत्वस्यैवाभावेन प्रत्ययग्रहणत्वाभावान्नैतत्परिभाषाप्रवृत्त्युपयोग इत्येतत्फलितमत्र कार्य्यान्तरविधानायेतिभावः । केचित्तु कार्य्यान्तरेत्यस्य प्रत्ययेतरकार्य्येत्यर्थः । तेन किमेत्तिङव्ययघादाम्द्रव्यप्रकर्षे इत्यनेन तिङन्तरूपपञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययत्वव्याप्यघसंज्ञकत्वावच्छिन्नविषयताप्रयोजकत्वेऽपि घपदस्यामुरूपप्रत्ययविधानायैवाश्रयणादस्या अप्राप्त्या तदन्तविधौ घान्ततदादिपचतितरेतिसमुदायादेवामो विधानेन पचतितराभित्यस्य तद्धितान्ततदादित्वनिबन्धनप्रातिपदिकत्वसिद्धिरन्यथा

परिगृह्यते तत्र तदन्तविधिर्नेत्यर्थः । यथा रदाभ्यां निष्ठातो नः [८.२.४२] इत्यत्र तेन दृषत्तीर्णेत्यादौ धातुतकारस्य न नत्वम् । तदन्तेत्यंशानुपस्थितावपि तदा-

तदन्तविशेषणतया निषेधे तरप्रत्ययादेरामि समुदायस्य तद्धितान्ततदादित्वाभावेन प्रातिपदिकत्वानापत्तिरित्याहुःतन्नोक्तयुक्त्या प्रत्ययान्तत्वस्याप्यभावेन पूर्वसूत्रेण प्रातिपदिकत्वसिद्धेः, समासग्रहणनियमस्य तु न विषयः पचतीत्यस्य स्वातन्त्र्येण प्रयोगार्हत्वेपि तरामित्यस्य तत्वाभावात् परिगृह्यत इति तद्बोधकं पदमुच्चार्य्यत इत्यर्थः। (तदन्तविधिर्नेति) प्रत्यासत्त्या तादृशप्रत्ययबोधकं पदं तदन्तबोधकन्नेत्यर्थः। यथा "अतो भिस ऐस" "ह्रस्वनद्याप" इत्यादौ, (रदाभ्यामिति) एतत्परिभाषाया अभावे निष्ठापदेन तदादितदन्तोपस्थितौ निष्ठान्ततदाद्यवयवयो रदाभ्यां परस्तकारस्तस्य नत्वमित्यर्थेन वृधातोः क्तप्रत्यये इत्वे रपरत्वे दापि तीर्ता तस्य दृषत् सम्बन्धे निष्ठान्ततदाद्यवयवस्तकारः प्रत्ययावयव इव धात्ववयवोऽपि स च दकारात्परोप्यस्तीति तस्य नत्वापत्तिः परिभाषायाश्च सत्यां निष्ठापदस्य तदन्तबोधकत्वाभावेन्न तदुपस्थाप्य तदादिशब्दस्वरूपं विशेष्यीकृत्य रदाभ्यामित्यनेन तदन्तविधौ रेफान्तोदान्तश्चयो निष्ठा यस्माद्विहितस्तदादिस्ततः परस्य निष्ठावयवतकारस्य नत्वमित्यर्थेन धातुतकारस्य नत्वाभावः । ननु दृषत्तीर्णेत्यादावन्तवाधेऽन्तसदेशस्येतिपरिभाषया धातुतकारस्य नत्वाप्राप्तिरितिचेन्न तीर्णमाचष्ट इत्यर्थे नत्वस्यासिद्धत्वेन पूर्वं णिचि टिलोपे तीर्णयतीत्यादावन्तस्यैव तकारस्य नत्वप्रवृत्याऽन्तवाधस्याभावात् दृषत्तीर्णवानित्यस्योपलक्षकत्वाद्वा तत्र ह्यन्तसदेशस्याभावेन प-

दीत्यंशस्योपस्थितौ रेफदान्तात्परस्य निष्ठातस्येत्यर्थ इति न दोषस्तदाद्यंशानुपस्थितौ मानाभावात्। तदन्तांशोपस्थितौ तूभयोरेकविषयत्वमेव स्यादिति इषत्तीर्णेत्यादौ-

रिभाषाऽप्रवृत्तेः,केन चित्तु आचारक्विबन्तप्रकृतिककर्तृक्विबन्तसं ऋच्छब्दस्य देवशब्देन समासे देवर्त् इत्यत्रान्त्यतकारस्य नत्वप्राप्त्याऽन्तबाधाभाव उक्तः,तन्न युक्तम् निष्ठानत्वमवृद्धेरित्यत्र वृद्धिपदस्य गुणस्याप्युपलक्षकत्वात्, नन्ववयवषष्ठीविषयेऽपि निर्दिश्यमानपरिभाषाप्रवृत्त्या निष्ठान्ततदाद्यवयवोयो निष्ठापदीयनिर्दिश्यमानस्तदवयवस्य रदाभ्यां परस्य तकारस्य नत्वमित्यर्थेन धातुतकारस्य निष्ठापदीयनिर्दिश्यमानावयवत्वाभावेन परिभाषाम्विंनापि दोषाभाव इतिचेन्न प्रकृतसूत्रस्थभाष्यप्रामाण्यादत्र निर्दिश्यमानपरिभाषाया अप्रवृत्तेः भाष्येहि रदाभ्यां किं चरितमुदितमित्युक्त्वा अथाप्युच्यमाने रदाभ्यामिति कस्मान्न भवतीत्याशंक्य रदाभ्यामिति न निष्ठाविशेष्यते अपितु तोविशेष्यतइतिसमाहितम्,निर्दिश्यमानपरिभाषाप्रवृत्तौ तु निष्ठापदीयनिर्दिश्यमानविशेषणत्वेऽप्यागमव्यवधानेन दोषाभावात्तकारविशेषणत्वकथनमसङ्गतं स्यात्,यदि तु क्तक्तवतूनिष्ठेतिसूत्रे षष्ठ्यभावेन निर्दिश्यमानपरिभाषाया अप्राप्त्याऽऽगमविशिष्टस्यापि क्तादेर्निष्ठासंज्ञायां रदाभ्यामित्यत्रत्यनिष्ठापदीयनिर्दिश्यमानत्वमागमविशिष्टस्यैवेति निष्ठापदीयनिर्दिश्यमानविशेषणत्वेऽपि दोषतादवस्थ्येन तकारविशेषणत्वमिति नैतद्भाष्यं निर्दिश्यमानपरिभाषाप्रवृत्तौ विरुणद्धीत्यस्या अनुपस्थितौ मानाभावेनावतरणमसङ्गतमेवेत्युच्यते तदा अनुधातोः क्लिशिडाशुभाम्यामिति डाप्प्रत्यये टिलोपे सुप्पितावनुदात्तावित्यनुदा-

दोषः स्यादेव । स्यतासी लृलुटोः [३.१.३३] इत्यादौ लृलुटोः परयोरित्यर्थे नियमेनावधिसाकाङ्क्षत्वेनोपस्थितधातोरित्यस्यैवावधित्वेनान्वयान्न तदन्तविधिः । ङ्याब्भ्य इत्यादौ तु न दोषस्तत्र कस्मादिति नियतावत्त्वे आशब्दादाचारक्विबन्तात् कर्त्तरि क्विपि नपुंसकह्रस्वत्वे दइत्यनुदात्तन्तस्मादाचारक्विबन्तात्क्तप्रत्यये एकाच उपदेश इत्यनिटि अतोल्लोपे त इति तस्य दृषदित्यनेन सम्बन्धे दृषत्त इत्यत्र नत्वापत्तिरितिबोध्यम् नच निष्ठान्ततदादित्वाभावान्नत्वाप्राप्तिरिति वाच्यम्, व्यतिसे इत्यत्रेव व्यपदेशिवद्भावेन तल्लाभसम्भवात्, ननु स्यतासी लृलुटोरित्यादौ पञ्चम्यन्तार्थावधिकपरत्वेन लृलुटोरनाश्रयणात्प्रकृतपरिभाषाया अप्रवृत्त्या तदादितदन्तोपस्थितौ लृडन्तलुडन्ततदादौ परं इत्यर्थापत्त्यातिप्रसङ्गस्स्यादित्यत आह ( स्यतासी लृलुटोरित्यादाविति ) तस्मिन्नितिपरिभाषाया यथा सप्तम्यन्तार्थाव्यवहितपूर्वस्य कार्यं भवेत्तथा कर्त्तव्यमित्यर्थकतया लृलुटोरित्यत्र परयोरित्यस्य शेषेण लृलुटोः परयोरित्यर्थस्य बोधनेन कस्मात्परयोरितिनियमेनाकाङ्क्षायामुपस्थितधातोरित्यस्यैवावधित्वेनान्वयात्पञ्चम्यन्तार्थात्परत्वेनाश्रयणात्परिभाषाप्रवृत्तिस्सुलभेतिभावः । हलेङ्याब्भ्य इत्यादौ ङ्यापोः प्रत्ययत्वेन प्रातिपदिकात्परत्वस्य सत्वेऽपि नित्यसङ्गबोधकपदाभावेनाकाङ्क्षाया अभावेनाक्षेपाभावात् पञ्चम्यन्तार्थावधिकपरत्वेन तयोराश्रयणाभावान्न परिभाषाप्रवृत्तिरितितदादितदन्तोभयोपस्थितौ ङ्याबन्ततदादेरित्यर्थलाभेन तदवधिकपरत्वेन सुतिसीनामाश्रयणात्तत्र तदन्तोपानुपस्थित्या तदादिमात्रस्योपस्थित्या तदेव विशेष्यीकृत्य

ध्याकाङ्क्षाया अभावेन पञ्चम्यन्तस्य प्रत्ययविशेषण-त्वाभावात् । अङ्गसंज्ञासूत्रे तु तदादेः प्रत्यये पर इत्यर्थे पञ्चम्यन्तस्य विशेषणत्वं स्पष्टमेव । अत एव उत्तमै-काभ्याम् (५.४.९०) इत्यादिनिर्देशाः सङ्गच्छन्ते ॥ २४॥

नन्वेवं कुमारी ब्राह्मणिरूपेत्यादौ घरूप (६.३.४४) इतिह्रस्वापत्तिरत आह—

ङ्यावन्ततदादि स्वान्तबोधकमिति ङ्यावन्ततदाद्यन्ततदादेः परेषां सुतिसीनां हलो लोप इत्यर्थेन बहुश्रेयसीत्यादौ सुलोप-सिद्धेः, न च तदादेर्विशेष्यान्तरस्य सत्वे कथं प्रथमतदन्तविधि-रितिवाच्यं वनोरचेत्यादिरीत्यासत्वादिति सर्वमभिप्रेत्याह (ङ्याब्भ्य इत्यादौ तु न दोष इत्यादि ) आक्षिप्तपञ्चम्यन्ता-र्थावधिकपरत्वमादायापीयं परिभाषा प्रवर्त्तत इत्यर्थो धर्मिग्रा-हकमानादेवेत्याह (अत एवोत्तमैकाभ्यामिति) परिभाषायामपीदं ज्ञापकमिति बोध्यम् अन्यथा सुपिचेत्यत्र तदादितदन्तोप-स्थितौ सुवन्ततदादौ परे पूर्वस्य दीर्घ इत्यर्थेन निर्देशासङ्गतिः स्पष्टैवेति दिक् ॥ २४ ॥

कुमारीब्राह्मणिरूपेत्यादाविति = । नन्वियं शंका नोद-यमर्हति स्यतासी लृलुटोः सुपिचेत्यत्रेवात्रापि पूर्वपरिभाषयैव त-दन्तविध्यभावासिद्धेः अत एव घांशे न तदन्तविधिरन्यथा त-तदन्तविधौ कुमारीब्राह्मणितरेत्यादौ ह्रस्वापत्तेस्सत्वेन प्राथ-म्यात्तस्यैवावतरणत्वं वक्तुं युक्तं स्यादिति चेन्न तदादिरूपवि-शेष्यमादाय प्राप्ततदन्तविधेरेव तया निषेधात्, अत एव राज्ञः क-नीत्यादौ तदादिविशेष्यकतदन्तविधेर्निषेधोऽप्युत्तरपदं विशेष्य-

## उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥ २५ ॥

मादाय आप्तस्य तस्य न निषेधः, नचानया तत्र निषेधो दुर्वारः प्रत्ययवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्म्मावच्छिन्नविषयताप्रयोजक एवैतस्याः प्रवृत्तिस्वीकारात् अतएव घांशे तदादिविशेष्यकतदन्तविधेः पूर्वपरिभाषया निषेधेप्युत्तरपदविशेष्यकतदन्तविधिना दोषस्य सत्वेन प्राथम्यात्तदेवावतरणं वक्तुमुचितमित्यपास्तम् । तत्साध्यदोषाभावकस्यैव तदवतरणत्वेनोक्तरीत्या श्रावणप्रत्यक्षविषयतावच्छेदकानिवेशस्यावश्यकत्वेन परिभाषया दोषनिराकरणासम्भवात् । ननु मास्त्ववतरणन्तत् उत्तरपदं विशेष्यमादाय तदन्तविधिना ह्रस्वापत्तिस्तु तत्र दुर्वारेतिचेन्न संज्ञाविधौ तदन्तविधिनिषेधसामर्थ्यात्प्रदेशेऽपि न तदन्तविधिरित्यनेन शब्देन्दुशेखरे समाहितत्वात् तथाहि तरप्तमपौ घ इत्यत्र तदन्तविधिनिषेधे प्रदेशे घपदस्य प्रत्ययमात्रग्रहणत्वेन तदादितदन्तलाभः, संज्ञाविधौ निषेधाभावे तरवाद्यन्तस्य घसंज्ञायां, प्रदेशे घपदस्य प्रत्ययमात्रग्रहणत्वाभावेन तदन्तविध्यभावात्तरवाद्यन्ततदादेरेव लाभः। घरूपसूत्रेपि तदादिविशेष्यकतदन्तविधौ पूर्वपरिभाषया वारिते उत्तरपदविशेष्यकतदन्तविधौ घान्तो यावान् समुदायो लभ्येत तावानेव संज्ञाविधौ निषेधाभावे तदन्ततदादेर्घसंज्ञायां घरूपसूत्रे उत्तरपदविशेष्यकतदन्तविधिना लभ्येतेति प्रदेशे तदन्तविधौ संज्ञायां तन्निषेधो व्यर्थ एव किञ्च रूपबादिनिमित्तको ह्रस्वः प्रत्ययाव्यवहितपूर्वस्यैवेकारस्य भवति तत्साहचर्य्याद्घनिमित्तकोऽपि ह्रस्वः प्रत्ययपूर्वस्यैवेत्यर्थेनादोषः। केचित्तु रूपबाद्यंशे अनया परिभाषया साक्षा-

हृदयस्य हृल्लेख्यदण्लासेषु (६.३.५०) इत्यत्र ले
खग्रहणात् । तत्र लेखेति न घञन्तमनभिधानात्। इ
च हृदयस्येति सूत्र एव भाष्ये स्पष्टा ॥ २५ ॥

च्छास्त्रबाधकल्पनापेक्षयोत्तरपदस्य विशेषणत्वबोधनमेव यु
न्तथाच घांशे तस्य विशेष्यत्वे सर्वेषामेकस्मिन्नन्वयाभा
द्वन्द्वासाधुत्वापत्या तत्रापि विशेषणमेवेति न घांशेऽपि तदन
विधिरित्याहुः । अन्येतु प्रत्ययग्रहणेश्रावणेत्यादि न निवेश
प्रत्ययबोधकमात्रं न तदन्तबोधकं घांशे प्राथम्यादवतरणम
क्तुर्युक्तमेव रात्रेःकृतीत्यादौ तु सामर्थ्यात्तदन्तविधिः कृ
पोत्तरपदस्यासम्भवादित्याहुस्तन्न, अशब्दादाचारक्विन्ता
घञ्प्रत्ययेऽतोलोपे रात्रिम इत्यादावुत्तरपदस्य कृद्रूपत्वसम
वेन चारितार्थ्यादित्यास्ताम् । अथात्र कर्म्मधारये बहुव्री
वा पुम्वद्भावापत्या कुमारब्राह्मणिरूपेतिस्यात्, षष्ठीतत्पुरु
नदीतरे प्रतिषेधो वक्तव्यो न वक्तव्यः समानाधिकरण
वर्त्तत इतिभाष्यात्समानाधिकरणे एव ह्रस्वप्रवृत्तिलाभेनास
त्यापत्तिरिति चेन्न वयोवाचके वैकल्पिकजातिकार्य्यस्येष्ट
जातेश्चेत्यनेन पुम्वद्भावनिषेधात् बहुव्रीहौ दोषाभावात्, य
कुमारीब्राह्मणिरूपेतिवाक्यमेव,अत्र समासे इष्टस्य पुम्वद्भाव
परत्वाद्बाधेन ह्रस्वापत्तिरित्याशयात् । इदमुपलक्षणं ब्राह्मणि
रूपेत्यादौ ह्रस्वा नापत्तिरित्यपि बोध्यम् ( लेखग्रहणादिति
ननु लेखग्रहणे तदन्तविधिना हृदयशब्दस्य परमलेखश
समासे हृत्परमलेख इति भवति, तदभावे अणन्ततदा
रूपोत्तरपदपरत्वाभावेन हृदयपरमलेख इति वैषम्याल्ल
ज्ञापकमिति चेन्न गिलेऽगिलस्येत्यत्र तदन्तविधौ गिला
उत्तरपद इत्यर्थेन तिमिंगिलगिल इत्यस्य सिद्धौ गिलगिले

त्येतत्सामर्थ्यात् उत्तरपदाधिकारे प्रातिपदिकग्रहणे न तदन्तग्रहणमितिपरिभाषान्तरस्य ज्ञापितत्वेन लेखशब्दे तदन्तविध्यभावादत एवेष्टकेषीकामालानां चिततूलभारिष्वित्यादौ चितांशे न तदन्तविधिस्तेनेष्टकापरिचितामित्यादौ ह्रस्वाभावः, केचित्तु तिमेर्गिलस्तस्य गिल इत्यर्थके तिमिंगिलगिल इत्यत्र तदन्तविधावपि गिलगिलशब्दस्योत्तरपदत्वाभावेनाप्राप्त्या तत्र विधानार्थं गिलगिलेचेतिचरितार्थमित्याहुस्तन्न अन्तरङ्गत्वेन पूर्वमेव मुम्सिद्धेः, वार्त्तिकेप्युत्तरपदसम्बन्धस्य सत्वेन तस्याप्राप्तेश्च। नापि गिलान्तेचेद्गिलगिल एवेति नियमार्थतया न ज्ञापकमिति युक्तम् विधिनियमसम्भवे विधेरेव ज्यायस्त्वात् वनोरचेत्यादाविव विशेष्यान्तरसत्वेऽपि तदादिस्वरूपमादायापि तदन्तविधिनाऽणन्ततदाद्यन्तोत्तरपद इत्यर्थेन फलभेदाभावाच्च ज्ञापकपरभाष्यप्रामाण्यात् हृत्परमलेखइत्यादेरनभिधानाच्च, नचैतत्परिभाषासत्वे उपसर्गस्य घञीत्यत्र तदन्तविध्यभावेन घञन्तइत्यर्थः कथमितिवाच्यं सूत्रारम्भसामर्थ्येन तदन्तविधिनिषेधाभावात् नहिघञ्रूपमुत्तरपदं सम्भवति न चाशब्दादाचारक्विबन्तात् घञि तत्सम्भवः तत्र दीर्घोत्तरमिकोऽसवर्ण इति ह्रस्वसमुच्चितप्रकृतिभावे यणि वा दीर्घविधानस्य फलाभावात्, खित्यनव्ययस्येत्यत्र खित्पदस्य तत्पुरुषे कृतीत्यादौ कृत्पदस्य च प्रत्ययवृत्तिश्रावणप्रत्यक्षाविषयतावच्छेदकधर्म्मावच्छिन्नबोधकत्वाभावान्न निषेधः, उत्तरपदाधिकारे प्रातिपदिकग्रहण इत्यस्याः प्रातिपदिकवृत्तिविषयतत्प्रयोजकपदे एव प्रवृत्तिरत एव एकहलादौ पूरयितव्य इत्यत्र एकहलादिपदेन न तदन्तविधिः, वस्तुतस्तु एकहलादिपदे तदन्तविधावुदकस्थितिशब्देऽप्यसंयुक्तहलादिस्तिशब्दस्तदन्तःस्थितिशब्द इति तत्राप्यादेशापत्त्यैकग्रहणसामर्थ्यान्न तदन्तविधिः

नन्वेवं परमकारीषगन्धीपुत्र इत्यत्रेवातिकारीषग-

तथाच श्रावणप्रत्यक्षविषयतावच्छेदकधर्म्मावच्छिन्नविषयता-प्रयोजकं पदमुत्तरपदं विशेष्यीकृत्य तदन्तबोधकमित्येवं परि-भाषाद्वयस्थाने उच्यते केचित्तु पदघटितं विशेष्यीकृत्येत्यर्थोऽत एव पादस्य पदाज्यातीत्यादौ पूर्वपदम्विशेष्यमादायापि पादशब्देन न तदन्तविधिस्तेन दग्धपादोपहत इत्यादौ न पदादेश इत्याहुस्तन्न तथासति पक्वेष्टकाचितामित्यादावपि ह्रस्वत्वानापत्तिरिष्टकेषीत्यादावपि तदन्तविधिनिषेधापत्तेः दग्धपादोपहत इत्यत्र तु भाष्यप्रयोगान्नेत्यस्यापि वक्तुं शक्यत्वात् अन्येतु पदघटितम्विशेष्यमादायेत्येवार्थः इष्टकेषीकेत्यादौ पूर्वपदस्यानाक्षेपान्न दोषोऽत एव तुन्दशोकयोः परिमृजापनुदोरित्यादावुपपदं विशेष्यमादाय न तदन्तविधिरित्याहुः वस्तुतस्तत्रोपपदशब्दस्याभावेन तदन्तविधेरप्रसङ्ग एवेतिदिक् । चन्द्रिकाकारस्तु कुमारीब्राह्मणितरेत्यस्यैतत्परिभाषाफलत्वं घरूपसूत्रे भाष्यकृतोक्तत्वेन श्रावणप्रत्यक्षेत्याद्यनिवेशः इयञ्च धर्म्मिग्राहकमानादादेशविधायक एव प्रवर्त्तत अत एव रात्रेः कृतीत्यादौ न दोषः खित्यनव्ययस्येत्यत्र तु अनव्ययस्येत्येतत्सामर्थ्यात्तदन्तविधिःतत्पुरुषे कृतीत्यस्यादेशविधायकत्वाभावादेवादोषः प्रातिपदिकग्रहण इत्यस्य तु आगमविधायकेऽपि प्रवृत्तिरत एव कारे सत्यागदस्येत्यत्र कारशब्दे न तदन्तविधिरत एव न द्वयोरेकत्वसम्भवइत्याहुः ।

नन्वेवं परमकारीषगन्धीपुत्र" इत्यत्रेवातिकारीषगन्ध्यापुत्र इति = । नन्विदमवतरणन्न युक्तं पूर्वपदरूपविशेष्यान्तरस्य सत्वेन तदादिविशेष्यकतदन्तविध्यभावे पूर्वपदम्विशेष्यमादाय तदन्तविधिस्तदन्ते च तदादेरभेदेनान्वयस्तथाच तदा-

न्ध्यापुत्र इत्यत्र ष्यङः सम्प्रसारणं पुत्रपत्योः (६.१.१३)
इति स्यादत आह।

## स्त्रीप्रत्यये चानुपसर्जने न ॥ २६ ॥

द्यभिन्नं यत् ष्यङन्तं पूर्वपदमित्यर्थस्यैव लाभेन परमकारीषगन्ध्येत्यस्य ष्यङन्तपूर्वपदत्वेपि ष्यङ्यस्माद्विहितस्तदादित्वविरहेण संप्रसारणाप्राप्त्या दृष्टान्तत्वासिद्धेः नच परमकारीषगन्धीपुत्र इत्यत्रेवातिकारीषगन्ध्या पुत्र इत्यत्रापि स्यात् अर्थान्न स्यादित्येव तात्पर्यविषय इतिवाच्यन्तत्राभावस्यैवेष्टत्वेनापत्यभावात्। नच वनोरचेत्यत्रेवात्रापि तदादिविशेष्यकतदन्तविध्युत्तरमुत्तरपदं विशेष्यीकृत्य पुनस्तदन्तविधिरथवा पूर्वपदस्य विशेष्यान्तरस्य सत्वेपि तद्विशेष्यकतदन्तविधेः प्रथमं पूर्वपरिभाषया निषेधात् तस्य सत्वेऽपि तदादिविशेष्यक एव तदन्तविधिस्तदन्तविधिप्रयोजकस्यैव विशेष्यान्तरस्य तदादिविशेष्यकतदन्ताविधिप्रतिबन्धकत्वात् ततश्च ष्यङन्ततदादेः प्रत्ययग्रहणत्वाभावेन पूर्वपरिभाषाया अप्राप्त्योत्तरपदविशेष्यकतदन्तविधौ ष्यङन्ततदाद्यन्तपूर्वपदस्येत्यर्थेन परमकारीषगन्धीपुत्र इत्यत्र प्राप्त्या दृष्टान्तत्वमुपपन्नमिति वाच्यं तथासति परिभाषाया प्रवतीर्णायामपि अतिकारीषगन्ध्यापुत्र इत्यत्र ष्यङन्ततदाद्यन्तत्वेन दोषस्य दुरुद्धरत्वादसङ्गतेस्तादवस्थ्यात् नचानङ् ऋतो द्वन्द्व इत्यत्रेवात्रापि पूर्वपदन्नाक्षिप्यते ततश्च ष्यङन्ततदादेः संप्रसारणमित्यर्थेन दृष्टान्तत्वोपपत्तिरित्यपि युक्तन्दत्तोत्तरत्वादिति चेदत्रोच्यते तदाद्यभिन्नं ष्यङन्तंयत्पूर्वपदमित्येवार्थः इव शब्दस्यातिकारीषगन्ध्या पुत्र इत्यत्रेत्यस्याग्रे उत्कर्षस्तथाचातिकारीषगन्ध्यापुत्रइत्यत्रेव परमकारीषग-

न्धीपुत्र इत्यत्रापि स्यादित्यर्थः । यथा तत्र स्वाभाववत्त्वसम्ब-
न्धेन भवति तथा परमकारीषगन्धीपुत्र इत्यत्र स्यात् मूर्खपुत्रे मूर्ख-
पितृवदयं पण्डित इत्यत्र यथा, न स्यादिति यावत् इति
युक्तमेवावतरणमिति । स्त्रीप्रत्यये चानुपसर्जने न = । नन्व-
कोऽर्थोऽस्या न तावत् स्त्रीप्रत्ययेऽनुपसर्जने तदादिविधिर्न्नेत्य-
स्यर्थोऽनुपसर्जनस्त्रीप्रत्ययस्य लक्ष्ये सत्वेऽपि तत्र तदादेरप्रसक्तेः
उत्सर्गापवादयोस्समानदेशत्वभङ्गापत्तेश्च, नापि प्रत्ययग्रहणप-
रिभाषाया अपवादत्वादत्रापि ग्रहणपदसम्बन्धेनानुपसर्ज-
नस्त्रीप्रत्ययबोधके तत्पदघटिते शास्त्रे तदादिविधिर्न्नेत्यर्थः
ष्यङस्सम्प्रसारणमितिसूत्रघटकष्यङ्पदस्यानुपसर्ज्जनपरमका-
रीषगन्ध्याघटकष्यङ्बोधकत्वेन तदादिनियमाभावे ष्यङन्तपूर्व-
पदस्येत्यर्थेऽतिकारीषगन्ध्या पुत्र इत्यत्रापि सम्प्रसारणा-
पत्तेस्तत्रत्योपसर्ज्जनस्यापि बोधकत्वेन निषेधाप्रवृत्त्या तदा-
दिनियमे परमकारीषगन्धीपुत्र इत्यत्राप्यप्रवृत्त्यापत्तेश्चेति
चेदत्र वदन्ति ष्यङस्सम्प्रसारणमितिसूत्रे ष्यङ्पदे आवृत्ति-
कमनुपसर्ज्जनतात्पर्य्यकमपरमुपसर्ज्जनतात्पर्य्यकं तत्रानुपस-
र्ज्जनतात्पर्य्यके एषा तदादिनियमन्वारयति ततश्चानुपसर्ज्जन-
ष्यङन्तपूर्व्वपदस्य ह्रस्व इत्यर्थेन परमकारीषगन्धीपुत्र इत्यत्र
सम्प्रसारणमुपसर्ज्जनष्यङन्ततात्पर्य्यके ष्यङ्पदे तदादिनियमे
नोपसर्जनष्यङन्ततदादिपूर्व्वपदस्येत्यर्थस्तथा च अतिकारीष-
गन्ध्यापुत्र इत्यत्र पूर्व्वपदस्य तदादित्वाभावादुपसर्ज्जनवाक्य-
स्य, ष्यङ उपसर्ज्जनत्वादनुपसर्ज्जनवाक्यस्य चाप्राप्त्या सम्प्र-
सारणाभावः नचोपसर्ज्जनवाक्यस्यानर्थक्यं कारीषगन्ध्या इ-
प्रनष्य इत्यर्थे कनो लुपि ष्यङ उपसर्ज्जनत्वेन कारीषगन्धी-
पुत्र इत्यत्र चारितार्थ्यात् । उपसर्ज्जनत्वश्च प्रकृते न शास्त्रीय-
प्रत्ययमात्रे तदसम्भवात् नापीतरपदार्थनिष्ठविशेष्यतानिरू-

तत्प्रकारताप्रयोजकत्वं तत्, परमकारीषगन्धीपुत्र इत्यत्रापि व्य-
ङ्ङुपसर्ज्जनत्वापत्तेरपितु स्वान्तसमुदायपर्य्याप्तशक्तिनिरूप-
कार्थनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकताप्रयोजकत्वं स्त्र
यस्य प्रत्ययस्योपसर्ज्जनत्वमिष्टन्तत्, क्तनलुवन्तष्यङन्तसमुदा-
यपर्य्याप्तशक्तिनिरूपकार्थः कारीषगन्ध्यासदृशः अतिकारीषग-
न्ध्यापुत्र इत्यत्रकारीषगन्ध्याकर्म्मकातिक्रमणकर्त्ता तन्निष्ठवि-
शेष्यतानिरूपितप्रकारता कारीषगन्ध्यापदार्थे करीषगन्धसदृश-
गन्धविशिष्टसम्बन्धिस्त्रीत्वविशिष्टापत्यरूपे, तदवच्छेदकतां स्त्री-
त्वे तत्प्रयोजकत्वं ष्यङ इतिलक्षणसमन्वयः परमकारीषग-
न्धीपुत्र इत्यत्र च स्वान्तसमुदायः परमकारीषगन्ध्या तन्नि-
ष्ठशक्तिनिरूपकार्थः परमाभिन्नकरीषगन्धसदृशगन्धवत्स-
म्बन्धिस्त्रीत्वविशिष्टापत्यरूप स्तन्निष्ठविशेष्यतानिरूपितप्रकार-
ता परमपदार्थे तदवच्छेदकता टावर्थस्त्रीत्वे तत्प्रयोजकत्वं टापो
नतु ष्यङ इत्यनुपसर्ज्जनत्वन्तस्य बोध्यम् । अथवा तत्र क-
ल्पे आवृत्त्याश्रयणरूपगौरवभयेन स्त्रीप्रत्ययबोधकपदघटिते शा-
स्त्रेऽनुपसर्ज्जनेनेत्यस्योपस्थितिरित्यर्थो नतु तत्र तदादेस्तस्यान्यथा
बाधात् अनुपसर्ज्जनेनेति तृतीयार्थोऽभेदस्तथाचानुपसर्ज्जन-
ष्यङन्तपूर्वपदस्य संप्रसारणमित्येक एवार्थः परमकारीषेत्यत्रा-
नुपसर्ज्जनत्वात्संप्रसारणमतिकारीषगन्ध्यापुत्र इत्यत्रोपसर्ज्ज-
नत्वात्संप्रसारणाभावश्चोपपद्यते । नच क्तनलुवन्तकारीषगन्धी-
पुत्र इत्यत्रोक्तरीत्योपसर्ज्जनत्वेन संप्रसारणाभावप्रसङ्ग इति
वाच्यमिष्टत्वात् पूर्वकल्पादत्रकल्पे फलभेदस्त्वकिञ्चित्कर एव
गौरवस्यैव पूर्वकल्पे क्तनलुवन्ते सम्प्रसारणापत्तेरपि बाधक-
त्वस्य वक्तुं शक्यत्वात् फलैक्याग्रहे तु अस्मिन्कल्पे उपस-
र्ज्जनत्वं स्वान्ततदाद्यव्यवहितपूर्वपदप्रयोज्यविशेष्यतानिरूपित-
प्रकारतावच्छेदकताप्रयोजकत्वं क्तनलुवन्ते स्वान्ततदाद्यवधिक-

पूर्वपदस्याभावात् परमकारीषगन्धीत्यत्र व्यङन्ततदाद्यवधि पूर्वपदं परमपदन्तत्प्रयोज्यप्रकारताया एव सत्वन्नतु विशेष्यताया इति उभयत्र विशेषणाभावप्रयुक्तो विशिष्टाभाव इत्यनुपसर्ज्जनत्वम्, अतिकारीषगन्ध्येत्यत्र पूर्वपदप्रयोज्यातिक्रमणकर्तृनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकत्वप्रयोजकत्वरूपोपसर्ज्जनत्वस्यैव सत्वेन न संप्रसारणमिति विभावयन्तु नन्वेकदेशिसमासस्य कर्म्मधारयमाश्रित्य तत्प्रत्याख्यानस्य च फलैक्यानापत्तिस्तथाहि पिप्पल्या अर्धमर्धपिप्पलीत्यारम्भपक्षे पूर्वपदार्थस्यार्धस्य प्राधान्यात्स्वान्तसमुदायोऽर्द्धपिप्पलीरूपस्तत्पर्य्याप्तशक्तिनिरूपकार्थः पिप्पल्यर्धरूपस्तन्निष्ठविशेष्यतानिरूपिता प्रकारता पिप्पलीनिष्ठा तदवच्छेदकत्वं स्त्रीत्वे तत्प्रयोजकत्वरूपोपसर्ज्जनत्वं ङीष इत्यनुपसर्ज्जनेनेत्यस्योपस्थितिकल्पे हल्ङ्याभ्य इत्यस्यानुपसर्ज्जनभूतौ यौ ङ्यापौ तदन्तो यस्सु तिसीत्येतत्सम्बँन्धितदादिस्ततः परस्य सुति सेरूपस्य हलो लोप इत्यर्थेन सुलोपो न प्राप्नोति अर्द्धश्चासौ पिप्पलीतिं कर्म्मधारये परमकारीषगन्धीत्यत्रेवानुपसर्ज्जनत्वेन सुलोपः प्राप्नोतीति फलभेदः स्पष्ट एव एवं गोवक्रयणीतिपूर्व्वपदार्थप्रधानकर्मधारयेप्युक्तरीत्योपसर्ज्जनत्वे नानुपसर्ज्जनेनेत्यत्योपस्थितिकल्पे सुलोपानापत्तिश्चेतिचेन्न अवयवावयविभावसम्बँन्धेतरसम्बँन्धावच्छिन्नाया एव प्रकारताया ग्रहणेनाद्ये प्रकारताया, अवयवावयविभावसम्बँन्धावच्छिन्नत्वेनान्त्ये अभेदस्य सम्बँन्धत्वाभावेन सम्बँन्धावच्छिन्नत्वस्याभावेनानुपसर्ज्जनत्वेनादोषात् ॥ स्वान्ततदाद्यवधिकपूर्व्वपदपर्य्याप्तप्रयोजकता ग्राह्या तेन परमकारीषगन्ध्या यस्या इति बहुव्रीहौ पूर्व्वपदे अन्यपदार्थनिष्ठविशेष्यताप्रयोजकताया अपर्य्याप्त्या या सत्वेऽपि न तादृशविशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोज-

कस्यापि व्यङ्ङुपसर्ज्जनत्वमिति तादृशपरमकारीषगन्धीपुत्र इत्यादौ संप्रसारणासिद्धिः नन्वेवमावृत्तिकल्पे निरुक्तस्थले स्वान्तसमुदायः, परमकारीषगन्ध्यारूपस्तत्पर्य्याप्तशक्तिनिरूपकार्थोऽन्यपदार्थस्तन्निष्ठविशेष्यनिरूपितप्रकारताकारीषगन्ध्यानिष्ठा तदवच्छेदकताप्रयोजकत्वस्यैव व्यङ्स्सत्वेनानुपसर्ज्जनवाक्यस्य न प्रवृत्तिः,नाप्युपसर्ज्जनवाक्यस्योपसर्जनव्यङन्ततदादिरूपपूर्वपदत्वाभावादिति फलभेद इति चेन्न संप्रसारणाभावस्यैव तत्रेष्टत्वात्, अनेन फलैक्यायानुपसर्जनेनेत्युपस्थितिकल्पेऽपि संप्रसारणाभावस्यैवेष्टत्वेन प्रयोजकतायां पर्य्याप्तेरनिवेश एव, नन्वेवं परमकारीषगन्धीपुत्र इत्यादौ विशिष्टार्थनिरूपितैकार्थीभावरूपशक्तेस्समुदाये सत्वेन तत्रत्यसकलविषयताप्रयोजकताप्रर्य्याप्तेस्समुदाये सत्वेन पुत्रत्वावच्छिन्नविशेष्यताप्रयोजकतापि समुदायपर्य्याप्ता सा परमरूपपूर्वपदेऽप्यस्ति तत्तश्च स्वान्ततदाद्यवधिकपूर्वपदं परमरूपं तन्निष्ठप्रयोजकतानिरूपितप्रयोज्यतावद्विशेष्यता पुत्रत्वावच्छिन्ना तन्निरूपितप्रकारता कारीषगन्ध्यानिष्ठा तदवच्छेदकता स्त्रीत्वनिष्ठा तत्प्रयोजकत्वरूपोपसर्ज्जनत्वस्यैव व्यङ्स्सत्वेन संप्रसारणापत्तिरितिवाच्यं स्वविशिष्टविशेष्यतानिवेशेनादोषात् वैशिष्ट्यञ्च स्वान्ततदाद्यवधिकपूर्वपदप्रयोज्यत्व स्वोत्तरपदपर्य्याप्तप्रयोजकतानिरूपितप्रयोज्यत्वाभावन्वत्त्वोभयसम्बन्धेन पुत्रत्वावच्छिन्नविशेष्यतायाश्च स्वोत्तरपुत्रपदपर्य्याप्तप्रयोजकतानिरूपितप्रयोज्यत्वस्यैव सत्वेन लक्षणघटकत्वाभावात् इति दिक्। अथवा स्त्रीप्रत्यय इत्यस्य स्त्रीप्रत्ययान्ततदादावित्यर्थोऽनुपसर्ज्जन इति स्त्रीप्रत्ययान्ततदादेर्विशेषणं शास्त्रीयमेव चोपसर्ज्जनत्वं ग्राह्यं तथाचानुपसर्जने स्त्रीप्रत्ययान्ततदादौ सति तदादिनियमो

विषयसप्तमी । यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाह तत्र तदादिनियमो न यस्त्वप्राधान्येनाह तत्र तदादिनियमोऽस्त्येवेत्यर्थः । प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्र-नेत्यर्थः । अधिकव्यावर्त्तको नेति यावत्, तदादिघटिते तदादित्वारोप इति तत्त्वम् । एवञ्च कारीषगन्ध्यारूपतदादिघटिते परमकारीषगन्ध्याशब्दे तदादित्वारोपेण ष्यङन्ततदादिरूपपूर्वपदस्य परमकारीषगन्ध्याशब्दस्य संप्रसारणसिद्धिरतिकारीषगन्ध्येत्यत्र ष्यङन्ततदादेरुपसर्जनत्वेन तद्घटिते समुदाये तदादित्वारोपाभावात् न संप्रसारणं कन्लुक्वन्ते च, स्वत एव तदादित्वमिति सर्वमवदातम् । (विषयसप्तमीति) सत्सप्तमीत्यर्थः। (स्त्रियं प्राधान्येनाहेति) स्त्रीत्वं पूर्वोक्तप्रकारतावच्छेदकतया नाहेत्यर्थः। अप्राधान्येनेत्यस्य तादृशप्रकारताच्छेदकतयेत्यर्थः । (प्रत्यासत्त्येति) अयम्भावः अतिराजकुमारिरित्यत्र स्वान्ततदादिः कुमारीशब्दस्तदवधिकपूर्वपदमातिपदं तत्प्रयोज्यविशेष्यताऽतिक्रमणकर्तृनिष्ठा तन्निरूपितप्रकारता कुमारीनिष्ठा तदवच्छेदकता स्त्रीत्वे तत्प्रयोजकत्वरूपोपसर्जनत्वं ङीपः, एवमाद्यकल्पेऽपि स्वान्तसमुदायोऽतिराजकुमारीशब्दस्तत्पर्याप्तशक्तिनिरूपकोर्थः राजकुमारीकर्मकातिक्रमणकर्त्ता तन्निष्ठविशेष्यतानिरूपितप्रकारता कुमारीनिष्ठा तदवच्छेदकताप्रयोजकत्वरूपोपसर्जनत्वं ङीपः गोस्त्रियोरुपसर्जनस्येत्यस्यानुपसर्जनेनेत्युपस्थितिकल्पे अनुपसर्जनाभिन्नो यस्त्रीप्रत्ययस्तदन्तप्यँदुपसर्जनन्तदन्तसमासस्य ह्रस्वः । एवमेवाद्यकल्पे अनुपसर्जनवाक्यस्याप्यर्थः। उपसर्जनवाक्यस्य चोपसर्जनस्त्रीप्रत्ययान्ततदादिरूपप्यँदुपसर्जनन्तदन्तस्य ह्रस्व इत्यर्थः । प्रकृते

त्ययान्तत्वमानेयं तदर्थे प्रत्यनुपसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम्। तेनातिराजकुमारिरित्यादौ राजकुमारीशब्दार्थस्यातिशब्दार्थे प्रत्युपसर्जनत्वेऽपि तदर्थे प्रत्यनुपसर्जनत्वात्तदादिनियमाभावेन ह्रस्वसिद्धिः। अत एवात्र परिभाषायां न शास्त्रीयमुपसर्जनत्वमसम्भवात।

ङीष उपसर्ज्जनत्वेनाद्यपक्षयोर्ह्रस्वाप्राप्तिः स्पष्टैवान्तिमपक्षे उपसर्जनस्त्रीप्रत्ययो ङीष् तदन्ततदादिः कुमारीशब्दस्तच्च नोपसर्ज्जनं यँदुपसर्ज्जनं राजकुमारीशब्दो न स उपसर्जनस्त्रीप्रत्ययान्ततदादिरिति ह्रस्वाप्राप्तिरिति शङ्का; समाधानन्तु प्रत्यासत्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेतव्यं तद्घटकम् पूर्वपदं विवक्ष्यते स्त्रीप्रत्यान्तत्वञ्च राजकुमारीशब्दे आनेतव्यन्न तद्घटकोऽतिशब्दोऽपि तु राजन्शब्दस्तत्प्रयोज्याविशेष्यताया अभावादनुपसर्ज्जनत्वमेव ङीषः, आद्यकल्पेऽपि स्वान्तसमुदायस्स एव गृह्यते यस्य स्त्रीप्रत्ययान्तत्वमानेतव्यं, सच राजकुमारीशब्द एव तन्निष्ठशक्तिनिरूपकोर्थो राजसम्बन्धिकुमारीरूपस्तन्निष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकताप्रयोजकता न ङीष इत्यनुपसर्ज्जनत्वमेवेति न दोष इति॥ (अत एवेति) प्रत्ययमात्रस्योपसर्ज्जनत्वविवक्षणादेवेत्यर्थः। (असम्भवादिति) प्रत्ययमात्रस्यासम्भवादित्यर्थः। नन्विदं न युक्तमस्य स्त्री ई याः निष्क्रान्ता निरिरित्यत्र प्रत्ययमात्रस्यापि तत्सम्भवात् नच तस्य तत्वे फलाभावो निरेरपत्यमित्यर्थे स्त्रीप्रत्ययान्ततदादेर्टगित्यर्थकात्स्त्रीभ्योटगितिसूत्रात् निरिशब्दाड्ढगभावस्यैव फलत्वसम्भवात् उपसर्जने तदादिनियमाभावे र-

अस्याः प्रत्ययग्रहणे [प. २३] इत्यस्यापवादत्वात्तदेक-वाक्यतापन्नत्वाच्चात्रापि ग्रहणपदसम्बन्धेन स्त्रीप्रत्ययसा-मान्यग्रहणे विशेषग्रहणे च प्रवृत्तिर्न तु स्त्रीप्रत्ययास्त्रीप्र-त्ययग्रहणे । ध्वनितं चेदमर्थवत् (१.२.४५) सूत्रे भाष्ये । इयं च वाचनिक्येव ष्यङः (६.१.१३) इति सूत्रे भाष्ये स्पष्टा ॥ २६ ॥

शब्दस्य स्त्रीप्रत्ययान्ततदादित्वाभावादितिचेन्न, अतिकारीषग-न्ध्यापुत्र इत्यत्र प्रत्ययमात्रस्य तदसम्भवादित्यर्थात् स्त्रीबोध-काट्टगित्यर्थस्यैव ढकि लोप इत्यनेन ज्ञापनसम्भवेन फला-भावाच्च स्त्रीप्रत्ययान्तएवानुपसर्जनत्वान्वयस्य पूर्वमुक्तत्वे-शास्त्रीयस्यापि ग्रहणे न दोष इत्यपि प्रागुक्तन्न विस्मर्तव्य-मिति दिक् । ( स्त्रीप्रत्ययसामान्यग्रहणे ) स्त्रीप्रत्ययत्वावच्छि-न्नबोधके इत्यर्थः । यथागोस्त्रियोरुपसर्ज्जनस्येत्यादौ (विशे-ग्रहणे) स्त्रीप्रत्ययत्वव्याप्यधर्म्मावच्छिन्नविषयताप्रयोजक-इत्यर्थः । यथा ष्यङस्संप्रसारणमित्यादौ । ( नतु स्त्रीप्रत्यया-स्त्रीप्रत्ययग्रहणे इति) उक्तस्थलद्वयातिरिक्ते स्त्रीप्रत्ययवृत्तिवि-षयताप्रयोजके नेत्यर्थः । ( अर्थवत्सूत्रे इति ) तत्रत्यप्रत्ययप-स्यापि स्त्रीप्रत्ययवृत्तिविषयताप्रयोजकत्वेनैतत्परिभाषयाऽनु-पसर्ज्जने तदादिनियमाभावेन राजकुमारीतिसमासस्य प्रत्ययान्त-त्वेन पूर्वेणाप्राप्तप्रातिपदिकत्वविधानाय चारितार्थ्यसम्भवे समासग्रहणस्य नियमार्थत्वोक्तिरसङ्गता स्यादिति तत्र तद-वृत्तिर्ध्वनितेतिभावः । ( वाचनिक्येवेति ) भाष्यकारेण ज्ञा-पकन्नोपन्यस्तमितिभावः नतु ज्ञापकन्न सम्भवतीति, अ-

नन्वेवं तरप्तमपौ घः [१.१.२२] इत्यादिना तरबन्तादेः संज्ञा स्यादत आह—

## संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥ २७ ॥

ज्ञासूत्रे नेयङुवङ् स्थानावस्त्रीत्यतोऽस्त्रीपदस्य सम्बन्धस्तस्य स्त्रीबोधकभिन्नोर्थस्तस्य च प्रत्यय अन्वयः स्त्रीबोधकश्च प्रधानाप्रधानन्यायेनानुपसर्ज्जन एव गृह्यते तथाचानुपसर्ज्जनस्त्रीबोधकाभिन्नप्रत्यये गृह्यमाणे तदादिरित्युपतिष्ठत इत्यर्थादनुपसर्ज्जनस्त्रीप्रत्यये तदादिनियमालाभादियं परिभाषा लब्धेति ज्ञापनसम्भवात् ॥

नन्वेवमिति— । प्रत्ययग्रहणपरिभाषायास्स्वीकार इत्यर्थः। (संज्ञाविधाविधि) ननु कोऽस्या अर्थः। संज्ञाविधायकशास्त्रघटकं प्रत्ययबोधकं पदन्तदन्तबोधकन्नेत्येव यद्यपि शब्दमर्य्यादया लभ्यते परन्त्वस्मिन्नर्थे प्रातिपदिकसंज्ञाविधायकशास्त्रघटकं प्रत्ययबोधकं प्रत्ययपदमपि तदन्तबोधकन्न स्यात् तथाच प्रत्ययान्ताभिन्नमित्यर्थो न स्यात् नापि संज्ञानिष्ठविधेयताया साक्षान्निरूपिता योद्देश्यता तत्प्रयोजकं प्रत्ययबोधकं पदन्तदन्तबोधकन्नेत्यर्थः प्रातिपदिकसंज्ञया साक्षान्निरूपितोद्देश्यतायाः प्रयोजकमर्थवत्पदन्नतु प्रत्ययपदमिति न तत्र निषेध इति युक्तं, कृदतिङित्यादौ कृत्संज्ञानिष्ठविधेयतया साक्षान्निरूपितोद्देश्यतायाः प्रयोजकत्वस्याभावात्तिङ्पदे तदन्तबोधकत्वापत्तेः। अत्रोच्यते संज्ञानिष्ठविधेयतया साक्षान्निरूपिता प्रत्ययत्वव्याप्यधर्म्मेण साक्षादवच्छिन्ना योद्देश्यता

तत्प्रयोजकशास्त्रघटकं प्रत्ययबोधकं पदन्तदन्तबोधकन्नेत्यर्थः अर्थवत्सूत्रे विधेयतया साक्षान्निरूपितायाः प्रत्ययत्वेन साक्षादवच्छिन्नत्वाभावान्न निषेधः । कृदतिङित्यादौ च कृत्संज्ञानिष्ठविधेयतया साक्षान्निरूपितायास्तस्याः प्रत्ययत्वेन साक्षादवच्छिन्नतया तत्प्रयोजकशास्त्रघटकत्वात्तिङ्पदे निषेधः अथवा संज्ञानिष्ठविधेयतया साक्षान्निरूपितप्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यताप्रयोजकं पदन्तदन्तबोधकन्नेत्यर्थः अर्थवत्सूत्रे प्रत्ययत्वावच्छिन्नोद्देश्यतायाः संज्ञानिष्ठविधेयतया साक्षान्निरूपितत्वविरहान्न निषेधः कृदतिङित्यादौ तिङ्त्वावच्छिन्नोद्देश्यतायाः कृत्संज्ञानिष्ठविधेयतया साक्षान्निरूपितत्वविरहेण निषेधाप्रवृत्तावपि प्रत्ययग्रहणेनैव तिङन्ततदादिभवतीत्यादिव्यावृत्तौ तदन्तविधिना तिङन्ततदादिव्यावर्तकातिङ्पदस्य वैयर्थ्यापत्त्या सामर्थ्यात्तदन्त विध्यभावः।न च व्यतिसे इत्यत्र सेमात्रस्य प्रत्ययत्वेऽपि व्यपदेशिवद्भावेन तिङन्ततदादित्वात्तद्व्यावर्तनार्थमातिङ्ग्रहणमस्त्विति वाच्यम् व्यपदेशिवदेकस्मिन्नित्यनेन स्वस्मिन् स्वघटकत्वस्वघटितत्वयोरेवातिदेशस्य लोकदृष्टान्तेन लाभात् स्वस्मिन् स्वान्ततदादित्वस्य तेन न्यायेनातिदेशाभावेनातिङ्पदवैयर्थ्यात् सेमात्रप्रयोजनकत्वे नह्येकमुदाहरणमितिन्यायेनातिङ्ग्रहणस्य वैयर्थ्यापादनं न सम्यक् अशब्दादाचारक्विन्तादाशिषि लिङि अतो लोपे यात् इत्यत्रापि प्रयोजनसम्भवान्नह्येकमुदाहरणमितिन्यायस्य विषयाभावात् अथवा तिङन्ततदादिभिन्न इत्यर्थे प्रत्ययमात्रस्य कृत्संज्ञापत्तौ अकृत्सार्वधातुकयोर्दीर्घ इत्यत्र कृद्ग्रहणेनैव सिद्धौ सार्वधातुकग्रहणस्य वैयर्थ्यापत्त्या अत्र तदन्तविध्यभावः कल्प्यत इत्यदोषः अथवा प्रत्ययमात्रोद्देश्यके संज्ञारूपे कार्ये

तिङन्ततदादेः पर्य्युदासेन तिङ्पदस्य स्वबोध्यावयवपरत्वं अवयवोद्देश्यक कार्य्ये यत्र समुदायः पर्य्युदस्यते तत्र समुदायबोधकपदानां स्वावयवपरत्वात् तथाच तिङन्ततदाद्यवयवभिन्नस्येत्यर्थेनादोषात् अत एव नश्छव्यप्रसानिति सूत्रे प्रसान्शब्दस्यात्वसन्तस्य चाधातोरिति सूत्रस्थधातुपदस्य च स्वावयवपरत्वेन प्रसान्शब्दावयवभिन्नस्य नस्येत्यर्थः धात्ववयवभिन्नोयोऽस्तदन्तस्योपधाया इत्यर्थः, षः प्रत्ययस्येत्यत्रप्रत्ययस्यादिः ष इदित्यर्थे प्रत्ययपदस्येत्संज्ञानिष्ठविधेयतया साक्षान्निरूपितोद्देश्यताप्रयोजकत्वाभावेन निषेधाप्राप्त्या प्रत्ययान्ततदाद्यादिः ष इत्यर्थापत्त्या षण्णामित्यादौ प्रकृतिषकारस्येत्वापत्तिस्तु न, प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारेणेत्संज्ञानिष्ठविधेयतया साक्षान्निरूपिताया आदिषत्वावच्छिन्नविषयताया अपि प्रत्ययत्वव्याप्यधर्म्मावच्छिन्नत्वेन तत्प्रयोजकं षःप्रत्ययस्येतिसूत्रन्तद्घटकप्रत्ययपदस्य तदन्तबोधकत्वाभावस्यानेन बाधनसम्भवात् नचाद्यार्थे दोषाभावेऽपि द्वितीयार्थे दोष एव प्रत्ययपदस्य तावतापि संज्ञानिष्ठविधेयतया साक्षान्निरूपितविषयताप्रयोजकत्वाभावात् इतिवाच्यं नागेशमते सूत्रान्तर्गतानामेवेत्संज्ञालोपयोरसत्वेन प्राचांष्फस्तद्धित इतिसूत्रघटकं यत्प्रत्ययबोधकं ष्फपदं तद्बोधकत्वेऽपि षःप्रत्ययस्येतिसूत्रघटकप्रत्ययपदस्य प्रत्ययबोधकत्वाभावेन प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्या तदाद्युपस्थितेरवाभावेन तदन्तविधेरप्रसङ्गात् सामन्त्रितमित्यादौ आमन्त्रितेतिमहासंज्ञयाऽऽमन्त्रणं येन भवति तस्यैवामन्त्रितसंज्ञेतिबोधनात्तदन्तविधिः प्रत्ययमात्रेणामन्त्रणस्यासम्भवात्, तद्धितश्चासर्वविभक्तिरित्यत्रासर्वविभक्ति विशेष्यमादाय तदन्तविधिस्तदादिविशेष्यकतदन्तविधेरे-

सुप्तिङन्तम् (१.४.१४) इत्यन्तग्रहणमस्या ज्ञाप-
कम् । न च प्रत्यययोः पदसंज्ञायामपि प्रत्ययग्रहणप-
भाषया तदन्तग्रहणसम्भवाज्ज्ञापितेऽपि फलाभाव इ-
वानेन निषेधात् अत्युच्चैसावित्यादौ लुगभावायाव्ययादाप्सु
इत्यादौ विहितविशेषणस्यावश्यकत्वेन प्रत्ययमात्रस्याव्ययसं-
यां फलाभावाच्च,अतएव कुम्भेजन्त इत्यत्र निषेधो न। कृत्त-
तसमासाश्चेत्यत्रार्थवदनुवृत्तिसामर्थ्यात्तदन्तविधिः कृत्ताद्धता-
न्चैवार्थवदितिभाष्येण कृत्ताद्धितयोरर्थवत्त्वाभावादितिशे-
स्पष्टम् सर्वादिगणघटकडतरडतमप्रत्यययोस्तदन्तविध्युपा-
कौमुद्यामेव स्पष्टस्तथैव वतुडतिप्रत्यययोरपि तदन्तविधिः
वस्तुतस्तु नास्या उपयोगः, प्रत्यग्रहणपरिभाषया तदादीति
तिपदिकमात्रस्योपस्थितिस्तस्य यथैङ्ह्रस्वादित्यत्रान्वयानुरो
न पञ्चम्यन्तता तथा यत्रास्याः प्रवृत्तिरिष्यते तत्रापि पञ्चम्य-
न्ततैव तथाच तदन्तविधेरप्राप्त्या न दोषः स्वीकृतायामप-
स्यामनेकत्रानेकक्लिष्टकल्पनाया आवश्यकत्वेन तदपेक्षया प-
भाषाया अकरणलाघवेन तदादेः पञ्चम्यन्तत्वकल्पनाया
लघीयस्त्वात् ( अन्तग्रहणमस्याज्ञापकमिति ) अस्या अ-
तदादिरूपविशेष्यमादाय तदन्तविधौ सुबन्ततिङन्ततदादि-
र्थस्यान्तग्रहणाभावेपि लाभादितिभावः ननु अन्तग्रहणं स-
तदादिविशेष्यकतदन्तविधिना सुप्तिङ्पदस्य सुबन्ततिङन्त-
दादीत्यर्थः सुप्तिङ्पदस्यान्तशब्देन बहुव्रीहौ सुबन्तान्त-
ङन्तान्तयोः पदसंज्ञा अन्तग्रहणाभावे सुबन्ततिङन्ततदादि-
तिफलभेदात् कथं ज्ञापकमिति चेन्न अन्तग्रहणे सति तदा-
पस्थितावपिअन्ताविशेषणतयोपस्थितयोः सुप्तिङोस्तत्र वि-

वाच्यम्। पदसंज्ञायाः स्वादिषु (१.४.१७) इति विषये प्रकृतिनिष्ठत्तया पदग्रहणस्य प्रत्ययमात्रग्रहणत्वाभावात्। सुप्तिङन्तम्[१.४.१४]इति सूत्रे भाष्ये स्पष्टा॥२७॥

नन्ववतप्ते नकुलस्थितमित्यादौ नकुलस्थितशब्दस्य क्तान्तत्वाभावात्समासो न स्यादत आह।

## कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् २८

पत्वायोगात् एकत्र विशेषणतयाऽन्वितस्यापरत्रविशेषणतयाऽन्वयो नेतिव्युत्पत्तेः तथाच तदादेरेव सुप्तिङन्तेऽभेदेनान्वय इति फलैक्यसम्भवात् विशेष्यान्तरासत्वे इत्यस्य प्रकारान्तरेण तदन्तार्थलाभसम्भवे तदादिविशेष्यकतदन्तविधिर्नेत्यर्थः क्वचित् विशेष्यान्तरमादाय तल्लाभः क्वचिदन्तग्रहणात्तल्लाभोऽत एव सनाद्यन्ताइत्यत्र न तदादिविशेष्यकतदन्तविधिस्तथाच प्रकृते न तदादिविशेष्यकतदन्तविधिप्रयुक्तफलभेदाशङ्कापीत्यपि कश्चित् ॥ २७॥

नन्वेवमवतप्तइति = । प्रत्ययग्रहणपरिभाषया क्तान्ततदादिप्रकृतिकसुबन्तेन सह सप्तम्यन्तः समस्यत इत्यर्थेन नकुलस्थितशब्दस्य क्तान्ततदादित्वाभावात् समासो न स्यादित्यर्थः। ( कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति ) कृन्मात्रनिष्ठविषयताप्रयोजकं पदं कृद्विशिष्टे लाक्षणिकमित्यर्थः। वैशिष्ट्यञ्च स्वनिष्ठचरमावयवतानिरूपकत्व स्वविशिष्टाघटितत्वोभयसम्बन्धेन पुनर्वैशिष्ट्यं स्वेतरत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाव्यवहितपूर्वत्वविशिष्टगतिकारकान्यतरेतरत्वैतत्त्रितयसम्बन्धेन एवं

अस्याश्च कर्मणि क्तान्त उत्तरपदेऽनन्तरो गति
प्रकृतिस्वर इत्यर्थके गतिरनन्तरः [६.२.४९] इति सू
ऽनन्तरग्रहणं ज्ञापकम् । तद्ध्यभ्युद्धृतमित्यादावतिव्या
प्तिवारणार्थम् । प्रत्ययग्रहणपरिभाषयोद्धृतस्य क्तान्त
त्वाभावादेवाप्राप्तौ तद् व्यर्थं सदस्या ज्ञापकम् । न च
भ्युद्धृतमित्यादौ परत्वाद्गतिर्गतौ (८.१.७०) इत्य

भूतोनकुलस्थितशब्दः समन्वयः स्पष्टः लक्ष्यतावच्छेदकेन त
त्प्रत्ययविशिष्टत्वेनैव कृदन्ततदादेः, गतिकारकविशिष्टस्य त
च ग्रहणं, अथवोक्तसम्बन्धैः कृद्विशिष्टे कृदन्ततदादित्वारो
ऽनया बोध्यते ततश्च कृदन्ततदादित्वेनैवोभयोर्बोधः ॥ ए
शाब्दबोधे शक्तिलक्षणाज्ञानस्य हेतुत्वात्तदभावेन परिभाष
बोधितोऽपि गतिकारकपूर्वस्यबोधोऽसङ्गत एवेत्यपास्तम्
ज्ञापितेऽपि कथं चरितार्थमित्याह ( नचाभ्युद्धृतमित्यादावि
पदात्परत्वाभावेनचेति नन्विदमयुक्तं कुत्सने च सुपीत्यतः
गेव पदादित्यस्य निवृत्तेरन्यत्र स्पष्टत्वात् गतिर्गतावित्यस्य
ततःपरत्वादितिचेत् अत्र चन्द्रिकाकाराःचो हेतौ यतः पदात्
त्वाभावोऽतः पादादिस्थत्वमिति व्याचख्युः तन्न पदात्परस्या
श्लोकद्वितीयपादादेः पदस्य पादादिस्थत्वेन पदात्परत्वाभाव
पादादिस्थत्वं प्रतिव्यभिचरितत्वेन हेतुत्वासम्भवात् तस्मादयु
मेवैतदिति परे । नच परिभाषायां सत्यामुद्धृतशब्दस्य क्तान्त
पदेन ग्रहणे तदनन्तरत्वमेवाभेरिति कथं तद्व्यावृत्त्या चरितार्थ
नन्तरग्रहणमित्यत आह [सामर्थ्यादिति]अनन्तरग्रहणसामर्थ्या
दित्यर्थः। यावता बिना न चारितार्थ्यं तावज्ज्ञाप्यमिति न्याया
दितिभावः । नच गतिसमभिव्याहारेऽनया विशिष्टस्यैव क

नामेर्निघात एवेति वाच्यम् । पादादिस्थत्वेन पदात्पर-त्वाभावेन च तदप्राप्तेः । अनन्तरग्रहणे कृते तु तत्सा-मर्थ्यादृस्याक्षिप्तधातुनिरूपितमेवानन्तर्यं गृह्यते इति न दोषः । न चाभ्युद्धृतमित्यादावभिना समासेऽनन्तर स्योदः पूर्वपदत्वाभावेऽपि स्वरार्थं तदिति वाच्यम् । का-रकाद्दत्तेति [१.२,१४८] सूत्रे कारकादिति योगं विभ-ज्य गतिग्रहणमनुवर्त्य कारकादेव परं गतिपूर्वपदं क्तान्त-मन्तोदात्तमिति नियमेन थाथादिस्वराप्राप्त्या कृत्स्वरे-णोद उदात्तत्वासिद्धेः । तस्मादनन्तरग्रहणं व्यवहितनि-वृत्त्यर्थमेवेति ज्ञापकमेव । यत्र गतिकारकसमभिव्याहृ-

क्तान्तपदेन ग्रहणे तदव्यवहितपूर्वस्य धात्वनन्तरत्वं बाधितमि-तिवाच्यं पुनः सामर्थ्याद्गतिसमभिव्याहारेऽपि क्तान्ततदादेरेव ग्रहणं कृद्ग्रहणेनेत्यस्य मूल एव स्पष्टत्वात् । अनन्तरग्रहणस्य परिभाषाज्ञापनमन्तरापि चारितार्थ्यं शङ्कते (नचाभ्युद्धृतमि-त्यादावभिनेति । नचोद्धृतशब्दस्याभिना समासेऽपि उद्धृतरूपस-मासीयपूर्वपदत्वमुदोऽक्षतमवेति कथमपूर्वपदत्वन्तस्येति वाच्यम् उद्धृतरूपसमासीयपूर्वपदत्वमादाय प्रवृत्तं गतिरनन्तर इति सूत्रं तत्समासीयथाथादिस्वरस्यैव प्रत्यासत्या बाधकं स्यान्नत्वभ्यु-द्धृतेतिसमासीयस्य बहिरङ्गत्वादिति । विशिष्टसमासीयथाथादि-स्वरबाधनार्थं तत्समासेऽपि गतिरनन्तर इतिसूत्रं प्रवर्तनीयं तत्-समासापूर्वपदत्वाच्च न प्राप्नोति उक्तरीत्याऽनन्तरग्रहणसामर्थ्या-दनन्तरमात्रस्य भवतीत्यर्थबोधनद्वारा अपूर्वपदत्वेऽपि स्वरार्थम-स्तु न परिभाषायां ज्ञापकमित्याशयात्, अभ्युद्धृतं पुरोहितमि-

तं कृदन्तं तत्र कृद्ग्रहणे तद्विशिष्टस्यैव ग्रहण मपिश
ब्दात्तदसमभिव्याहृतस्य केवलस्यापीत्यर्थः । अन्यथाऽ
स्या कृद्ग्रहणविषये परत्वात् प्रत्ययग्रहणपरिभाषाया बा
एव स्यादित्यपिग्रहणम् । अतएव साङ्कूटिनमिति
तिकारकोपपदानाम् (प०७५) इति कृद्ग्रहण इति

त्यादौ समासस्वरः प्राप्तस्तम्बाधित्वाऽव्ययपूर्वपदप्रकृतिस
स्तम्बाधित्वा गतिकारकोपपदादितिकृत्स्वरस्तम्बाधित्वा
थादिस्वरः प्राप्तस्तम्बाधित्वा गतिरनन्तर इतिप्रकृतिस
इतिस्वरप्रक्रिया अभ्युद्धृतमित्यत्र गतिरनन्तर इत्यस्याभा
थाथादिस्वरेणान्तोदात्तत्वं स्यात्तच्चेत् कारकादेवपरमि
नियमेन वारिते तदा गतिकारकोपपदात्कृत इत्यनेन प्र
तिस्वरेण उद उदात्तत्वसिद्धया तत्र गतिनन्तर इत्यस्य
प्रवृत्तावपि क्षतिविरह इति भावः, नचास्यामवस्थायां परि
भाषाया अभावेन उद्धृतशब्दस्यकृदन्ततदादित्वक्तान्ततदादि
त्वविरहात् कृत्स्वरस्य थाथादिस्वरस्य वा न प्राप्तिरिति वा
अनोरचेत्यादाविवात्रापि उत्तरपदं विशेष्यमादाय द्वितीयत
न्तविधिना कृदन्तान्तमुत्तरपदमित्याद्यर्थस्वीकारेणादोषा
( अपिशब्दात् तदसमभिव्याहृतस्येति ) यद्यपि नेयमपिशब्द
मर्य्यादा ब्राह्मणमानय शूद्रमप्यानयेत्युक्तौ ब्राह्मणसत्वेऽपि
शूद्रस्यानयनं प्रतीयते नतु तदसत्व एव तथाच तदसभिव्या
हार इत्यसङ्गतं, तथाप्यग्रिमभाष्यात्तदसमभिव्यारइत्यंशस्य ला
भेनादोषात् ( अन्यथा ) अपिशब्दाभावे परत्वादित्यस्याप
दत्वादित्यर्थः यथाश्रुतन्तु न युक्तमन्यत्रास्याः चारिताथ्य
भावात् । यत्तु व्यावक्रोशीत्यत्र स्त्रीप्रत्यय इतिनिषेधेन अत

परिभाषाभ्यां कृदन्तेन समासे कृते विशिष्टादेवाणि सिध्यति न तु सङ्कौटिनामितीति पुंयोगात् (४.१४८) इति सूत्रे भाष्योक्तं सङ्गच्छते । अन्यथा तत्र केवलं कूटिन्नित्येतस्यापीनुणन्तत्वात्ततोऽणि पाक्षिकदोषो दुर्वार एव स्यात् स्पष्टं चेदं समासेऽनञ्पूर्वे ( ७.१.३७ ) इति सूत्रे भाष्यकैयटयोः । गतिरनन्तरः [६,२,४९] इत्यत्र तु गतेः पूर्वपदस्य क्तान्त उत्तरपदे परे कार्यविधानात्तत्समवधानेऽपि केवलस्य क्तान्तत्वेन ग्रहणं बोध्यम् । इयं च कृद्विशेषग्रहणे कृत्सामान्यग्रहणे च न तु कृदकृद्ग्रहण इति, अनुपसर्जनात् [४.१.१४] इति सूत्रे भाष्ये स्पटम् ॥ २८ ॥

ग्रहणपरिभाषाया अप्रवृत्त्या अस्याश्चारितार्थ्यमिति परत्वमपि सुवचमिति तन्न तत्रैतस्या अप्यप्रवृत्तौ दोषाभावेन चारितार्थ्यस्य साफल्यरूपस्याभावात् (अतएवेति) गतिसमभिव्याहारे केवलस्याग्रहणादेवेत्यर्थः । अहीनवाचिनि समासे क्तान्ततदादौ परे द्वितीयान्तं प्रकृत्येत्यर्थके अहीने द्वितीयेतिसूत्रेऽनुपसर्ग इति वक्तव्यं नेह सुखप्राप्त इति भाष्यउक्तं तदप्यस्याज्ञापकं नहि परिभाषां विना सुखप्राप्त इत्यत्र द्वितीयान्तस्य क्तान्ततदाद्युत्तरपदाव्यवहितपूर्वत्वं सम्भवतीति केचित्, ननु गतिसमभिव्याहारे केवलकृदन्तस्याग्रहणे उद्धृतं पुरोहितमित्यादौ गतिरनन्तर इति न स्यादतआह ( गतिरनन्तरं इत्यत्रेति ) तत्समवधानेऽपि केवलस्येति तत्र सूत्रसामर्थ्यात् केवलस्य ग्रहणेप्यन्यत्रोक्तभाष्यादग्रहणमेवेतिभावः । कृद्विशेषग्रहणे क्षेपइत्यादौ,

## पदाङ्गाधिकारे तस्य तदन्तस्य च ॥ २९ ॥

पद मङ्गं च विशेष्यं विशेषणेन च तदन्तविधिः। येन विधिः (११७२) इत्यस्यायं प्रपञ्चः । तेनेष्टकचित पक्वेष्टकचितमित्यादाविष्टकेषीकामालानां चित[६.३.६५] इति ह्रस्वो महान्परममहान् परमातिमहानित्यादौ सान्त महतः [६.४.१०] इति दीर्घ श्चसिद्धः । अत एव तदु त्तरपदस्येति पाठोऽयुक्त इति भाष्ये स्पष्टम् । अत्र प शब्देनोत्तरपदाधिकारः केवलपदाधिकारश्च । पादस्य प दाज्याति (६.३५२) इत्यत्र न तदन्तग्रहणं लक्ष्यानु घादिति सर्वं येन विधिः [१.१.७२] इत्यत्र भा स्पष्टम् ॥ २९ ॥

नन्वेव मस्यापत्यमिरित्यादावदन्तप्रातिपदिकाभा वादिञ् न स्यादत आह—

सामान्यग्रहणे कर्तृकरणेकृतेतिसूत्रे [ नतु कृदकृद्ग्रहण इति अतएव कौम्भकारेयसिद्धिर्द्वितीयतदन्तविधेः फलमुक्तं द्वि तिसूत्रे भाष्ये ।

नन्वेवमिति = । विशेषणेन तदन्तविधावित्यर्थः । (अ दन्तप्रातिपदिकाभावादिति ) अन्तत्वं यत्किञ्चिद्विशिष्टत्वं वै स्वघटकत्व स्वघटकवर्णप्रागभावाधिकरणक्षणावृत्तित्वोभय सम्बन्धेन आदित्वं यत्किञ्चिद्विशिष्टत्वं वै० स्वघटकत्वस्व कवर्णध्वंसाधिकरणक्षणावृत्तित्वोभयसम्बन्धेन मध्यत्वञ्च स

व्यपदेशिवदेकस्मिन् ॥ ३० ॥

निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारो

टकत्वस्वघटकवर्णप्रागभावाधिकरणक्षणवृत्तित्व स्वघटकवर्णध्वंसाधिकरणक्षणवृत्तित्वैतत्त्रितयसम्बन्धेन घटकत्वञ्च स्वव्यापकत्वस्वव्याप्यत्वाभाववत्त्वैतदुभयसम्बन्धेन यत्किञ्चिद्विशिष्टत्वं, व्यापकत्वञ्च स्वाधिकरणवृत्त्यभावाप्रतियोगित्वं व्याप्यत्वञ्च स्वाभाववदवृत्तित्वं प्रकृते उभयत्राधिकरणता वृत्तिता प्रतियोगिता विषयितासम्बन्धावच्छिन्ना ग्राह्या ज्ञानरूपाधिकरणमादाय लक्षणसमन्वयः। तथा अदन्तत्वादादित्वे अकारविशिष्टत्वरूपे वै० स्वघाटितत्व स्वध्वंसाधिकरणक्षणवृत्तिवर्णाघटितत्वोभयसम्बन्धेन स्वघटितत्व स्वप्रागभावाधिकरणक्षणवृत्तिवर्णाघटितत्वोभयसम्बन्धेन एवमकारमध्यकत्वमपि अकारविशिष्टत्वं वै०स्वघटितत्व स्वध्वंसाधिकरणक्षणवृत्तिवर्णघटितत्व स्वप्रागभावाधिकरणक्षणवृत्तिवर्णघटितत्वैतत्त्रितयसम्बन्धेन वोध्यं घटितत्वञ्च स्वव्याप्यत्व स्वव्यापकत्वाभाववत्त्वोभयसम्बन्धेन यत्किञ्चिद्विशिष्टत्वं अत्रापि व्यापकता व्याप्यता तद्घटकाधिकरणतादयश्च पूर्वोक्तस्वरूपा एव, पकारादौ रामशब्दादिघटकत्ववारणाय व्यापकत्वं स्वस्मिन् स्वघटकत्ववारणाय व्याप्यत्वाभावो निवेशितः। एवं घटितत्वेऽपि वोध्यं प्रकृते चास्यापत्यमित्यादावद्विशिष्टत्वरूपमदन्तत्वमकारे नास्ति द्वितीयसम्बन्धस्य सत्वेऽपि स्वघटकत्वसम्बन्धस्याभावात् तथाच्चादन्तप्रातिपदिकत्वनिवन्धनमिञ् न स्यादिति परिभाषा मन्तव्या, कुम्भशब्दे ककारसकाररूपवर्णद्वये आदित्वापादनं केनचित् कृतं न युक्तं, तथाहि ककारे इष्टत्वात् मकारे स्वघटकवर्णध्व-

यस्यास्ति स व्यपदेशी । यस्तु व्यपदेशहेत्वभावादवि-

साधिकरणक्षणवृत्तित्वात् ककारमकारातिरिक्तस्य ककारमका-
ररूपवर्णद्वयस्यानङ्गीकारात् नच क्रमसमुदाये आपाद्यते समु-
दायश्च स्वमतेऽतिरिक्त इति वाच्यम् तादृशसमुदायत्वस्याव्य-
हितोत्तरत्वसम्बन्धेन कविशिष्टमत्वस्य अव्यवहितपूर्वत्वसम्बन्धे-
न मविशिष्टकत्वस्य वा वक्तव्यतया तद्वतः कुम्भशब्दे अभावात्,
नचाद्यन्तवदेकस्मिन्निति सूत्रेण आदित्वान्तत्वशरीरे घटकता
निवेशतात्पर्यकेण सूत्रमत्याख्यानपरेण अपूर्वानुत्तरलक्षणाहि
तिवार्तिकेन वा सिद्धे परिभाषाया न प्रयोजनमिति वाच्यं,प्रक्रि
सिद्धा वपि घुगित्यादौ धातौ धात्ववयवत्वस्य सूत्रवार्तिकाभ्या-
मसिद्ध्या, वार्त्तिकमते स्वस्मिन् स्वान्तत्वादिव्यवहारस्य मुख्य-
त्वा पत्या च परिभाषायाःसूत्रवार्तिकोभयप्रत्याख्यानपराया अव-
तारस्यावश्यकत्वात्,एकस्मिन्नित्यस्यासहाये इत्यर्थः सभास-
न्नयनेत्यादिव्यावर्त्यत्रयप्रदर्शनेनातिदिश्यमानधर्म्मवदसमभि-
व्याहृतत्वेसति अतिदिश्यमानधर्मवद्घटकत्वेसति अतिदिश्यमा-
नधर्मवद्घटितत्वमसहायत्वमिति ग्रन्थकृता सूचितम् सभाकारेऽ-
तिदिश्यमानसभासन्नयननिरूपितादित्वधर्म्मवत्सभसमभिव्या-
हृतत्वेनासहायत्वाभावान्नतन्निरूपितादित्वं न वा सभासन्न-
यनशब्दे वृद्धत्वातिदेशोऽतिदिश्यमानवृद्धत्वधर्म्मवद्भासन्नयन-
घटितत्वेनासहायत्वाभावात् नाप्यासन्नयनशब्दे प्रातिपदिक-
त्वातिदेशोऽतिदिश्यमानप्रातिपदिकत्ववत्सभासन्नयनशब्दघट-
कत्वेन ससहायत्वात् इत्यंशत्रयस्यैकत्रापि साफल्यं सम्भवति
एवं दरिद्राशब्दघटकेकारे न दरिद्रानिरूपितान्तत्वं नवा दरिद्राश-
ब्दे धातुत्वं नवा दरिद्राशब्दे इवर्णान्तत्वं क्रमेणांशत्रयस्य व्य-
भिचारेण ससहायत्वात् नापि हरिष्वित्यादौ सोःपदत्वं पदत्व-

द्यमानव्यपदेशोऽसहायः स तेन तुल्यं वर्त्तते कार्यं प्रतीत्येकस्मिन्नसहायेऽपि तत्कार्यं कर्त्तव्यमित्यर्थः । तेनाकारस्याप्यदन्तत्वान्न क्षतिः । एकस्मिन्नित्युक्तेः सभासन्नयन आकारस्य नादित्वं दरिद्राधाताविकारस्य नान्त-

वद्घटकत्वात् तथा च स्वविशिष्टे स्वस्यातिदेश इति परिभाषार्थः पर्य्यवसितः वै० स्वाश्रयाघटकत्वस्वाश्रयासमभिव्याहृतत्वस्वाश्रयाघटितत्वैतत्त्रितयसम्बन्धेन, नन्वेवं रामादिशब्दे उक्तसम्बन्धत्रयेण जराशब्दान्तत्वविशिष्टे, जराशब्दान्तत्वातिदेशापत्तिरितिचेन्न स्वमुखप्रविष्टधर्म्मवत्त्वात्मकचतुर्थसम्बन्धस्यापि निवेशनीयत्वात् प्रकृते स्वं जराशब्दान्तत्वं तन्मुखप्रविष्टं जरात्वं तद्वत्ताविरहेणादोषात् मुखप्रविष्टत्वञ्च स्वघटकनिष्ठा याऽवयवत्वव्याप्यधर्म्मावच्छिन्ना विशेष्यता तन्निरूपितप्रकारतावच्छेदकत्वं, यथा जराशब्दान्तत्वमुखप्रविष्टं जरात्वमदन्तत्वमुखप्रविष्टमत्वं अवयवत्वव्याप्यत्वानिवेशाद्धातौ धातुभिन्नत्वस्य नातिदेशः धातुत्वस्य तत्रमुखप्रविष्टत्वाभावात्, केवलधातोः प्रयोगाभावेन समुदाये धातुभिन्नत्वरूपातिशयमानधर्म्मस्य सत्वेन तदघटकत्वरूपसम्बन्धस्य तत्रासत्वाच्च, एवं भेदघटितधर्म्माणामतिदेशो निरसनीयः, ननु एकाच्त्वातिदेशो न स्यात् तत्रावयवत्वव्याप्यधर्म्मस्याभावेन मुखप्रविष्टधर्म्मस्याभावादिति चेन्न एकाज्निष्ठावयवतानिरूपकत्वस्यैवैकाच्त्वरूपत्वेनावयवत्वस्यैवावयवत्वव्याप्यत्वात् एवमेव धात्ववयवस्याप्यतिदेशः तादात्म्यसम्बन्धेन धातौ, तेन धुगित्यादौ न दोषः, एतेनकारादावजव्यवहितपूर्वत्वातिदेशेन यणापत्तिः, धुगित्यादौ धात्ववयवत्ववदकारघटितत्वेन ससहायत्वादतिदेशाना-

त्वम् । अन्यथा समासन्नयने भव इत्यर्थे वृद्धाच्छः [४.२.११४] दरिद्रातेरिवर्णान्तलक्षणोऽच्च स्यात् । अत एव हरिष्वित्यादौ सोः पदत्वं न । लोकेऽपि बहुपुत्रसत्त्वे नैकस्मिन् ज्येष्ठकनिष्ठत्वादिव्यवहारोऽयं मे ज्येष्ठः

पत्तिश्च केनचिदुक्ता निरस्ता, आद्ये मुखप्रविष्टधर्माभावात् एकपदप्रतिपाद्यस्य पूर्वत्वाद्यघटितस्यैव धर्मस्यातिदेश इत्यर्थस्यातिदेशमात्रस्वभावसिद्धत्वाच्च इदानीमतिदिश्यमानधर्मवदघटितत्वस्यानिवेशाद्द्वितीयापत्तेरप्यभावाच्च, यदपि कुम्भशब्दादिकक्कारेहल्द्वयघटितत्वातिदेशेन विशिष्टस्यैकहलादित्वानापत्तिरित्युक्तन्तदप्यविचारसहम् व्यपदेशिसदृशं कार्यं लभत इत्युक्त्या कार्य्यप्रवृत्तये एवैतत्प्रवृत्तिलाभात् मुखप्रविष्टधर्माभावाच्चेत्यलं परदोषे दृष्टिपातेन फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात् कर्मत्वमित्यस्य कागतिस्तत्रमुखप्रविष्टधर्माभावाादिति चेदयुक्तमेव तादात्म्यस्यापि फलतावच्छेदकसम्बन्धतास्वीकारेण कर्मत्वोपपत्तेः,परेतु स्वस्मिन् स्वघटकत्व-स्वघटितत्वयोरेवानयाऽतिदेशः परिभाषार्थस्तु एकस्मिन् घटकत्वघटकव्यापकत्वसम्बन्धे, घटितत्वघटकव्याप्यत्वसम्बन्धे सति व्यपदेशिवत् पूर्वोक्तसम्बन्धद्वयविशिष्टवत् कार्य्यम्भवति अर्थात् तत्र यथा घटकत्वघटितत्वप्रयुक्तं कार्य्यन्तथा एकस्मिन्नपि सम्बन्धे सति भवतीति तावतैव अन्तत्वादित्वैकाच्त्वधातवयवत्वादिव्यवहारोपपत्तिरितिविभावनीयम् इयान् इरित्यादौ च ताद्धितान्तत्वस्य घटकत्वमात्रातिदेशन लाभेऽपि तदादित्वालाभात् कार्य्यकालपक्षे प्रातिपदिकसंज्ञायाअप्राप्त्यापत्तेः यथोद्देशपक्षे पूर्वजातप्रातिपदिकत्वस्यानुमानिकस्यान्यादेशे

कनिष्ठो मध्यम इति किन्त्वेकपुत्रसत्त्व एव। अनेन भाकल्पनयातिदेशेन निर्वाहः, असहायत्वस्यानिवेशान्निजौ चत्वार एकाच इतिभाष्यमप्युपपद्यते ननु लोकन्यायसिद्धेयं परिभाषा लोके च ज्येष्ठत्वादीनामप्यतिदेश इति चेन्न घटकत्व-घटितत्वातिदेशेनैव ज्येष्ठत्वादिव्यवहारोपपत्तेः तथाहि पितृवि-शिष्टविशिष्टत्वं ज्येष्ठत्वं कनिष्ठत्वं मध्यमत्वञ्च आद्ये वै० सर्व-त्र स्वजन्यघटितत्व स्वाजन्याघटितत्वोभयसम्बन्धेन अन्त्ये वै० ज्येष्ठत्वे स्वघटकत्व—स्वघटकोत्पत्तिध्वंसाधिकरणक्षणावृत्त्युत्प-त्तिकत्वोभयसम्बन्धेन, कनिष्ठत्वे स्वघटकत्व—स्वघटकोत्पत्ति-प्रागभावाधिकरणक्षणावृत्त्युत्पत्तिकत्वोभयसम्बन्धेन, मध्यम-त्वे स्वघटकत्व स्वघटकोत्पत्तिध्वंसाधिरणक्षणावृत्त्युत्पत्तिकत्वस-म्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्व-स्वघटकोत्पत्तिप्राग-भावाधिकरणक्षणावृत्त्युत्पत्तिकत्वसम्बन्धावच्छिन्नप्रतियोगि-ताकस्वाभाववत्त्वैतत्त्रितयसम्बन्धेन आद्याभावनिवेशाज्ज्येष्ठे नाति व्याप्तिर्द्वितीयाभावनिवेशात् कनिष्ठे नातिव्याप्तिः। एकपु-त्रसत्वे घटकत्वमात्रातिदेशेन ज्येष्ठत्वकनिष्ठत्वयोरुपपत्तावपि म-ध्यमत्वन्नोपपद्यते अभावप्रतियोगितावच्छेदकसम्बन्धस्यैव तत्र सत्वेनाभावात्मकसम्बन्धद्वयस्य तत्रासत्वादिति न वाच्यमुभ-यत्राभावप्रतियोगितावच्छेदकसम्बन्धत्वेन वास्तविकघटकत्व-स्यापि विवक्षितत्वेन प्रथमसम्बन्धस्य सत्वेऽपि वास्तविकघट-कत्वस्यासत्वेनोभयसम्बन्धावच्छिन्नप्रतियोगिताकाभावात्म-कसम्बन्धस्य सुलभत्वात् घटकत्वमात्रातिदेशेन तृतीयसम्बन्ध-स्य घटकत्वरूपस्यापिसम्वलनान्मध्यमत्वोपपत्तिरितिविभावनी-यम्। ( अनेन चाशास्त्रीयस्यापीति ) शास्त्रीयत्वं शास्त्रशक्तेति-तावच्छेदकधर्मत्वम् अन्तत्वमादित्वञ्च येन विधिः, यस्मिन्

चाशास्त्रीयस्याप्यतिदेशः । अत एव इयायेत्यादावेकाच्त्वनिबन्धनद्वित्वसिद्धिः । अत एव भवतीत्यादौ भू इत्यस्याङ्गत्वम्, व्यतिसे इत्यादौ से इत्यस्यपदत्वम्, इयानित्यादौ कार्यकालपक्षे तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वं च सिध्यति । अन्यथा यस्माद्विहितस्तदादित्वाभावान्न स्यात् । यत्तु । यो ऽर्थवांस्तत्रार्थस्य त्यागोपादानाभ्यामेकाज्व्यपदेशो यथेयायेत्यादावर्थवतो धातोरयं वर्णरूप एकोऽजिति कैयटस्तन्न । तस्यैकपदगि

विधि रिति शास्त्रसङ्केतितावच्छेदकत्वेन यद्यपि शास्त्रीयन्तथाप्येकाच्त्वस्य तत्वाभावेप्यतिदेशः ॥ कैयटोक्तं खण्डयति (यत्ति) अयम्भावः वाचकत्वसम्बन्धेन फलव्यापारविशिष्टः शब्दः धातुस्सोन्यपदार्थः एकाजितिबहुब्रीहौ एकोच्शब्दमात्रं यस्मिन् फलव्यापारविशिष्टशब्दरूपे धातावित्येकाच्त्वमुपपद्यत इण्धातौ, ननु धातुरर्थविशिष्टश्शब्दस्तदवयवःकेवलइशब्दस्स कथमेकाच्तत्रान्यपदार्थस्यासम्भवादिति चेन्न फलव्यापारविशिष्टःशब्दो धातुस्तदवयवः फलविशिष्टःशब्द सएकोच्शब्दमात्रं यस्मिन् फलविशिष्टे इशब्दे एवंभूत इत्युपपन्नो धात्ववयव एकाच् इ इति (त्यागोपादानाभ्यामिति)वर्तिपदार्थविवक्षायामर्थस्य त्यागः शब्दमात्रस्य ग्रहणं, अन्यपदार्थविवक्षायामर्थोपादानमित्यन्यपदार्थे अज्घटितत्वमुपपन्नमिति,तन्नेति एवं रीत्या काच्त्वोपपादने एकपदाङ्गगित्यत्रत्यभाष्यरीत्या मुख्यव्यवहार एवेति व्यपदेशिवदेकस्मिन्नित्येतदुदाहरणत्वासङ्गत्या कैयटोक्तं न युक्तमितिनागेशाशयः ॥ ३० ॥

त्यत्र भाष्योक्तरीत्या मुख्यव्यवहारसत्त्वात्। एकपदर्गि-
त्यत्रार्थेन युक्तो व्यपदेश इति भाष्य उक्तम्। ऋक्त्वा
देरर्थशब्दोभयवृत्तित्वेन तस्याः शब्दमात्ररूपं पदमेकोऽव-
यव इत्यर्थ इति तदाशयः। तस्मादेकस्मिँस्तत्तद्धर्मारो
पेण युगपद्यथा ज्येष्ठत्वादिव्यवहारा यथा च शिलापु-
त्रकस्य शरीरमित्यादावेकस्मिन्नारोपितानेकावस्थाभिः
समुदायरूपत्वाद्यारोपेण तस्य शरीरमित्यादिव्यवहारस्त-
थात्रैकाच्त्वादिव्यवहारोपपत्तिरिति लोकन्यायसिद्धेयम्।
न चासहाय एवैतत्प्रवृत्तौ भवतीत्यत्र भूइत्यस्याङ्गत्वा-
नापत्तिः ससहायत्वादिति वाच्यम्। शपमादायाङ्गत्वेका
र्ये यस्माद्विहितस्तदादित्वे तस्य ससहायत्वाभावाल्लोके
विजातीयकन्यादिसत्वेऽप्येकपुत्रस्य तस्मिन्नेवायमेव ज्ये-
ष्ठ इत्यादिव्यवहारवत्। न चैवं निजौ चत्वार एकाच
इति भाष्यासङ्गतिरिकारस्यासहायत्वाभावेन तत्रैकाच्
त्वानुपपादनादिति वाच्यम्। एकस्मिन्नित्यस्यापर्यालो-
लोचनया तत्प्रवृत्तेः। अर्थवताव्यपदेशिवद्भाव इत्यत्रा-
र्थवत्पदेनाप्यसहायत्वमुपलक्ष्यते। अर्थबोधकेन शब्देन
व्यपदेशिसदृशो भावः कार्ये लभ्यते इति तदर्थः। प्रा-
योऽसहाय एवार्थवत्त्वात्। कुरुते इत्यादौ तशब्दाकारो
ऽन्त्यामन्त्य इति व्यवहारे स आदिर्यस्येति व्यवहारे चा-
सहाय एवेति तत्र व्यपदेशिवद्भावेन टिसंज्ञासिद्धिरित्य-

न्यत्र विस्तरः ॥ ३० ॥

ननु गर्गादिभ्यो विहितो यञ् तदन्तविधिना मगर्गादिभ्योऽपि स्यादत आह—

## गृहणवता प्रातिपदिकेन तदन्तवि[धि]र्नास्ति ॥ ३१ ॥

इयं च समासप्रत्ययविधौ प्रतिषेध उगिद्वर्णग्र[ह]णवर्जमितिवार्त्तिकस्थप्रत्ययांशानुवादः अतएवेयं प्रत[्य]...

ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति = ।...णवत्प्रातिपदिकप्रयोज्यं तदन्ते विधानन्न भवतीत्यर्थः । ...गर्गादिशब्दप्रयोज्यं गर्गाद्यन्ते यञ्प्रत्ययस्य विधानन्नेति...ध्यम् ननु किमिदं ग्रहणवत्त्वं न तावदानुपूर्व्यवच्छिन्नवि[षय]ताप्रयोजकत्वं गर्गादिपदानां तत्त्वोपपत्तावपि वृद्धाच्छ इत[्यत्र] वृद्धपदस्य, नौद्व्यच इत्यत्र द्व्यच्पदस्यानुपूर्व्यवच्छिन्नविषय[ता]प्रयोजकत्वाभावेन निषेधाप्राप्त्या तदन्तविध्यापत्तेः । ना[पि] प्रातिपदिकत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकत्वन्तद्[...]ऽत्वद्वृद्धत्वादीनां प्रातिपदिकत्वव्याप्यत्वाभावात् पूर्वोक्तदो[षा]नुद्धारात् नापि प्रातिपदिकत्वव्याप्यविषयताप्रयोजकत्व[...] नौद्व्यचः वृद्धाच्छ इत्यत्र प्रातिपदिकाधिकारात् प्रातिपदिकत्[वा]वच्छिन्नविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नायाः द्व्यच्[त्ववृ]द्धत्वावच्छिन्नप्रकारताख्यविषयतायाःप्रातिपदिकत्वव्याप्य[त्वे]न प्रकृतदोषोद्धारेऽपि अत इञ् इत्यादावपि प्रातिपदिकाधि[का]रेणोक्तरीत्या अत्वावच्छिन्नविषयतायाः प्रातिपदिकत्वव्याप्[य...]

त्वेन तथैवोगितश्चेत्यत्रोगित्वावच्छिन्नविषयताया अग्नि तत्वे नांभयत्र तदन्तविधिनिषेधापत्तेः। नचास्तु आद्यःपक्षः, वृद्धपदस्य वृद्धपदवत्त्वेन बाधकतया, द्व्यच्पदस्य द्वित्वविशिष्टाच्पदवद्घटितत्वेन बाधकतया वृद्धत्वाच्त्वरूपानुपूर्व्या अपि परंपरया विषयतावच्छेदकत्वेन निषेधोपपत्तेरितिवाच्यम्, एवंरीत्योगित्पदस्याप्युक्त्वरूपानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वेन निषेधापत्तेःवनोरचेत्यादवापिनिषेधापत्तेश्च इतिचेदत्रोच्यते वर्णत्वव्याप्यधर्म्मावच्छिन्नविषयत्वाप्रयोजकत्वे सति प्रत्ययत्वव्याप्यधर्म्मावच्छिन्नविषयत्वाप्रयोजकत्वे सति प्रातिपदिकवृत्तिविषयताप्रयोजकत्वं ग्रहणवत्प्रातिपदिकत्वं उगितश्चेत्यत्रापि विषयताया वर्णत्वव्याप्योक्त्वावच्छिन्नत्वान्न दोषः। नचैवं द्व्यच्पदस्यापि वर्णत्वव्याप्याच्त्वावच्छिन्नत्वस्य विषयतायां सत्वेन निषेधानापत्तिरितिवाच्यम् धर्म्मितानवच्छेदकस्यैव वर्णत्वव्याप्यधर्म्मस्य ग्रहणेनादोषात् तत्र द्वित्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकस्यैवाच्त्वस्य सत्वात् नन्वस्मायामेधास्रजोविनिरित्यादौ असपदस्यापि ग्रहणवत्प्रातिपदिकत्वापत्त्या निषेधप्रवृत्त्या यशस्वीत्याद्यसिद्ध्यापत्तिः। यत्तु केनाचित् प्रत्ययस्याप्यसः सत्वेन प्रत्ययग्रहणभिन्नत्वाभावान्न दोषः प्रत्ययमात्रग्रहणभिन्नत्वनिवेशे च फलाभावादित्युक्तन्तन्न तथासति बहूनां प्रत्ययानामपि प्रत्यत्वेन वृद्धत्वेन च द्व्यच्पदवृद्धपदयोरपि प्रत्ययग्रहणभिन्नत्वाभावेन निषेधानापत्तेस्तस्मात् असमासे निष्कादिभ्य इतिसूत्रे असमासग्रहणेनास्या अनित्यत्वेनैव दोषवारणं सम्यक्। अतएव रोणीसूत्रे तदन्तविधिना आयकरोण इतिसिद्धं मघास्तिभयेषुकृञः इत्यत्रभयशब्देन तदन्तविधिना अभयंकरइति सिद्धमितिदिक्। नन्वेवमपि अनुदात्तादेरञित्यादावनुदात्तत्वा-

विधिविषय एव। अत एव येन विधिः (११७२) इति सूत्रे
भाष्ये प्रत्ययविधिभिन्नेऽप्तृन् (६.४.११) इत्यादौ गृह्य-
माणप्रातिपदिकेनापि तदन्तविधिप्रतिपादनं स्वसा परमस्व-
सेत्याद्युदाहरणं च सङ्गच्छते अत एव च तदन्तविधिसूत्रे
भाष्येसमासेत्यादिनिषेधस्य कथनवदस्य न कथनम्। सो-
ऽपि निषेधो विशिष्य तत्तद्रूपेणगृहीतप्रातिपदिकसूत्र एव
ध्वनितं चेदमसमासे निष्कादिभ्यः (५१२०) इति सू-
भाष्ये। अत्र च ज्ञापकं सपूर्वाच्च [५२८७] इति सूत्र-
म्। अन्यथा पूर्वादिनिः (५२८६) इत्यत्र तदन्तविधि-
नैव सिद्धे किं तेन ॥ ३१ ॥

नन्वेवं सूत्रान्ताट्ठक् [४.२.६०] दशान्ताड्डः [५.२.४५]
एकगोपूर्वात्[५२११८] इत्यादेः केवलसूत्रशब्ददशन्श-
ब्दैकशब्दादिष्वपि प्रवृत्तिर्व्यपदेशिवद्भावात्स्यादत आह

देर्वणत्वव्याप्यत्वेनानुदात्तादिपदस्य वर्णत्वव्याप्यधर्म्मावच्छि-
न्नविषयत्वाप्रयोजकत्वाभावात् निषेधाप्राप्त्या तदन्तविध्याप-
त्तिरितिचेन्न वर्णत्वव्याप्यधर्म्मेण साक्षादवच्छिन्नमुख्यवि-
शेष्यत्वाप्रयोजकत्वे सति प्रत्ययत्वव्याप्यधर्म्मावच्छिन्नावि-
षयत्वाप्रयोजकत्वे सति ङगित्वावच्छिन्नविषयत्वाप्रयोजक-
त्वन्तत्वमित्यदोषात् (अतएवेति) अपूर्व्वत्वाभावादेवेत्यर्थः ॥ ३१

एकगोपूर्व्वादित्यादेरिति इदन्न युक्तं पूर्व्वत्वस्य वर्णान्त-
रसन्निधानसापेक्षस्यातिदेशालभ्यत्वात् अतएव दधीत्यादौ
विकारस्येकारपूर्व्वत्वातिदेशेन सवर्णदीर्घो न व्यपदेशिवद्भा-

# व्यपदेशिवद्भावो ऽप्रातिपदिकेन ॥ ३२ ॥

पूर्वात्सपूर्वादिनिरित्येकयोग एव कर्त्तव्ये पृथग्योगकरणमस्याज्ञापकम् । नचेष्टादिभ्यः [ ५.२.८८ ] इति सूत्रेऽनुवृत्त्यर्थन्तथा पाठोऽत एवानिष्टीत्यादिसिद्धिरिति वाच्यम् । ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगा-

ऽप्रातिपदिकेन, प्रातिपदिकेन स्ववृत्तिप्रातिपदिकत्वव्याप्यधर्म्मावच्छिन्नविषयताप्रयोजकपदघटितं यदन्तादिपदघटितं पदं तत्प्रयोज्योद्देश्यतानिरूपितविधेयताश्रयीभूतं प्रत्ययविशिष्टं कार्यं न व्यपदेशिवल्लभ्यते इत्यर्थः । प्रत्ययवै० स्वतादात्म्य स्वनिष्ठोद्देश्यतानिरूपिताविधेयताश्रयत्वैतदन्यतरसम्बन्धेन प्रातिपदिकत्वव्याप्यत्वनिवेशाद्भवतीत्यादौ उगिद्भवच्छब्देन ङीप् लभ्यते उगितश्चेत्यत्रान्तपदाघटितत्वाच्च, अन्तादिपदघटितत्वनिवेशात् रौण इत्यत्र रोणीशब्देन व्यपदेशिवद्भावः रोणीसूत्रेऽन्तादिपदघटितत्वाभावात् तादात्म्यसम्बन्धनिवेशादग्रदाभित्यत्राग्रशब्दे व्यपदेशिवद्भावेनाग्रान्तत्वाद्न्तस्य दन् दत्रादेशस्य प्रत्ययरूपत्वाभावात्, प्रत्ययस्य द्वितीयसम्बन्धनिवेशात् पञ्चम इत्यत्र व्यपदेशिवद्भावेन संख्यादित्वं न, अऽनेन निषधात् मटः प्रत्ययत्वाभावेऽपि प्रत्ययोद्देश्यकत्वात् व्याप्यत्वनिवेशादेवानुदात्तादेरञित्यादौ व्यपदेशिवद्भावेनानुदात्तमात्रादप्यञ्प्रसिद्धिरनुदात्तत्वस्य प्रातिपदिकत्वव्याप्यत्वाभावेन निषेधाप्रवृत्तेः । पूर्वात्सपूर्वादिनिरित्येकयोग इति = । कृतपूर्वीत्यत्र सपूर्वकः पूर्वशब्दो मुख्यः पूर्वीत्यत्र व्यपदेशिवद्भावेनसपूर्वत्वमितिभावः । वस्तुतः इदन्न युक्तं पूर्वत्वेऽतिदेशा-

णामनिष्टत्वात् । एकयोगेऽपि तावत उत्तरत्रानुवृत्तौ काभावाच्च । अत एव नान्तादसङ्ख्यादेः [५.२.४९] चरितार्थम् । अन्यथा पञ्चम इत्यादावपि, शिवद्भावेन सङ्ख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेव । प्रातिपदिकग्रहणे एव, न तु प्रातिपदिकाप्रातिपदिक णे । तेन उगितश्च [ ४.१.६ ] इत्यत्र न दोष तत्रैव भाष्ये स्पष्टम् । इयं, ग्रहणवता च परिभाषा प्रत्ययविधिविषयैवेत्यसमासे निष्कादि [५.१.२०] इति सूत्रे भाष्यकैयटयोः । तेन अहन् [ २.६८]इत्यादेः परमाहन्शब्दे केवलाहन्शब्दे च प्रवृत्ति त्यन्यत्र विस्तरः ॥ ३२ ॥

ननु वान्तो यि [६७९] इत्यादौ यादौ प्रत्यय कथमत आह—

## यस्मिन् विधिस्तदादावल्ग्रहणे ॥ ३३

लभ्यत्वस्योक्तत्वात् तथाच पूर्वान्तादिनिरित्येकयोग कर्त्तव्ये पृथक् योगकरणं ज्ञापकमितिबोध्यम् । अत एव ग्राहकमानात्सुलोपात्तान्तादिशब्दविषयकत्वलाभः । नन्वेव ष्टीत्यस्येष्टत्वपक्षे का गतिरितिचेन्न । इष्टादिगणे पूर्वशब्दं पठि इष्टान्तादिनिरितिन्यासः कर्त्तव्य इत्याशयात् ॥ ३२ ॥

यस्मिन्विधिस्तदादावल्ग्रहणे = यत्पदेन सप्तम्यन्तं मृश्यते अल्ग्रहण इत्यस्याल्बोधक इत्यर्थः । विधिपदेन

तदन्तविधेरपवाद इयम् । वाचनिक्येषा येन विधि व्युत्पत्या कार्यमुच्यते येनविधिरित्येतदपवादत्वादुत्सर्गसमानदेशापवादा इति न्यायेना भेदेन विशेषणमितिलब्धम् तथाचाल्बोधके सप्तम्यन्ते पदेऽ भेदसम्बन्धावच्छिन्नप्रकारताप्रयोजके सति यत् कार्यं तत् तदादौ अर्थात् स्वविधायकशास्त्रघटकाभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकसप्तम्यन्तपदबोध्यालादौ भवतीत्यर्थः । यथा वान्तोपि प्रत्ययइत्यादौ यि पदं सप्तम्यन्तमल्बोधकमभेदेन विशेषणं तद्यकारादिबोधकमितिबोध्यम् । ( वाचनिक्येषेति ) भाष्ये वचनस्वरूपमेव पठितम् नतु ज्ञापकमुपन्यस्तमितिभावः नैतावता ज्ञापकन्नास्तीतिभ्रमितव्यं, वान्तोयि प्रत्ययइत्यस्यैव ज्ञापकत्वात् तथाहि एतस्या अभावे येनविधिरितिसूत्रवलाद्यान्ते प्रत्यय इत्यर्थापत्या यान्तप्रत्ययस्यासम्भवेन सूत्रस्य वैयर्थ्यं स्पष्टमेव ननु नैतद्युक्तं गोशब्दात्मयटि गोमयं गोमयमताति गोमयात् तमाचष्ट इत्यर्थे णिचि टिलोपे गोमययतीत्यादौ यान्तप्रत्ययस्य सम्भवेन सूत्रसार्थक्यसम्भवात् नच स्थानिवद्भावोऽज्झलादेशत्वात् नापि वहिरङ्गासिद्धत्वन्नाजानन्तर्य्य इति निषेधात् । नापि भान्तप्रत्ययस्यासम्भवादेतस्या अभावे अपोभीतिव्यर्थं सदस्याज्ञापकमितिवाच्यं तत्सामर्थ्याद्भीति सप्तमी स्वतन्त्रैव न प्रत्यये विशेषणमितिकल्पनया प्रत्ययाव्यवहितपूर्वस्य भकाराव्यवहितपूर्वस्यापस्तकार इत्यर्थेन चारितार्थ्यसम्भवात् । न वा कोः कत्तत्पुरुषेऽचीत्यस्याजन्ते उत्तरपदे इत्यर्थापत्या कद्रथः कद्वद इत्यनयोरप्यनेनैव सिद्धौ रथवदयोश्चे तिव्यर्थं सदस्याज्ञापकमिति सम्यक् । रथवदशब्दाभ्यामाचारक्विन्ताभ्यां कर्त्तरि क्विप्यलोपे रत् वत् तयोः कुशब्देन समासे चारिता-

ऽर्थात् स्थानिवद्भावेनाजन्तत्वन्तु न कदादेशस्य पदचार
यवत्वेन न पदान्तेतिनिषेधात् स्थानिभूतादचः पूर्वस्य का
भावाच्च, तावन्मात्रप्रयोजनकत्वे तयोरेवानुकरणं कृत्वा रा
रित्येव कर्त्तव्ये रथवदयोश्चेति ज्ञापक मेवेति तु न वा
रम्धातोः वद्धातोः क्विपि रत् वत् इत्येतद्व्यावृत्त्या चरित
त्वान्नास्ति ज्ञापकमिति चेन्न नल्यपीत्यस्य ज्ञापकत
अन्यथा प्रदायेत्यादावीत्वाप्राप्त्या नल्यपीत्यस्य वै
स्पष्टमेव न च प्रदायच्छत्रमित्यादौ तुकि हलन्तत्वसम्भवेनप्रा
स्येत्वस्य वारणाय तस्यावश्यकत्वं नचैत्वे कर्तव्ये तुको बहिरं
सिद्धत्वं नाजानन्तर्य्यइतिनिषेधादितिवाच्यमिदानीमातो
इटिचेत्यस्याजन्तइत्यर्थापत्त्या तुकः पूर्वमेवातो लोपे ईत्वा
प्त्या निषेधस्य वैयर्थ्यध्रौव्यात् तस्मात् ज्ञापकसिद्धैवेयम् ।
नु किमेतस्याः फलं नचैतस्या अभावे वान्तोयि प्रत्ययइत
यकाररूपे प्रत्यये यान्ते वा प्रत्यय इत्यर्थापत्तौ गव्यमित्य
वान्तादेशो न स्यात् गोमययतीत्यादौ वान्तादेशस्यापि
तत्परिहार एव फलमिति वाच्यम् अन्वयस्य कामचारेणैक
मितिरीत्या ओदौतोरेवोभयोस्स्वातन्त्र्येणान्वयेन यकारा
हितपूर्वः यः प्रत्ययाव्यवहितपूर्व ओकारादिस्तस्य वान्ता
इत्यर्थेनोक्तप्रयोगद्वयेऽव्याप्त्यतिव्याप्तिपरिहारसम्भवात् ए
वमपि गोयानमित्यादौ प्रत्ययलक्षणेन प्रत्ययाव्यवहितपूर्व
स्वतश्च यकाराव्यवहितपूर्वत्वस्य सत्वेन वान्तादेशापत्ति
वाच्यं वृक्षे शाखेतिवदमिपूर्वइतिवच्च प्रत्यय इत्याधेयेऽप्य
रत्वारोपेण सप्तमीमाश्रित्य प्रत्यये यो यकारोऽर्थात् प्रत्य
वयवो यो यकारस्तदव्यवहितपूर्वयोरोदौतोरित्यर्थेन सर्व
वारणसम्भवात् ननु सुगोयुगमित्यादौ गोयुगावयव
वयवयकाराव्यवहितपूर्वस्य तत्प्रत्ययावयवौकारस्याप्यापादि

स्विरितिचेन्न औकारसाहचर्येणौकारस्यापि यकारघटितप्रत्ययाघटकस्यैव ग्रहणनादोषात् गव्युगचि कर्त्तव्ये ओकारोच्चारणसामर्थ्याच्च तत्र नापत्तिः, यत्तु केचित् उष्ट्रगोयुगशब्दात् पुनःपुनर्णिलोपटिलोपाभ्यां यकारादेर्लोपे उष्ट्रगोरित्यत्रौकारस्य श्रवणार्थमोकारोच्चारणमित्याहुः तन्न युक्तम्, लोपात् प्रागेवोपदेशावस्थायामवादेशप्राप्त्यौकारश्रवणासम्भवात्, नापि अपोभीत्यस्य भांदावित्यर्थसम्पादनेनाद्भिरित्यादिसिद्धिरिति फलं युक्तमुक्तरीत्या प्रत्ययावयवे भकारे परे इत्यर्थेनादोषात् कोः कत्तत्पुरुषेऽचीत्यस्यापि उत्तरपदावयवेऽचि परे इत्यर्थाद्धलादावुत्तरपदे न कदादेशः एतेन तत्रादेशाभावार्थमियमावश्यकीति परास्तम् ङमोह्रस्वादचीत्यस्य अच्परको यो ह्रस्वात्परोङम् तदन्तं यत् पदं ततः परस्य पदस्य, ह्रस्वात्परोयोङम् तदन्तं यत्पदं पदपरकं ततः परस्याच इति वार्थे इति न नव्यमतेऽपि परमाण्डिनावित्यादौ दोषः अन्यथा परिभाषाया अभावे ह्रस्वात्परोयोङम्तदन्तम् यत्पदं ततः परस्य पदावयवस्याचोङमुडित्यर्थापत्तौ नव्यमते कार्यित्वनिवेशेन उत्तरपदत्वे चेतिनिषेधाप्रवृत्या प्रत्ययलक्षणेन दण्डिन्नित्यस्य पदत्वे द्विवचनान्तपदमादायौकारस्य पदावयवाच्त्वेन प्राप्तस्य ङमुडोऽभावाय परिभाषाया आवश्यकत्वापत्तिः, नच परिभाषाया अभावे गोत्रेऽलुगचीत्यत्र सदादिविध्यभावे अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुगित्यर्थाभावे प्राग्दीव्यतीयप्रत्ययस्थस्याचो विषये इत्यर्थस्यैव सत्वेन गर्गरूप्यमित्यादौ हलादावप्यजन्ताति प्रत्यये विवक्षिते ऽलुगापत्तिस्तत्रापि तादृशाज्विषयतायास्सत्वादिरितिवाच्यम् प्राग्दीव्यतीयप्रत्ययघटकाजव्यवहितपूर्वत्वविवक्षायामलुगित्यर्थे गर्गरूप्यमित्यादौ दोषाभावात् प्राग्दीव्यतीयप्रत्यये सर्वत्राचस्सत्वमाज्ग्रहण-

रित्यत्र भाष्ये पठिता । अस्याश्च स्वरूपसती सप्तमी
सामर्थ्या दजादावित्यर्थलाभाच्च नचातृणेडित्यादौ नि-
त्यत्वाद्धल्ङ्याद्दिलोपे इमागमाय प्रत्ययलक्षणेन हलादिवि-
त्सार्वधातुकपरत्वं वक्तव्यं वर्णाश्रये इतिनिषेधस्तु न तस्य
वर्णप्राधान्यविषयत्वात् परिभाषाया अभावे सार्वधातुकसे
हलीत्यर्थे वर्णप्राधान्यसत्वात् प्रत्ययलक्षणनिषेधापत्त्येमागमा-
नापत्ति रितिवाच्यम् लोपस्यापि शब्दान्तरप्राप्त्याऽनित्यत्वेन
परत्वात् प्रतिपदोक्तत्वाच्च इमागमस्यैव पूर्वं प्रवृत्तेः भा-
ष्यमते नाभ्यस्तस्याचीत्यतो ऽचिनेत्यनुवृत्त्या हल्ग्रहणाक-
रणाच्च, परिभाषासत्वे इत्संज्ञकशकारादौ प्रत्यये परे पिबा-
द्यादेश इत्यर्थे पिबतीत्यादौ सिद्धान्तभूते एकान्तपक्षे भूत-
पूर्वगत्याइत्संज्ञकशकरादित्व मादायादेशः परिभाषाया
अभावे च प्रत्ययस्थे इत्संज्ञकशकारे परे इत्यर्थकरणे भूतपूर्व-
गत्यापि इत्संज्ञकशकारपरत्वासम्भवेन पिबतीत्याद्य-
पत्ति रित्यपि न फलं इत्संज्ञकशकारपरे इत्यर्थे सूत्रवै-
यर्थ्यापत्त्या इत्संज्ञकशकारपरत्वसंभावनायामित्यर्थेनादोषा-
यदीत्संज्ञालोपौ न स्यातां तर्हीत्संज्ञकशकारपरत्वं स्यादिति
सम्भावनायास्सत्वात् अत्रोच्यते नैतस्याः फलमत ए-
कहलादौ पूरयितव्य इत्यत्र ह्रस्वात्तादौ तद्धित इत्यत्र चादि-
ग्रहणं सार्थकं परिभाषासत्वे हलि तीतिकरणेनैव तदादिवि-
धिना हलादौ तादावित्यर्थलाभेन आदिग्रहणस्य वैयर्थ्या-
पत्तिरिति केचित्, बहुषु स्थलेष्वनेकक्लिष्टकल्पनानि-
रासया परिभाषायाः स्वीकारस्यैवौचित्यम् एकहलादाविति
दान्तादिग्रहणं स्पष्टार्थमेवेति परे ॥ स्वरूपसती सप्तमी निर्दि-
ष्टमिति ) न तु सप्तम्यर्थत्वेन शास्त्रप्रतिपादितार्थबोधकं

निमित्तम्। अत एव नेड्वशि कृति [७.२.८] इत्यादौ वशादेः कृत इत्याद्यर्थलाभः। इयं चार्धधातुकस्येट् [७.२.३५] इति सूत्रे वलादेरित्यादिग्रहणसामर्थ्याद्विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव प्रवर्तते। तेन ढः सि धुट् [८.३.२९] इत्यादौ सादेः पदस्येति नार्थः

सप्तमी निमित्तमपि तु ङि ओस् सुप् इत्येतत्स्वरूपमेव निमित्तमिति बोध्यम्, तेन वशि कृति इत्यत्राधिकरणार्थाप्रतीतावपि तदादिविधिरिति भावः ( आदिग्रहणसामर्थ्यादिति ) वलि आर्धधातुकस्येतिन्यासेऽपि तदादिविधिना वलादेरार्धधातुकस्येत्यर्थलाभसम्भवादितिभावः ( उभयोस्सप्तम्यन्तत्व इति ) ननु तथैव वलि आर्धधातुके इतिन्यासकरणे स्वांशे चारितार्थ्याभाव इतिचेन्न तस्मिन्नितिपरिभाषयाऽऽर्धधातुकाव्यवहितपूर्वस्येडागमापत्तेः, केनाचिव उभयोः सप्तम्यन्तत्व एवेतिज्ञापनं न्यायसिद्धार्थानुवाद एव समानाधिकरणविशेषणस्थले समानविभक्तिकत्वनियमेनैव तल्लाभादित्युक्तं तन्न मृदु पचति सोमेन यजेत प्रकृत्या चारुरित्यादावसमानविभक्तिकयोरपि समानाधिकरणत्वदर्शनात् [ सादेः पदस्येति नार्थ इति ] तथासति षट्त्स्वित्यत्र धुट् न स्यादिति दोषः ननु तदादिविध्यभावेऽपि येन विधिरितिसूत्रेण तदन्तविधिना सान्तस्य पदस्येत्यर्थेन षट्त्स्वित्यादौ धुडनापत्त्या सूत्रस्यैवैयर्थ्यापत्त्या च तदन्तविध्यभावाय पदावयवस्य सस्येतिवैयधिकरण्येनान्वयस्यावश्यकतया समानाधिकरणविशेषणत्वाभावादेव तदादिविध्यभावे उभयोस्सप्तम्यन्तत्व एव

तीषसह ( ७.२.४८ ) सेऽसिचि (७.२.५१ ) इत्यो
यथा तादेरित्याद्यर्थलाभस्तथा शब्देन्दुशेखरे नि
पितम् ॥ ३३ ॥

घटपटं घटपटावित्यादिसिद्धये आह—

## सर्वो द्वन्द्वो विभाषैकवद्भवति ॥ ३४॥

प्रवृत्तिरित्यस्य न फलमिति चेन्न, उभयसप्तम्यन्तत्वस्या
मित्तत्वे तदादिविधिसत्वे सामानाधिकरण्यान्वये सूत्रवैय
भावेन सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्या
य्येन सामानाधिकरण्यान्वय एव स्यादित्याशयात् नतु
षसहेत्यत्र सेसिचीत्यत्र च षष्ठ्यन्तस्यैवार्धधातुकपदस्य
वृत्त्या तदादिविध्यप्राप्त्या तादेः सादेरार्धधातुकस्येत्यर्थो
स्यादित्यत आह ( तीषसहेत्यादाविति ) ( शब्देन्दुशे
निरूपितमिति ) तत्र हि ति से इति सप्तम्यौ प्रथमार्थे
धातुकस्येत्यस्यैव वलादेरित्यस्यानुवृत्तिस्तदेकदेशवलपद
ऽभेदसम्बन्धेन तकारसकारयोरन्वयस्तथाच तकाराभिन्नो
वल् सकाराभिन्नो यो वल् तदादेरार्धधातुकस्येत्यर्थ इत्य
मुक्तम्— तीति से इति सप्तम्योः स्वातन्त्र्येण भेदेन विशेषण
मंगीकृत्य तकाराव्यवहितपूर्वो य इषादिः सकाराव्यवहित
यः कृदादिस्ततः परस्यार्धधातुकस्येत्यर्थस्तु युक्तस्सत्या
स्यां परिभाषायां, तथासति सर्वत्र तथैव निर्वाहे परिभा
निष्फलत्वापत्तिरित्यलम् ॥ ३३ ॥

घटपटं घटपटावित्यादिसिद्धयइति = । ननु आर्वे

द्वन्द्वश्च प्राणि [२४२] इत्यादिप्रकरणाविषयः सर्वो द्वन्द्व इत्यर्थः। चार्थे द्वन्द्व [२.२.२९] इति सूत्रेण द्वन्द्वमात्रे उद्भूतावयवभेदाविवक्षारूपेतरेतरयोगातिरोहितावयवभेदाविवक्षारूपसमाहारयोस्सत्त्वेन सर्वस्मादेव द्वन्द्वीभूतशब्दात् विवक्षाभेदेनैकवचनद्विवचनयोरुपपत्तावलं परिभाषयेति चेन्न द्विविधो हि शब्दो भवति कश्चनोद्भूतावयवभेदकसमुदायबोधको यथा वृक्षशब्दोऽत एव तत्र बहुवचनान्त एव वृक्षा इति प्रयुज्यते कश्चनातिरोहितावयवभेदकसमुदायबोधको यथा वनशब्दस्तत्रैकवचनान्त एव वनशब्दः प्रयुज्यते तथाचाविशेषेणेतरेतरयोगसमाहारयोः द्वन्द्वविधानेऽपि द्वन्द्वीभूतोऽपि घटपटादिशब्दः एकविधसमुदायबोधक एव स्यादिति एकस्मिन् घटपटादिरूपद्वन्द्वीभूतशब्द उभयविवक्षायां अभावेनैकवचनाद्विवचनान्तत्वमनुपपन्नमिति तदुपपत्तये परिभाषारम्भः, अयम्भावः वनवृक्षादिकतिपयशब्दस्योभयविधसमुदायबोधकत्वाभावेऽपि लोकशब्दसर्वशब्दयोः स वै लोकाः सर्वो लोक इत्युभयविधप्रयोगस्यैकसमुदायबोधकस्थले दृष्टतयोभयविवक्षायाः शब्दैकधर्मत्वेऽविरोधेन तत्र यथोभयाविवक्षा भवति तथा द्वन्द्वीभूतैकघटपटादिशब्देऽप्यविशेषेणोभयत्र द्वन्द्वविधानलब्धैवोभयविवक्षा परिभाषया बोध्यते इति, परिभाषायां द्वन्द्वपदस्य तन्त्रैकशेषादिना सकलद्वन्द्वपरत्वे एकवचनानुपपत्तिरेकद्वन्द्वपरत्वे सर्व्वेति विशेषणानुपपत्तिः लोक्यते दृश्यत इति लोक इति व्युत्पत्त्या लोकत्वस्य प्रत्येकपर्याप्तत्वसमुदायपर्याप्तत्वयोः स्वीकारेऽपि द्वन्द्वत्वस्य तथात्वाभावादितिचेन्न सकलद्वन्द्वबोधकत्वेऽपि जात्येकत्वविवक्षयैकवचनान्तत्वोपपत्तेः। ननु पाणिपादमित्यादौ नि-

समाहारेतरेतरयोगयोराविशेषेण द्वन्द्वविधानान्न्यायसिद्ध म् । तिष्यपुनर्वस्वोः [ १.२.६३ ] इति सूत्रा बहुवचनस्येति ग्रहणमस्या ज्ञापकम् । तद्ध तिष्यपुनर्वास्वित्यत्र तद्व्यावृत्त्यर्थम् । न चैवमप जातिरप्राणिनाम् ( २.४.६ ) इति नित्यैकवद्भाव बहुवचनाभावादिदं सूत्रं व्यर्थमिति वाच्यम् । तद्वै ल्पिकत्वस्याप्यनेन ज्ञापनात् । नचैते प्राणिन इति वाच्य

त्यैकवद्भावस्यैव दर्शनात् सर्वो द्वन्द्व इत्यनुपपन्नमित्य आह ( द्वन्द्वश्च प्राणीत्यादीति ) चार्थे द्वन्द्व इत्येतत्सूत्र षय इति यावत् ( बहुवचनस्येतिग्रहणमस्या ज्ञाप मिति ) द्वन्द्वीभूततिष्यपुनर्वसुशब्दस्योद्भूतावयवसमुदाय धकत्वे बहुवचनान्तत्वस्यैव सत्त्वेन इदन्तिष्यपुनर्वस्वाति त्र्यस्थलाभावाद्बहुवचनग्रहणं व्यर्थं तिरोहितावयवभेदकसमुद बोधकत्वे एकवचनान्तत्वस्यैव सत्वेन बहुवचनान्तस्यासम्भव सूत्रस्यैव वैयर्थ्यमित्युभयविवक्षां ज्ञापयतीति युक्तम् ज्ञापिता न्तूभयाविवक्षायां सम्भवव्यभिचारयो स्सत्वेन स्वांशे चारि र्थम् ( नचैवंजातिरप्राणिनामितीति ) द्वन्द्वश्च प्राणीत्येत करणविषय एवायमिति ज्ञापितेऽपि चारितार्थ्याभाव इति ( तद्वैकल्पिकत्वस्यापीति ) तथाचोभयवचनान्ततिष्यपुन शब्दस्य सत्वेन सम्भवव्यभिचारयो स्सत्वेन स्वांशे चारिता सुघटम्,नन्विदं न युक्तं तस्य वैकल्पिकत्वे बदराणि चामलका बदरामलकमितिवत् बदरामलकानीत्यपि स्यात् नैतद्दिष्यत चेन्न ज्ञापितं हि वैकल्पिकत्वं व्यवस्थितं व्यवस्था

आपोमयः प्राण इति श्रुतेरद्भिर्विना ग्लायमानप्राणाना मेव प्राणित्वात् । स्पष्टं चेदं तिष्यपुनर्वस्वोः (१.२.६३) इति सूत्रे भाष्ये । अतएव इन्द्रश्च प्राणी [ २.४.२ ] त्यादौ प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमो न ॥ ३४ ॥

## सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥३५॥

वदरत्वादिजातेः प्राधान्ये विवक्षिते एकवद्भावः वदरादिव्यक्तेः प्राधान्ये विवक्षिते वहुवचनान्तत्वमिति ननु बदरामलकमित्यादौ वदरत्वादेर्धर्म्मिविशेषणतयैव भानात् जातेः प्राधान्याभाव इति चेदिदम् प्राधान्यं पदजन्यवोधविषयत्वप्रकारकतात्पर्यीयविषयतासमनियतत्वं, नन्वेवं तिष्यत्वपुनर्वसुत्वयोः प्राधान्ये विवक्षिते एकवचनं भविष्यति तद्व्यावृत्त्यर्थ मन्यत्र वहुवचनस्य द्विवचनार्थंच वहुवचनग्रहणं चरितार्थमिति परिभाषाज्ञापक न्न भविष्यतीति चेदत्रोच्यते फल्गुनीप्रोष्ठेत्यतो नक्षत्रग्रहणानुवृत्त्यैव सिद्धे पुनर्न्नक्षत्रग्रहणात् तिष्यपुनर्वसुनक्षत्रव्यक्तिप्राधान्य एव तिष्यपुनरितिसूत्रं प्रवर्त्तते तत्र जातिरप्राणीत्यस्याप्राप्त्या परिभाषां विना समाहारेतरेतरयोगान्यतराविवक्षाया एव सत्वे एकवचने वहुवचनस्याभावात् वहुवचने व्यावर्त्याभावात् व्यर्थं वहुवचनग्रहणं परिभाषां ज्ञापयति ज्ञापितायाश्चोभयविवक्षाया स्तिष्यपुनर्वसुशब्दे सत्वेनैकवचनव्यावृत्तिपुरस्सरवहुवचनस्थानितालाभाय वहुवचनग्रहणं चरितार्थमिति । ननु ज्ञापनद्वयेऽपि वहुवचनग्रहण-

व्यत्ययो बहुलम् [ ३.१.८५ ] इति सूत्रे भाष्ये बहुलमिति योगविभागेन षष्ठीयुक्तश्छन्दसि [ १.४.९ ] इति सूत्रे वेति योगविभागेन चैषा साधिता। तेन प्रतीपमन्य उर्मिर्युध्यतीत्यादि सिद्धम्। युध्यत इति प्राप्नोति ॥ ३५ ॥

ननु क्षियः [ ६.४.५९। ८.२.४६ ] इत्यादावियङ् कथमत आह—

व्यर्थमेव द्वन्द्वश्चप्राणीत्यादिसूत्राणामेषामेव समाहारे इत्येतन्नियामकत्वेनान्यत्र तिष्यपुनर्वस्वादावेकवचनाभावे व्यावर्त्याभावादिति चेत्सत्यमेतद्बहुवचनग्रहणमेव प्राण्यङ्गादीनां समाहारएवेतिसूत्रोक्तनियमाकारेऽपिज्ञापकं तथाच तत्करणाविषय उभयविवक्षायास्सत्वेन चरितार्थत्वमुपपन्न मि तिदिक् ॥ ३४ ॥

( बहुलमितियोगविभागेनेति ) छन्दसि विधीयमानानि सर्वाणि कार्याणि बहुलं भवन्तीत्यर्थः वेति योगस्याप्ययमेवार्थ इत्येतत्सिद्धं सर्वे विधय इति ( युध्यतीति सिद्धमिति) नन्वनुदात्तेत्वलक्षणमात्मनेपदमनित्यमित्यनयैव परिभाषया युध्यतीतिपरस्मैपदोपपत्तौ प्रकृतपरिभाषायाः फलं युक्तमिति चेन्न प्रकृतपरिभाषायाः फलत्वेन तदुदाहरणस्य भाष्येण तस्या असत्वबोधनात् तदभावस्याग्रे वक्ष्यमाणत्वाच्च ॥ ३५ ॥

(क्षियइत्यादावियङ् कथमिति) क्षियोदीर्घादितिसूत्रे क्षीत्यस्य लक्ष्यस्थक्षिधातोरनुकरणत्वेन धातुत्वाभावाद्धातु

# प्रकृतिवदनुकरणं भवति ॥ ३६ ॥

क्षिय इतीयङ्निर्देशोऽस्या ज्ञापकः । तत्रैव प्रातिपदिकत्वनिबन्धनविभक्तिकरणादनित्या चेयमिति क्षियो दीर्घात् (८.२.४६) इति सूत्रे भाष्ये स्पष्टम् ॥ ३६॥

निबन्धनमियङ् न स्यादिति भावः ( प्रकृतिवदनुकरणमिति ) अनुकरणत्वं स्ववृत्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वम् प्रकृतिरनुकार्य्यं तद्वत् तद्वृत्तिधर्म्मवदित्यर्थः तथाच धातुत्वातिदेशादियङ् उपपद्यते नन्वेवमधातुपर्युदासात् प्रातिपदिकत्वाभावे विभक्त्यनुपपत्तिरित्यत आह तत्रैवेति ( अनित्येति ) यत्किञ्चित्कार्यायानुकार्यधर्म्मारोपोभवति यत्किञ्चित्कार्याय नेति बोध्यम् । ननु कृतदीर्घस्यानुकरणे तद्बलादेव दीर्घान्तत्वलाभे सूत्रे दीर्घग्रहणं व्यर्थं ह्रस्वान्तानुकरणे घित्वेन गुणापत्तिरिति चेन्न दीर्घान्तस्यैवानुकरणमित्यत्रैव दीर्घग्रहणस्य तात्पर्य्यात् । केनचित् लक्ष्यघटकेऽनुकार्ये धातौ फलाभावेन स्थितस्य घित्वाभावस्यानुकरणे क्षिशब्दे ऽन्नयैवातिदेशेन गुणाभावः सखिशब्दसाहचर्येणानुकरणक्षिशब्दावयवेकारभिन्नस्यैव घिसंज्ञासूत्रे ग्रहणादस्य घित्वाभावाच्च गुणाभाव इत्युक्तम् तन्न युक्तं, शास्त्रीयवचनेनाशास्त्रीयधर्म्मातिदेशस्य क्वाप्यदर्शनात् शास्त्रीयकार्यप्रवृत्तिफलायैवाचः परस्मिन्नित्येतद्भिन्नातिदेशस्य प्रवृत्तेश्च, द्वितीयसमाधानमपि न युक्तं तत्साहचर्य्येण हरिशब्दावयवभिन्नादेरपि ग्रहणापत्तौ बहूपप्लवः स्यात् सखिशब्दे प्रथमोपात्तसकारस्यापि साहचर्येणोक्तार्थलाभसम्भवे तदुपेक्षायां बीजाभावाच्च ॥ ३६ ॥

ननु रामावित्यादौ वृद्धौ कृतायां कार्यकालपक्षे क
पदत्वमुभयत आश्रयणेऽन्तादिवद्भावाभावाद्यस्माद्वि
तस्तदादितदन्तत्वाभावादत आह—

( कार्यकालपक्षे कथं पदत्वमिति ) एकादेशेन सुपः
दादेश्चापहारेण सुबन्ततदादित्वाभावात् सुप्तिङन्तमित्यस्य
प्राप्तिरितिभावः ननु एकादेशघटिते औ शब्दे परादिव
वेन सुप्त्वं एकादेशघटिते रामावित्यादौ पूर्वान्तवद्भावे
तदादित्वमिति सुबन्ततदादित्वात्पदत्वं स्यादेवेत्यत आ
उभयत इति । नन्विदं न युक्तं अपदसंज्ञाविषये यथोद्दे
पक्ष एवेतिपूर्वोक्तस्वग्रन्थेन विरोधात् व्यवस्थितपक्ष
मध्ये एकस्मिन् पक्षे लक्ष्यसिद्धौ पक्षान्तरे लक्ष्यासिद्धा
क्षत्यभावेन यथोद्देशपक्षे पदत्वसिद्धेश्चेति चेन्न प्राची
मताभिप्रायेणैतद्ग्रन्थस्य सत्वात् किञ्च कार्यकालपक्षे अंश
स्वदेशत्यागो यदाकार्यं तदा संज्ञेति च तत्राद्यांशस्यैव यथोद्दे
पक्ष एवेत्येवकारेण व्यावर्त्यते ऽन्त्यांशस्तु पदसंज्ञायाम
स्त्येवेति न विरोधः भसंज्ञासाहचर्येण परनिमित्तकस्या
ष्वितिपदसंज्ञाया एव नत्वपदसंज्ञापदेन ग्रहणमिति केचि
उभयत आश्रयण इतिनिषेधोद्भावनमप्ययुक्तं प्राचीनमता
प्रायकम्वाँ स्वमते उभयत आश्रयणे ऽपि अन्तादिवद्भावस्य
ष्टत्वात्, केनचित्तु तदादित्वस्य प्रत्ययाव्यवहितपूर्वत्वघटि
रूपतया व्यपदृक्तत्वेन नातिदेश इत्युक्तम् तत्तु अत्यन्तम
क्तं तदादित्वे प्रत्ययाव्यवहितपूर्वत्वघटितत्वस्य कथमप्य
सम्भवात्, वस्तुतस्तु नेदं परिभाषायाः फलं यथोद्देशपक्षे प्र
जातपदसंज्ञाया राम औ इत्यस्य स्थाने रामावित्यादेश इ

नुमानिकस्थान्यादेशभावमादाय रामावित्यत्र स्थानिवद्भावेन लाभसम्भवात् ननु राम औ इत्यवस्थायां पदसंज्ञावृद्ध्यादेशयोः प्राप्तौ कृताकृतप्रसङ्गित्वेन नित्यत्वादादेशप्रवृत्त्या न यथोद्देशपक्षेऽपि पदत्वसिद्धिरिति चेन्न अपरनिमित्तकत्वेनान्तरङ्गत्वात् पूर्वं, विरोधाभावेन बाध्यबाधकभावाभावात्समकालमेव वा पदसंज्ञायाः प्रवृत्तेः। नच चकारेत्यत्र कृधातोर्लिटि द्वित्वे पूर्वस्याभ्यासत्वे उरदत्वे रपरत्वे करकृ इत्यवस्थायां करित्यस्याभ्यासत्वाभावेन हलादिः शेषो न स्यात् अभ्यासस्यानर्थकत्वेनानुमानिकस्थान्यादेशभावस्यार्थवत्वानिबन्धनस्याभावेन स्थानिवद्भावाप्रसक्तेर्द्विरुक्तधातुपूर्वभागत्वाभावेन पुनरभ्याससंज्ञाया अप्राप्तेश्च, स्वीकृतेन तु अनेन न्यायेन कृइत्यत्र स्थितं द्विरुक्तधातुपूर्वभागत्वमभ्यासत्वञ्चा करित्यत्रानीय हलादिः शेष उपपद्यते इति फलमिति चेन्नैवमर्द्धाधिकस्य मात्राकालिकस्य ऋकारस्य विकृतत्वेन प्रकृतपरिभाषाया अप्राप्तेः नच द्वित्वशास्त्रविशिष्टसमुदाय विशिष्टस्याभ्याससंज्ञा विधीयते वैशिष्ट्यञ्च स्वीयोद्देश्यताश्रयघटितत्वस्वीयविधेयताश्रयघटितत्वस्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन तृतीयसम्बन्धघटकं वैशिष्ट्यं स्वीयोद्देश्यताश्रयेतरत्वस्वीयविधेयताश्रयेतरत्वोभयसम्बन्धेन स च समुदायः कृ कृ इति तद्विशिष्टश्चाद्यः कृ इति वैशिष्ट्यञ्च स्वारम्भकत्वस्वारम्भकाव्यवहितपूर्वत्वोभयसम्बन्धेन समन्वयः सुगमः एवञ्च कृकृइतिसमुदाये यत् द्वित्वशास्त्रविशिष्टत्वन्तदेकदेशविकृतन्यायेन करकृसमुदायेऽतिदिश्यते इति द्वित्वशास्त्रविशिष्टसमुदायः करकृ इति तद्विशिष्टश्चाग्रिमसम्बन्धाभ्यां कर इति तस्याभ्याससंज्ञेति युक्तमेव न्यायफलमिति वाच्यम् द्वित्वशास्त्रविशिष्टसमुदायत्वस्य स्वीयोद्देश्यताश्रय-

क्रूपविकृतावयवघटितत्वेनातिदेशालभ्यत्वात् नच तैः कथं हलादिः शेष उपपद्यते इति वाच्यं यतोद्वित्वशास्त्रविशिष्टस्याभ्यासंज्ञेत्यर्थः वैशिष्ट्यञ्च स्वीयविधेयताश्रयावधिकपूर्वत्वस्वीयोद्देश्यताश्रयसमभिव्याहृतवर्णाघटितत्वोभयसम्बन्धेन करकृइत्यत्र करित्यस्य विधेयताश्रयोत्तरखण्डपूर्वत्वमस्ति उद्देश्यताश्रयकृसमभिव्याहृतोद्वित्वपूर्वकालिकोपसर्गावयवादि स्तदघटितत्वञ्च करित्यस्यास्तीत्युपपन्नं न्यायं विनाप्यभ्यासत्वम् अथवा ऽऽद्यसम्बन्धस्थाने स्वीयोद्देश्यताविशिष्टत्वं देयं वैशिष्ट्यं स्वाश्रयत्वस्वाश्रयप्रकृतिकत्वैतदन्यतरसम्बन्धेन कृकृइत्यत्र कृइत्यत्राद्यः सम्बन्धः करकृइत्यत्र करित्यत्रोद्देश्यताश्रयः कृ तत्प्रकृतिकत्वमस्तीतिसमन्वयः नच प्रहिणोतीति फलं तत्राहिम हि तीति स्थिते श्नुप्रत्यये युगपद्गुणत्वयोः प्राप्तौ हिनुमीनेत्यस्यासिद्धत्वात्पूर्वं गुणे हिनोशब्दस्यानर्थकत्वेनानुमानिकादेशत्वस्यासत्त्वेन स्थानिवद्भावाप्राप्तेरनेन न्यायेनैव हिनुशब्दत्वं संपादनीयमिति फलत्वं सम्यगेवेति वाच्यं गुणस्याचः परस्मिन्निति स्थानिवद्भावेन हिनुशब्दत्वस्योपपत्तेः नच पूर्वत्रासिद्धीय इति निषेध स्तस्य दोष इति प्रतिषेधात् प्रकृष्टोरा यस्मिन् कुले तत् प्रारि कुलं ततोद्वित्व प्रराभ्यामित्यादौ रिशब्दस्यैकदेशविकृतन्यायेन रैशब्दत्वाद्रात्वसिद्धिरित्यपि फलं न युक्तं रैशब्दस्य रीत्यादेश इत्यानुमानिकस्थान्यादेशभावकल्पनात् स्थानिवद्भावेनैवसिद्धेः गुणोदकमित्यादावुदके केवल इति स्वरसिद्ध्यर्थं दकशब्दस्यानेन न्यायेनोदकशब्दत्वं तत्रह्यन्तरङ्गत्वा त्पूर्वं भेकादेश इति फल मित्यापिन पूर्वोत्तरपदनिमित्तककार्यात्प्रागन्तरङ्गोऽप्येकादेशोनेति परिभाषया स्वरस्यैव पूर्वं प्रवृत्तेर्नैतस्याः फलमत्र एत्रानुमानिकस्थान्यादेशभावमाश्रित्यास्य न्यायस्यानाश्रयण

स्थानिवत्सूत्रे भाष्य उक्तम् ॥ एकदेशः विकृतोविकारप्रतियोगी यस्मिन् यन्निष्ठाविकारप्रतियोगी एकदेश इति यावत् स एकदेशविकृतः यथा रामितिमान्तनिष्ठविकारप्रतियोगी रामेत्यकारान्तस्यैकदेशो, ऽकार स्तथाच यदेकदेशविकृतो ऽर्थात् यदेकदेशप्रतियोगिकविकारविशिष्टो यो भवति स ततो ऽन्यो न भवतीत्यर्थः यथा रामशब्दैकदेशाकारप्रतियोगिकविकारविशिष्टो रामिति मान्त स्ततो ऽन्यो न भवति, अथवा विकृतमिति भावप्रत्ययान्तो विकार इत्यर्थः एकदेशस्य विकृतं यस्मिन्निति व्यधिकरणबहुव्रीहिः यद्वा एकदेशपदमेकदेशप्रतियोगिकेलाक्षणिकं समानाधिकरणबहुव्रीहिरेव एकदेशपदस्वरसादेव प्रतियोगिभूतावयवाभिन्नसकलावयवसद्भाव स्तदितरवर्णासद्भाव श्च सूचितस्तेन जराशब्दैकदेशविकृतो जरशब्दो, न तु निर्जर शब्द इति बोध्यम् तथाच स्वविशिष्टं स्वतोभिन्नं न भवतीत्यर्थः वै० स्वघटकमात्रप्रतियोगिकविकारवत्त्वस्वविशिष्टाघटितत्वैतदुभयसम्बन्धेन सम्बन्धवै स्वाघटकत्वस्वघटकमात्रोद्देश्यकाविकारेतरत्वोभयसम्बन्धेन निर्जरशब्दे जराशब्दवैशिष्ट्यवारणाय द्वितीयः सम्बन्ध स्तत्रोक्तोभयसम्बन्धेन स्वविशिष्टोनिशब्दस्तदुघटितत्वात्तद्व्युदासः राशब्दे जराशब्दवैशिष्ट्यसत्त्वे ऽपि जातिव्यञ्जकभूयोवयवदर्शनाभावेन न तस्मिन् तद्रूपताव्यवहारः नापि रामावित्यादौ रामशब्दैकदेशविकृतत्वमेकादेशस्य तद्घटकमात्रोद्देश्यकत्वाभावात् । अत एवेति मान्ते रामि अदन्त रामशब्दाभेदस्यानया बोधितत्वादेवेत्यर्थः स्वाभेदस्य बोधनात्स्वत्वाचिदासराथिनिरूपितशक्तिमत्त्वबोधनमर्थात्-सिद्धमिति बोध्यम् न चैवं सत्यदन्तत्वादिधर्मवन्त्वमपि स्यादिति वाच्यं तस्य वर्णसन्निवेशसापेक्षत्वेनौपाधिकत्वाद्विकृतावयवानिबन्धनत्वाच्च, अन्यथा परिभाषाया अभावे, शक्ततावच्छेदकज्ञानादेव

## एकदेशविकृतमनन्यवत् ॥ ३७ ॥

अनन्यवदित्यस्यान्यवन्नेत्यर्थः । तत्रान्यसादृश्यनि षेधेऽन्यत्वाभावः सुतराम् । अत एव तादृशादर्थबो अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानात्ततो बोधो न स्या त् । एवं च राम् इति मान्तस्य यस्माद्विहितस्तदा औ इत्यस्य परादिवत्त्वेन सुप्त्वमिति तदादितदन्तत्वा र्थसमाजग्रस्तम् । छिन्नपुच्छे शुनि श्वत्वव्यवहारवन्मान तत्त्वं लोकन्यायसिद्धम् । अत एव प्राग्दीव्यतः [

हि शक्तिज्ञानमिति बोध्यम् एवञ्चेति परिभाषास्वीकारेवेत्य ( आर्थसमाजग्रस्तमिति ) अर्थस्यायमार्थः समाजः समुदा आर्थश्चासौ समाज आर्थसमाज स्तेन ग्रस्तंव्याप्य मिल प्रकृते अर्थपदेन सुप्त्वं तदादित्वञ्च विवक्षित मिति बोध्य लोकसिद्धत्वेऽपि शास्त्रे तदाश्रयणे प्रमाणमाह ( अतएवेति परिभाषास्वीकारादेवेत्यर्थः प्राग्दीव्यतोऽणितिसूत्रे दीव्यति तेन दीव्यति खनतीत्यत्रत्यदीव्यतीत्यस्यानुकरणं तच्च न सं भवति अनुकरणस्यानुकार्यसमानानुपूर्वीकत्वानियमात् स्वी कृते चास्मिन् न्याये दीव्यतीत्येतदेकदेशविकृतोदीव्यदिति त दीव्यति तोऽभिन्नमिति न्यायेन बोधिते दीव्यति च समाना नुपूर्वीकत्वात् दीव्यते रनुकरणं भवितु मर्हति, तदाभिन्नं दीव्य दपि भवत्येवदीव्यतेरनुकरणमिति सूपपन्नं ज्ञापकत्वम् त्रापि स्वांशे चारितार्थ्यस्य चर्चा न कार्या यदनुपपत्त्या दी कल्पितं तेन तदुपपत्तिमात्रस्य ज्ञापने अपेक्षितत्वात्, न च दी

१.८३.] इति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदमित्युक्त्वा किमर्थं विकृतनिर्देश एतदेवज्ञापयत्याचार्यो भवत्येषा परिभाषैकदेशविकृतमनन्यवदितीत्युक्तम्। एतेनायं न्यायः शास्त्रीयकार्य एव शास्त्रीयविकार एवेत्यपास्तम्। विकृतावयवनिबन्धनकार्ये तु नायं छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहारवद्विकृतावयवव्यवहारस्यं दुरुपपादत्वात्। एवमक्तपरिमाणग्रहणेऽपि नायम् उक्तयुक्तेः। एतत् येन विधिः [१.१.७] इत्यत्र भा-

व्यतीत्येतद्घटकदीव्यत एवानुकरणं दीव्यदित्यस्तु तथासत्यनुपपत्तिविरहाज्ज्ञापनासम्भव इति वाच्यं तथा सत्यवधे दीव्यतोनिरर्थकत्वेनावध्यवाधिमतो ससाजात्यमिति नियमवलात् प्रत्ययार्थबोधनाय निर्दिष्टपदकसूत्रएवाधिकार इत्यर्थालाभेन प्रत्ययार्थबोधकपदाघटितेऽपि शास्त्रे बाह्वादिभ्यश्चेत्यादावप्यऽणधिकारापत्तेः दीव्यतीत्यस्यावधित्वेतु न दोषस्तस्यार्थबोधकत्वेनोक्तन्यायविषयत्वात् दीव्यतिशब्दैकदेशो दीव्यच्छब्दोऽनुकरणमित्यर्थः। यत्तु केनचित् दीव्यतिशब्दैकदेशेति प्रतीकमुपादाय दीव्यतिशब्दवृत्यर्थवत्वं तान्ते आरोप्य कृतमनुकरणमित्यर्थ इत्युक्तन्तन्न युक्तं प्रकृतोपयोग्यर्थशून्यत्वादर्थवत्त्वारोपस्यानुकरणे ऽनुपयोगाच्च। एतेनेति प्राग्दीव्यत इतिसूत्रस्थज्ञापकपरभाष्येणेत्यर्थ स्तत्र हि विकारस्य कार्यस्य च शास्त्रीयत्वाभावाच्छास्त्रीयविकारकार्ययोरेवग्रहणे तद्भाष्यविरोधः स्यादिति भावः (विकृतावयवेति) विकृतोऽवयवस्तन्निमित्तकं यत्कार्यमित्यर्थः तेन निर्जरशब्दं आदन्त

त्वप्रयुक्तं कार्यमित्यर्थः ( अक्तपरिमाणग्रहण ) इति परिच्छि
रिमाणग्रहण इत्यर्थः ( उक्तयुक्तेरिति ) लोके छिन्नपुच्छे
शुनि पुच्छवन्निष्ठस्य सेटकपरिमितत्वादेर्व्यवहाराभावादित्य
यत्तु केनाचित संख्यात्वव्याप्यपरिमाणत्वव्याप्यधर्म्मानय
तद्घटितधर्म्मानयने च तदप्रवृत्तेरिति प्रतिज्ञाय शतत्वमु
द्राघटितमञ्जूषात्वयोः सेटकत्वसेटकपरिमितधान्यघटितमञ्
षात्वयो श्च नातिदेश इत्युक्तम् तत्तु न विचारसहं, शतं ब्रा
ह्मणा इत्यादिप्रयोगदर्शनात् शतशब्दः संख्येयपरः शत
संख्या नतु संख्यात्वव्याप्यधर्म्मः मञ्जूषायां मञ्जूषात्वे
शतमुद्राघटितत्वं खपुष्पायमानं, रामशब्दो रेफघटित इति व्य
वहारात् ब्राह्मणोवस्त्रघटित इतिव्यवहाराभावात् घटितत्वं न
व्यत्वे सति व्यापकत्वाभाववत्त्वमिति निश्चीयते मञ्जूषा
ञ्जूषात्वम्वा न शतमुद्रादिव्याप्यमित्यागोपालाङ्गनं प्रसि
मित्यहो व्यामोहः इत्यलमसत्पदार्थपर्यालोचनेन.एवमत्रैवको
दित्युपक्रम्य जरात्वस्य चतुष्ट्वसमनियतत्वमुक्तन्तदपि पदा
नवबोधविजृम्भितं प्रत्युच्चारणभिन्ननानाजराशब्दनिष्ठैकजरा
त्वस्यं प्रतिधर्म्मिभिन्नचतुष्ट्वसंख्यासमनियतत्वासम्भवात्
बाभिशब्दत्वातिदेशाभावेनोपसर्गात्परत्वाभावाद्धस्वोनेत्युक्त
देप्यज्ञानविलासितम् नह्युपसर्गत्वमभिशब्दत्वरूपन्तद्घटितं
येनाभिशब्दत्वानातिदेशप्रयोज्य उपसर्गत्वाभाव स्स्यादि
विभावयन्तु सुधियः, प्रकृतमनुसरामः किन्नामाक्तपरिमाणत्व
न तावद्यत्किञ्चित्संख्यासमनियतत्वं जरात्वाद्यात्तु पूर्व्यां
त्वप्रत्ययत्वादीनाञ्च शास्त्रकारसम्मतोऽक्तपरिमाणत्वव्यवहा
नह्याद्युक्तयुक्त्या कस्या अपिसंख्यायास्तेषां समनियतत्वा
वात् सेटकपरिमितत्वादीनामपि संख्यासमनियतत्वाभावाद
परिमाणत्वव्यवहाराभावप्रसंगात् इदन्तु तत्त्वं संख्यात्वपरि

ध्यकैयटयोर्ध्वनितम् । यत्र त्वर्द्धं तदधिकं वा विकृतं तत्र जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तत्त्वाप्रतीतौ कार्यसिद्ध्यर्थं, विकृतानलेरूपावयववत्त्वप्रतीत्यर्थं च स्थानिवत्सूत्रम् । क्वचित्तु लक्ष्यानुरोधान्न्यायानाश्रयणम् । तेनाभीयादित्यादिसिद्धिः । स्पष्टं च क्वचिन्न्यायाप्रवृत्तिः प्रथमयोः पूर्वसवर्णः [६.१.१०२] इत्यत्र कैयटेन दर्शितेत्यन्यत्र विस्तरः ॥ ३७ ॥

त्वान्यतरव्याप्ययत्किञ्चिज्जातिव्यापकाभावप्रतियोगित्वमक्तपरिमाणत्वं व्यापकत्वघटकाधिकरणता च स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्ना बोध्या यथा संख्यात्वव्याप्या जातिः पञ्चत्वत्वं स्वाश्रयाश्रयत्वसम्बन्धेनतदधिकरणं पञ्चाक्षरावयवकस्समुदायस्तन्निष्ठाभावो जरात्वाभावाभावोन स्यादपितु घटत्वाद्यभावस्तदीयप्रतियोगितावच्छेदकं घटत्वत्वमनवच्छेदकं जरात्वाभावत्वं तद्रूपत्वरूपव्यापकत्वं जरात्वाभावस्य तत्प्रतियोगित्वं जरात्वस्येति लक्षणसमन्वयः अङ्गत्वधातुत्वपदत्वादीनाञ्च न तथात्वं तेषामभावस्य कामपिसंख्यात्वव्याप्यजातिं प्रति व्यापकत्वाभावात् एवं तिङ्त्वोपसर्गत्वप्रत्ययत्वाद्यभावाः पञ्चत्वत्वादिजातिव्यापका इति तेषामक्तपरिमाणत्वसिद्धिः येषां धर्म्माणां परिगणिताक्षरारम्भकसमुदायात्मकव्यक्तिवृत्तित्वं तेषामक्तपरिमाणत्वमङ्गत्वधातुत्वपदत्वानां न तथेति न तान्यक्तपरिमाणानीति निष्कर्षः ननूदकशब्दत्वस्याप्यक्तपरिमाणत्वादनेन न्यायेन दकशब्दे उदकशब्दत्वानयनपरभाष्यविरोध इति चेन्न तद्भाष्यस्यैकदेश्युक्तत्वात् पूर्वोत्तरनिमित्त-

# पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्त बलीयः ॥ ३८ ॥

कार्यादिति परिभाषया गुणोदकमित्यादावुदके केवलइति रस्य वहिरङ्गस्याप्येकादेशात्प्रागेव प्रवृत्तेः। ननु अनेनैव न न सर्वत्र सिद्धौ स्थानिवत्सूत्रं किमर्थमित्यत आह "यत्रानि दिं जातिव्यञ्जकेत्यादि यथारामायेत्यादौ तत्र सुप्त्वादि र्थमित्यर्थः तत्त्वाप्रतीताविति अनन्यत्वाप्रतीतावित्यर्थः लोके न्नाधिकावयवके श्वादौ श्वत्वाद्यप्रतीतेरितिभावः, विकृता रूपेति यथा चर्म्मन्शब्दाण्णिचि क्विपि टिणिलोपे चर्मिल नन्तत्वातिदेशार्थमित्यर्थ स्तत्रानेन न्यायेन न सिद्धिर्विकृता निबन्धनत्वादनन्तत्वव्यवहारस्य, नचाभीथादित्यत्रैकादेश सर्गत्वस्याक्तपरिमाणत्वेनानातिदेशाद्ह्रस्वत्वाप्रवृत्तावपि स्याभित्यस्य पदत्वमनेन न्यायेनादाय जस्त्वापत्ति रित्यत क्वचिदित्यादि ॥ ३७ ॥

शास्त्रघटकपदप्रयोज्यविषयतानियामकपरिभाषा ख्याय बलवत्त्वप्रयोजकपरिभाषाप्रकरणं व्याख्यातुमा माणस्सामान्यरूपेण बलवत्त्वप्रयोजकप्रदर्शकपरिभाषा पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरंबलीयइति, क्रमेण त्कृत्य व्याख्यायते पूर्वात्परं वलवत् विप्रतिषेधसूत्रा पूर्वपरशब्दयोस्सम्बान्धिशब्दत्वात् स्वोत्तरत्वसम्बन्धेन स्वा ष्टं शास्त्रं स्वापेक्षयाबलवत् स्वोत्तरत्वादित्यनुमानाकारोक्त उत्तरत्वस्य बलवत्त्वप्रयोजकत्वं बीजमाह विप्रतिषेधशास्त्र एतेन विप्रातिषेधशास्त्रस्य परशास्त्ररूपपक्षावृत्तित्वाद्धेतुत्वासि रित्यपास्तम्. परस्य बहिरङ्गत्वानित्यत्वोत्सर्गत्वान्यतम

पूर्वात्परं बलवत् विप्रतिषेधशास्त्रात्पूर्वस्य परं बाधकमिति यावत् ॥ ३८ ॥

नन्वेवं भिन्धीत्यत्र परत्वात्तातङा बाधितो धिर्न स्यादत आह ।

पुनःप्रसङ्गविज्ञानात्सिद्धम् ॥ ३९ ॥

स्वे दुर्बलत्वेन बाधोदोष इति न वाच्यं विप्रतिषेधशास्त्रोपन्यासेन तुल्यबलत्वस्यापिसूचनेन स्वनिरूपितबहिरङ्गत्वाभाववत्त्वस्व-निरूपितानित्यत्वाभाववत्त्व स्वनिरूपितोत्सर्गत्वाभाववत्त्वस-म्बन्धानामपि हेतौ पक्षतावच्छेदकेच निवेशबोधनात्, परं बाधक-मिति यावादिति तथा च परशास्त्रेण स्वप्रवृत्तियोग्यातिरिक्त-त्वेन स्वविहितकार्याश्रयातिरिक्तत्वेन च पूर्वशास्त्रीयोद्देश्य-तावच्छेदकावच्छिन्ने संकोच इति बोध्यम् ॥ ३८ ॥

नन्वेवं भिन्धीत्यत्रपरत्वात्तातङावाधितोधिर्नेति नन्वेवं. पूर्वशास्त्रापेक्षया पूर्वोक्तप्रकारद्वयेन संकोचकत्वरूपबाध-कत्वस्य परशास्त्रे स्वीकारे, इदन्न युक्तं तातङि धिभावं परत्वा द्बाधित्वा जाते स्थानिवद्भावेन हित्वं दुर्लभम् तातङादेः स्थानिवत्त्वप्रतिषेधोवक्तव्य इति वार्तिकेन स्था-निवत्त्वनिषेधात्, भिन्तादित्येवरूपं, वैकल्पिकत्वेन तदभावे बाधकाभावाद्धिभावप्रवृत्तौ प्रतिबन्धकाभावेन धिभावसिद्धेः अथ वैकल्पिकत्वेन तातङ्तदभावौ विधेयौ तातङा इव तद भावेनापि परत्वाद्बाधितोधिर्नस्यादपितु हेरेव श्रवणं स्यादिति स म्यगेवावतरणं तातङाइत्युत्तरमिवतदभावेनापीतिशेष इतिचेन्न-अप्राप्तविभाषास्थलेऽभावस्य सिद्धत्वेन भावमात्रस्यैव विधेय-

नन्वेवं तिसृणामित्यत्र परत्वात्तिस्रादेशे पुनस्त्रादेशः स्यादत आह।

## सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव

त्वात् अत एव मुचो ऽकर्मकस्य गुणोवेत्यनेनाभावस्याप्रवृत्तित्वात् तत्पक्षे मुमुक्षते वत्सः स्वयमेवेत्यत्रात्रलोपोऽभ्यासस्य सूत्रेणतत्प्रकरणविधेयसन्नियोगशिष्टा ऽभ्यासलोपविधायकेनाभ्यासलोपोन केचित्तु भिन्धकीत्यत्र परत्वाद्भिनावाधितोऽकच् स्यादित्यवतरणमाहुस्तदपि न कुत्सानिमित्तकत्वेनाकचोऽन्तरङ्गत्वेनैव बाधात् तुल्यबलत्वाभावेन विप्रतिषेधसूत्राप्राप्तेः परंतु भिन्धीति भिन्तादित्यस्योपलक्षणं तत्र परत्वात्तातङा धिभावं बाधित्वा जाते धिभावस्याप्राप्त्या तातङादेस्थानिवत्त्वप्रतिषेधोवक्तव्य इतिवार्तिकस्य वैयर्थ्यमित्याशयकमवतरणम् पुनः प्रसङ्गविज्ञानात्सिद्धमिति प्रसंगशब्दोलुप्तसप्तमीकः पुनः प्रसंगे प्राप्तौ सत्यां विज्ञानं शास्त्रप्रवृत्तिरित्यर्थः तथाच स्वमूलकबाधस्थले स्वप्रवृत्तियोग्यातिरिक्तत्वेन संकोच इति तत् प्रथमान्तात्विज्ञानशब्दान्तमेव परिभाषास्वरूपमधिकृत्य विधानरूपम् ॥ ३९ ॥

सकृद्गतौ विप्रतिषेधे यद्बाधितन्तद्बाधितमेवेति विप्रतिषेधे सति सकृद्यद्बाधितं तत् गतौ प्राप्तौ सत्यामपि बाधितमेव न प्रवर्तत इत्यर्थः उभयरूपेण पूर्वशास्त्रे संकोच यावत् उभपत्र वीजमुपन्यस्यति तत्र क्वचिच्चारितार्थ्यमित्यादिना पर्य्यायेण तृजादिवदिति यथा ण्वुल्तृचौ पर्य्यायेण भवतस्तथा वृक्षेभ्य इत्यत्रैत्वदीर्घयोरपि पर्य्यायेण प्रसङ्ग इति ननु पर्य्यायेण प्रवृत्तिरित्यसंगत न्तथासति विधेयशून्यस्य

तत्रक्वचिच्चरितार्थयोरेकस्मिन्युगपदुभयोः कार्ययोरसंभवे न बाधकाभावात्पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थं विप्रतिषेधसूत्रमिति सकृद्गतिन्यायासिद्धिः । यथा तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये तदोभयो र्न करोति यौगपद्यासंभवात्तथा शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्त्यसंभवादप्रतिपत्तौ

कस्य चिल्लक्ष्यस्य साधुत्वाभावाय विधये क्लृप्तस्योद्देश्यतावच्छेदकव्यापकत्वस्य भंगापत्तेः पक्तेत्यादौ धातुत्वरूपोद्देश्यतावच्छेदकाधिकरणे स्वाव्यवहितपूर्व्वत्वसम्बन्धेन ण्वुलोऽभावस्य सत्वात् नचात्रोक्तसम्बन्धेन व्यापकत्वस्य विधेयद्वये बाधितत्वेनान्यत्र तथा नियमस्वीकारेऽपि प्रकृते उद्देश्यतावच्छेदकसामानाधिकरण्यमात्रस्वीकारेण पर्य्यायेण प्रवृत्तौ बाधकाभाव इति वाच्यम् तथासति प्रकृते कदाचिद्विधेयद्वयशून्यस्य पच् इत्यस्यापि साधुतापत्तेः, अत्रोच्यते प्रकृते विधेये अन्यतरत्वैयर्थ्यापत्त्योद्देश्यतावच्छेदकं प्रति विधेयतावच्छेदकधर्म्मावच्छिन्नव्यापकताया अभानेप्यन्यतरत्वावच्छिन्नव्यापकताया एव शास्त्रतात्पर्यविषयत्वात् तस्य चाबाधात् विधेयशून्यस्य साधुत्वाप्रसक्तेः व्यापकताघटकाधिकरणस्यान्यतरानधिकरणस्यैव प्रकृते निवेशन विधेयतावच्छेदकावच्छिन्नव्यापकताभाने ऽपि क्षत्यभावाच्च ( नियमार्थमिति ) विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयत इति वचनानुसारेण प्रकार्य्यरूपाविधेयस्य पा

प्राप्तायामिदं परविध्यर्थं, तत्र कृते यदि पूर्वप्राप्तिरस्ति तदपि भवत्येवेति पुनःप्रसङ्गविज्ञानासिद्धिरिति विप्रति- षेधसूत्रे भाष्ये स्पष्टम् । यत्तु कैयटादयो व्यक्तौ पदार्थे प्र- लक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयोस्तत्तल्लक्ष्यविष- योरचारितार्थ्येन पर्यायेण द्वयोरपि प्राप्तौ परमेवेति नि- मार्थमिदमिति सकृद्गतिन्यायसिद्धिः । अत्र पक्षे एत- यमवशादेतल्लक्ष्यविषयकपूर्वशास्त्रानुपप्लव एव जाति- क्षे तूद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थयो- योः शास्त्रयोः सत्प्रतिपक्षन्यायेन युगपदुभयासम्भव- विरोधस्थल उभयोरप्यप्राप्तौ परविध्यर्थमिदमिति पुनः- सङ्गविज्ञानसिद्धिरित्याहुस्तन्न व्यक्तिपक्षे सर्वं लक्ष्य- शास्त्रं व्याप्नोति न जातिपक्षे इत्यत्र मानाभावात् । न-

क्षिकप्राप्तिरूपस्य नियमत्वप्रयोजकस्य सत्त्वादितिभावः पर- वेति न पूर्वमिति नियमस्तेन परत्वादपि न पूर्वप्रवृत्तिरितिभाव- ( अप्रतिपत्तौ प्राप्तायामिति भृत्यस्थानीयं लक्ष्यं कस्यापि शा- स्य विधेयसम्बन्धरूपं कार्य्यं न करिष्यतीति भवति शास्त्राप- रूपाप्रतिपत्तिरित्यर्थः ( परविध्यर्थमिति ) विधिरत्यन्तमप्रा- वित्युक्तेरितिभावः, व्यक्तौ पदार्थ इति त्रेत्वय इत्यादिशा- टकत्र्यादिपदानां त्रित्वाद्युपलक्षिततत्तद्व्यक्तित्वावच्छिन्ने श- रिति न शक्यतावच्छेदकतत्तद्व्यक्तित्वभेदे ऽपि शक्तिभेद- लक्षणीभूतधर्मस्यैक्यात् एकेन पदेनैकतद्व्यक्तित्वावच्छि-

ह्मणं हन्यादित्यादौ जात्याश्रयसकलव्यक्तिविषयत्वार्थमेव जातिपक्षाश्रयणस्य भाष्ये दर्शनात् अत एव सरूपसूत्रे भाष्ये जातौ पदार्थेऽनवयवेन साकल्येन विधेः प्रवृत्तौ गौरनुबन्ध्य इत्यादौ सकलगवामनुबन्धनासम्भवात्कर्मणो वैगुण्यमुक्तम् । द्रव्यवादे चासर्वद्रव्यावगतेर्गौरनुबन्ध्य इ

स्यैव बोधादन्यतद्व्यक्तित्वावच्छिन्ने कार्यं न स्यादिति प्रति लक्ष्यं लक्षणोपप्लव इतिबोध्यम् ( सत्प्रतिपक्षन्यायेनेति ) विरुद्धसाध्यसाधकहेतुमान् पक्षस्सत्प्रतिपक्षो यथा वह्निव्याप्यधूमवान् पर्वतो वन्ह्यभावव्याप्यपाषाणमयत्ववानित्यादौ वन्हेस्तदभावस्य च नानुमितिरेकपरामर्शस्यापरसाध्यकानुमितौ प्रतिबन्धकत्वात् तद्वत्तावुद्धिं प्रति तदभावव्याप्यवत्तावद्धेः प्रतिबन्धकत्वात् तद्वत् एकस्यापि शास्त्रस्य न प्रवृत्तिः ( सर्वं लक्ष्यं शास्त्रमिति ) लक्ष्यं कर्म शास्त्रं कर्तृ ( न ब्राह्मणं हन्यादिति ) व्यक्तिपक्षे एकस्या एव ब्राह्मणव्यक्तेर्हननं निषिद्धं स्यत्न्न सर्वासामिति जातिपक्षाश्रयणं, अतएवेति जातिपक्षे शास्त्रस्य सकललक्ष्यव्यापकत्वादेवेत्यर्थः, अनवयवेनेत्यस्यैव व्याख्यानं ( साकल्येनेति ) द्रव्यवादेचेति व्यक्तिपक्षेचेत्यर्थः इयं व्यक्तिः, लक्ष्यरूपा व्यक्तिरित्यर्थः, स्वमते व्यवस्थामाह तत्र लक्ष्यानुसारादित्यादिना शास्त्रीयदृष्टान्ताश्रयणामिति यथा पर्य्यायेण ण्वुल्तृचौ भवतस्तथा पर्य्यायेण प्राप्ति स्स्यादित्यर्थः लौकिक दृष्टान्ताश्रयणामिति. यथा तुल्यवलयोरेकः प्रेष्योनोभयोः कार्यं करोति तथा लक्ष्यं नोभयोः शास्त्रयोर्विधयसम्बन्धं कारिष्य वीत्यर्थः. यौगपद्येनासम्भव एवेति, न त्वेकस्य कार्यद्वयास-

ऽभव एवेत्यर्थः, यथा शिष्टादिति अत्र तातङ्शा... योरेकस्थानिकत्वाभावेऽपि यौगपद्यासम्भवाद्विप्रतिषेधशा... प्रवृत्तिः, ननु शासहीतिस्थिते हिनिरूपिताव्यवहितपूर्वत्व... शिष्टशास्त्वं शासि, अङ्गाव्यवहितोत्तरत्वविशिष्टहिशब्दस्य... युगपदस्त्येवेतियुगुपत्प्रवृत्तौ कोविरोध इति चेन्न हिनि... ताव्यवहितपूर्वस्य शासः प्रसंगे शा साधुरित्यर्थे शा... हीत्यस्य प्रसङ्गे शामात्रस्यैवमङ्गोत्तरत्वविशिष्टस्य हेः प्र... तातङ्मात्रस्य साधुत्वापत्त्या निमित्तवाचकपदानामा... विधेयेऽपि निमित्तानन्तर्य्यविशेषणस्यावश्यकत्वेन यु... दुभयोः प्रवृत्तौ विधेये स्वस्वानिमित्तानन्तर्य्यवा... विरोधस्य स्पष्टत्वात्, ननु विधेये निमित्तानन्तर्य... ऽपि इकोयणचीत्यादौ अजव्यवहितपूर्वेग्घटितस्य स... ऽजव्यवहितपूर्वयण्घटितस्साधुरित्यर्थे सुधीउपास्य इ... प्रसङ्गे सुध्युप, सुध्यु इत्यादीनां सुध्युपास्योदेवामध्वारिरि... दीनांच प्राप्तस्य साधुत्वस्य वारणाय स्थानेन्तरतमपरिभा... ऽजव्यवहितपूर्वेग्घटितस्य प्रसङ्गे ऽजव्यवहितपूर्वयण्घ... न्तरतम आदेश इत्यर्थोवक्तव्यः साद्दश्यंच स्वघटकश्रौता... नीतरयावद्वर्णघटितत्वस्वविशिष्टाघटितत्वोभयरूपेण वै०... घटकेतरत्वस्वघटकोद्देश्यकश्रौतादेशेतरत्वोभयसम्बन्धेन त... प्रसक्तापेक्षया न्युनाधिकवर्णघटितस्य आदेशस्य न ... एव आन्तरतमपरिभाषयैव सुध्युपास्यस्य. शामात्रस्य तातङा... चादेशत्वाभावनिर्वाहे विधेये निमित्तानन्तर्यदानस्य प्र... वेनानिवेशात् किञ्चेग्घटितस्य प्रसंगे यण्घटितस्साधुरि... र्थस्य बोधनेऽपि यण्मात्रे शास्त्रस्य व्यापारस्तादितरवर्णा... प्रशक्तानामेवादेशे सन्निवेशोनन्यूनाधिकाना मन्येषाम्बा... भावादित्यन्तरतमपरिभाषामन्तरेणाप्युक्तदोषाणामुद्धारा...

निमित्तानन्तर्यानिवेश इति विरोधाभाव इति चेन्न अजव्यवहितपूर्वेणघटितस्य प्रसङ्गे यण्घटितस्साधुस्तदघटितो साधुरिति व्यापारस्य सुधी उपास्य इत्यस्य साधुत्वाभावापत्त्यावश्यकतया प्रकृते ऽपि शास्हीत्यस्य प्रसङ्गे शाघटितस्साधुरन्यो ऽसाधुरित्यर्थे शास्तात् शातात् इत्यनयोरसाधुत्वं बाधितं अङ्गात्परत्वविशिष्टहीत्यस्य प्रसंगे तातङ्घटितस्साधुरन्योऽसाधुरितिबोधनेन शाहीत्यस्य शाद्धीत्यस्य चासाधुत्वं बोधितमिति एकेन यस्य साधुत्वमपरेण तस्यासाधुत्वमिति विरोध इति बोध्यम्, प्रियक्रोष्टूनीत्यादावपि एकेन तृज्वद्भावाघटितस्य प्रियक्रोष्टुनित्यस्यासाधुत्वमपरेण नुमघटितस्य प्रियक्रोष्ट्रित्यस्यासाधुत्वबोधनाद्विरोध स्तथा नुम्नुटोरपि विरोध उन्नेय इति मूलोक्तविधेयान्वयि निमित्तानन्तर्यं हेयमेवेत्याहुः यत्तु नुमनुटोर्विषयेतु वारीणामिति लक्ष्यस्यैवोभाभ्यां साधुत्वबोधनेऽपि उभयोरपूर्वबोधकत्वासम्भवेनैकस्य विधायकत्वमपरस्यानुवादकत्वं वक्तव्यन्तत्र कस्य विधायकत्वं कस्यानुवादकत्व मित्यादिग्रन्थेन विरोधोपपादनं तच्चिन्त्यं नुमि दीर्घाभावेन वारिणामित्यस्य नुटि दीर्घे वारीणामित्यस्य साधुत्वेनोभाभ्यां वारीणामित्यस्यैव साधुत्वबोधनासम्भवात् यदपि मूलोक्तं न युक्त मादेशप्रवृत्तिकाले निमित्तानन्तर्याभावेऽपि तदुत्तरं स्थानिवद्भावेन तत्सत्वेनासम्भवोपपादनस्यैवासम्भवादित्युक्तं तदपि न प्रवृत्तिकालिकविरोधमात्रेण विप्रतिषेधसूत्रप्रवृत्तिसम्भवात् यदपि किञ्च यदागमाइतिन्यायस्यागमप्रवृत्तिकालएव प्रवृत्तिराद्यन्तावितिशास्त्रसहकारेणोद्देश्यग्रहणग्राह्यत्वविशिष्टानामागमानां तत्तच्छास्त्रविधानादित्युक्तं तदपि न प्रकृते स्वाभीष्टसाधकं, प्रवृत्तिकाले नुड्दशे तृजन्तत्वाभावेनोद्देश्यग्रहणग्राह्यत्वेऽपि आगमविशि-

स्यादावेकः शास्त्रोक्तोऽपरोऽशास्त्रोक्तइत्युक्तम्। किञ्च
हि भाष्योक्ततृजादिदृष्टान्तस्य व्यक्तिपक्ष एव सर्वविध
त्वं न जातिपक्षे इत्यत्र मानमस्ति। अपि च व्यक्ति
ऽप्यन्यव्यक्तिरूपाविषयलाभेन चरितार्थयोरियं व्यक्तौ
रोधात्स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यम्।
तिपक्षेऽपि तज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव नैतद्
क्ताविषयकत्वमित्यत्र विनिगमकाभावः तत्र लक्ष्यानु
रात्क्वचिच्छास्त्रीयदृष्टान्ताश्रयणं क्वचिल्लौकिकदृष्टा
श्रयणमिति भाष्यसम्मतमार्ग एव युक्त इति बोध्य
द्वयोः कार्ययोर्यौगपद्येनासम्भव एव विप्रतिषेधशास्त्र
योगी इदम् इको गुणेति [१.१.३.] सूत्रे कैयटे
म्। यथा शिष्टादित्यादौ तातङ्शाभावयोर्युगपत्प्रा

ष्टे तृजन्तत्वाभावेन तृजन्तरूपविधेये सर्वनामस्थानरूपनि
त्तानन्तर्यबाधेन विरोधस्य स्पष्टत्वात् किञ्च किञ्च स्वस्वनिमि
नन्तर्यासम्भवोऽपि दुरुपपाद एवेति तदुत्तरशंकाग्रन्थोप्यसंग
विधेये निमित्तानन्तर्यस्य पूर्वमेव बुद्ध्यारूढत्वेनविरोधस्य
त्वात्,तद्धृदयस्थं कृत्वैव हि स्थानिवद्भावेन विरोधाभावस्यो
दितत्वात्,तदुत्तरं तेषां विधेयकुक्षिप्रविष्टत्वेन शास्तीत्यादावा
परकशादेशापत्तिरितिदूषणदानमपि भावानवबोधविजृम्भित
आवृत्त्योद्देश्यविधेययोरुभयत्रैव निमित्तानन्तर्यविशेषणस्य
न्थकाराभिप्रेतत्वात्, नच विशिष्टस्य विधेयत्वेऽपि प्राप्ताप्रा
विवेकन्यायेन शाशब्द एव विधेयता पर्यवस्यति

स्त्रस्वनिमित्तानन्तर्य्यासम्भवः। यद्यपि तातङादेः स्थानित्वेनास्त्येव तत्तथाप्यादेशप्रवृत्त्युत्तरमेव स, न तु तत्प्रवृत्तिकाले। एवं नुम्तृज्वत्त्वयोः प्रियक्रोष्टूनीत्यादौ युगपदसम्भवो यदागमाः [प११] इत्यस्य नुम्प्रवृत्युत्तरं प्रवृत्तेः। एवं भिन्धीत्यत्र तातङ्धिभावयोर्युगपदेकस्थानिसम्बन्धस्याङ्गरूपनिमित्तानन्तर्यस्य चा सम्भवो बोध्यः नुम्नुटोरपि नुट्यजादिविभक्त्यानन्तर्य्यबाधो नुमि ह्रस्वान्ताङ्गबाध इत्यसम्भवाद् विप्रतिषेधः। क्वचिदिष्टानुरोधेन पूर्वशास्त्रे स्वरितत्वप्रतिज्ञाबलात्स्वरितेनाधिकं कार्यमित्यर्थात्पूर्वमेव भवति। तेन सर्वे पूर्वविप्रतिषेधाः संगृहीता इति स्वरितेन [२.३.११] इति सूत्र भाष्ये। विप्रतिषेध सूत्रस्थपरशब्दस्येष्टवाचित्वात्तत्संग्रह इति विप्रतिषेध सूत्रे भाष्ये॥ ४०॥

नैतन्तु सर्व्वादीनीत्यादौ सर्व्वार्थवाचकत्वमिवोद्देश्यगतमेवापेक्षितमिति न दोष इति वाच्यं शिष्टादिरदत्राप्युद्देश्ये शास्धातौ हिशब्दपूर्व्वत्वस्य सत्वेनासंभवस्य दुरुपपादत्वादिति तदुत्तरग्रन्थोप्यविचाररमणीयः सर्व्वार्थवाचकत्वस्य सामानाधिकरण्यसम्बन्धेन सर्व्वनामपदे विशेषणत्वेनोद्देश्यगतत्वमात्रेण तस्योपपत्तिः प्रकृते हिपूर्व्वत्वविशिष्टशादेशस्य विधाने शादेशे स्वरूपसम्बन्धेन पूर्व्वत्वस्य विशेषणत्वेन प्रवृत्तिकाले तदभावे उद्देश्यगतत्वमात्रेण तदुपपादनस्याशक्यत्वादित्यलमसदर्थाचिन्तनेनेति दिक्। परशब्दस्येष्टवाचित्वादिति अ-

नन्वत्रमंथत इत्यादौ परत्वाद्विकरणेऽनुदात्तङित [१.३.१२] इत्यादिनियमानुपपत्तिस्तेन व्यवधानादत

## विकरणेभ्यो नियमो बलीयान् ॥ ४१

अत्र वृद्भ्यः स्यसनोः (१.३.९२) इति सूत्रेण विभाषाऽतङ्विधानं ज्ञापकम् । अन्यथा स्यव्यवधाने

परमितिच्छेदेन पूर्वविप्रतिषेधसंग्रहस्तु न युक्तः परविप्रतिषेधस संग्रहापत्तेः प्रमाणमन्तरेणावृत्तेरसम्भवाच्च ॥ ४० ॥

विकरणेभ्योनियमोबलीयान् परत्वाद्विकरणे इति ब स्थानशादौ विकरणस्यावकाशोलिडादौ नियमस्यावकाश भावः, पूर्वविप्रतिषेधेन तु न निर्व्वाहस्तस्य भाष्योक्त एव स्वीकारात् तिपूनसित्यादिसामान्यसूत्रेण विहितानां दात्तङित इत्यादिनियमेनेतरनिवृत्तिरितिपक्ष इदम्वाऽव घादिविध्येक वाक्यतया नियमसूत्राणां विधायकत्वमिति न्तपक्षेतु लकारावस्थायां सार्व्वधातुकपरत्वाभावात् पर द्विकरण इत्युक्तिरसंगता स्यात्, परत्वादिति नित्यत्व लक्षणमन्यथा विकरणस्य नित्यत्वेनातुल्यबलत्वाद्विप्रति त्वाप्रवृत्तौ परत्वादित्यस्यासंगत्यापत्तिः, अन्यथा स्यव्यव परिभाषाया अभावे परत्वात् लृटस्थाने तिबादिसूत्रेण पदद्व परत्वात् स्यप्रत्यये तेन व्यवधानान्नियमाप्राप्त्योभयपदसि सिद्धे अतङ्विधानं व्यर्थं सत्परिभाषाज्ञापकं ज्ञापि त्वस्यां स्यप्रवृत्तेः प्राक् नियमप्रवृत्तिवारणाय चारितार्थ भावः नन्वस्यामवस्थायां स्यप्रत्ययपरत्वाभावात् कथं वृ स्यसनोरित्यस्य प्रवृत्ति रित्यत आह स्य इति तु विषय

माप्रवृत्तौ सामान्यशास्त्रेणोभयसिद्धौ विकल्पाविधानं व्यर्थं स्यात्। अत्रार्थे ज्ञापिते तु स्य इति विषयसप्तमीवोध्येत्यनुदात्तङित (१.३.१२.) इत्यत्र भाष्यकैयटयोः स्पष्टम्। विकरणव्यवधानेऽपि नियमप्रवृत्तेरिदं ज्ञापकमिति शदेः शितः (१.३.६०] इत्यत्र भाष्ये ध्वनितम्। वस्तुतोऽस्माज्ज्ञापकादनुदात्तङितः (१.३.१२.) इत्यादि प्रकरणं तिवादिविध्येकवाक्यतया विधायकम्। तत्र धातोः [३.१.९१.]इति विहितपञ्चमी तत्समानाधिकरणमनुदात्तङित[१.३.१२] इत्यादि विहितविशेषणमेव। एवंच लावस्थायां स्येऽपि तद्व्यवधाने तङ्सिद्धिः। शवादिभ्यस्तु पूर्वमेव नियमः। यद्वा लमात्रापेक्षत्वादन्तरङ्गा आदेशा लकारविशेषापेक्षत्वात्स्यादयोवहिरङ्गा इति दिग्योगलक्षणपञ्चम्यामपि न दोषः। अत्र पक्षे वृद्भ्यः स्य (१.३.९२] इति

मीति, पक्षान्तरमाह विकरणव्यवधानेपीति अस्मिन् पक्षे स्यइतिपरसप्तम्येव विप्रातिषेधशास्त्राबाधश्चेतिलाघवं. सिद्धान्तभूतं तृतीयं पक्षमाह वस्तुत इति तत्रेति तिबादिसूत्रे इत्यर्थः विहितपञ्चमीति लृलुटोः परयोः प्रातिपदोक्तत्वात्स्यतासिप्रत्यययोः कृतयोः प्रवृत्यर्थं साऽऽवश्यकीतिभावः, शवादिभ्यस्तु पूर्व्यमेव नियम इति तिबादिसूत्रस्य परत्वेन तदेकवाक्यतया नियमस्यापि परत्वात्तस्विना सार्व्वधातुकपरत्वाभावाच्चेतिभावः, विहितपञ्चम्यां गौरवादाह यद्वेति इदन्नयुक्तं सामान्यापेक्षाद्विशेषापेक्षं वहिरङ्गमित्यस्य भाष्यानारूढत्वेन खण्डयिष्यमाणत्वात् अत्र

सूत्रं स्यविषय इति व्याख्येयम् । आत्मनेपदशब्दादौ भा
संज्ञाश्रयणीयेति तत्त्वम् । भिन्नवाक्यतया सामान्यशा
विहितानां नियमे तु लुगादिनेव नियमेन जातनिवृत्ति
ङ्गीकार्या । भुक्तवन्तं प्रति मा भुङ्क्था इति ब्रूयात्
तेन कृतं स्यादिति न्यायैस्तु नात्र शास्त्र आश्रयितुं यु
नियमादिशास्त्राणां वैयर्थ्यापत्तेः । ध्वनितं चेदं स्थाने
तम [१.१.५०.] इति सूत्रे भाष्ये शास्त्रानर्थक्यं तु

पक्षे इति स्यादीनां वहिरङ्गत्वेनान्तरङ्गत्वात्प्राप्तं नियम
वादत्वेन वाधित्वा वृद्भ्य इति प्रवर्तत इति बोध्यम् न चेदा
स्यपरत्वाभावात् कथं प्रवृत्तिरित्यतआह वृद्भ्य इत्यादि,
जातस्य संज्ञाकरणात् संज्ञया विधाने अन्योन्याश्रय इत्यत अ
आत्मनेपदशब्दादाविति विहितानां नियमे दोषमाह जात
वृत्तिरिति ननु भुक्तवन्तं प्रति मा भुङ्क्था इति नि
ऽपि भोजनस्यानिवृत्तिरिवात्रापि जातस्यानिवृत्तिरित्यत अ
भुक्तवन्तं प्रतीति, ननु बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसा
नत्वं प्रकृत्यर्थक्रियान्वयि लिङाद्यर्थः निषेधार्थकमादिशब्द
गे च क्रियायां तदभावः प्रतीयते तथा च भोजनं बलवदनिष्टा
नुबन्धित्वविशिष्टेष्टसाधनत्वाभाववदित्येव प्रतीयेत तस्य च
ऽपि भोजने ऽबाधितत्वेन बोधनसम्भवात् कथं तत्र त
व्यर्थतेति चेन्न विध्यर्थकालिङादिना प्रवृत्ति, निषेधार्थकपद
भिव्याहारे निवृत्तिश्च प्रकृत्यर्थक्रियायां प्रतीयते जाते
जने निवृत्तेर्बाधितत्वेन तस्य वैयर्थ्यसम्भवात् यत्तु वि
लिङो विधानात् प्रवृत्तिजनकत्वेन तात्पर्यविषयत्वं तदर्थः
दिसत्वे च निवृत्तिजनकत्वेन तात्पर्यविषयत्वं भासते तथा

द्धिसंज्ञासूत्रे भाष्ये तिरस्कृतम् । सामान्यशास्त्रेणोत्पत्तिस्तु सरूपसूत्रस्थकैयटरीत्या प्रधानानुरोधेन गुणभेदकल्पनात्तावत्प्रकृतिकल्पनया कार्या, प्रत्ययनिवृत्तौ च तत्कालितप्रकृतेरपि निवृत्तिः कल्प्येति गौरवमित्यन्यत्र विस्तरः ४१

## परान्नित्यं बलवत् ॥ ४२ ॥

कृताकृतप्रसङ्गित्वात् । तत्राऽक्लृप्ताऽभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनमुचितमिति नित्यस्य बलवत्त्वे बीजम् । तदाह ? कृताकृतप्र-

तभोजने निवृत्त्यप्रयोजकत्वेन तन्नैरर्थक्यस्य स्पष्टत्वादित्युक्तंत्तत्तु शाब्दबोधरीत्यनवबोधाविलासितम्, वैयर्थ्यापत्तेरिति ननु तदपीष्टमेवेत्यत आह तिरस्कृतमिति वर्णेनाप्यनर्थकेन न भवितव्यं किम्पुनरियता सूत्रेणेति हि तत्सूत्रे भाष्यम्, ननु विहितानां नियमे सामान्यशास्त्रेण कथमेकस्माद्धातोः परस्यैकस्य लस्याष्टादशादेशा, अष्टादशानां युगपदेकस्थानिकत्वबाधादित्यत्यत आह ( सामान्यशास्त्रेणेत्यादि ) प्रकृत्यपेक्षया प्रत्ययः प्रधानमितिबोध्यम् प्रत्ययनिवृत्ताविति नियमशास्त्रेणेतिशेषः ४१

परान्नित्यं बलवादिति स्वविशिष्टं शास्त्रं स्वापेक्षया बलवत् स्वविशिष्टत्वात् उभयत्र वैशिष्ट्यं स्वप्रवृत्तिप्राक्कालिकप्राप्तिकत्व—स्वप्रवृत्त्युत्तरकालिकप्राप्तिकत्व स्वनिष्ठान्तरङ्गत्वानिरूपकत्व-स्वनिष्ठापवादत्वानिरूपकत्वैतच्चतुष्टयसम्बन्धेन एवं च परस्याप्यनेनैव बलवत्त्वमत एव परत्वान्नित्यत्वाच्चेत्यत्र परत्वादित्युक्तिरेकदेशिन इत्युक्तं शेखरे, कृताकृतप्रसङ्गित्वादिरङ्गोत्सर्ग

साङ्गि नित्यं तद्विपरीतमनित्यम् । अत एव तुदतीत्या परादपि गुणान्नित्यत्वात् शप्रत्ययादिर्भवति ॥ ४१ ॥

यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिस म्बन्धितयैव पुनः प्रवृत्तौ कृताकृतप्रसङ्गित्वमित्याशयेना

**शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति**

इदं शदेः शितः [१.३.६०] इति सुत्रे भाष्ये ष्टम् । तत्र हि न्यविशतेत्यत्र विकरणे कृते तदन्तस्या धातुमात्रस्येत्यडानित्यइत्युक्तम् ॥ ४३ ॥

एतत्तुल्यन्यायेनाह ।

**शब्दान्तरात्प्राप्नुवतः शब्दान्तरे प्र प्नुवतश्चानित्यत्वम् ॥ ४४ ॥**

योर्वलवत्वाभावे ऽपि न व्यभिचारस्तत्र निरुक्तहेतोरभा ति बोध्यम् कृताकृतप्रसंगित्वस्य वलवत्त्वव्याप्यत्वे व्यभि शंकानिवारकानुकूलतर्कमाह अक्लृप्ताभावकस्येति तुदती दौ शप्रत्ययेकृते क्ङितिचेतिनिषेधेनाप्रवृत्तावपि प्राप्तिमात्रेण स्यापि कृताकृतप्रसाङ्गित्वशंका न कार्या, बाधकाबाधितप्र स्यैव प्रकृते लक्ष्यानुरोधेन ग्रहणात् । आदिपदेन रुणद्धि यतीत्यादेः संग्रहः तत्र श्नमोर्गुणापेक्षया रधिजभोरचीति पधावृद्ध्यपेक्षया नित्यत्वं बोध्यम् ॥ ४२ ॥

शदेः शित इतिसूत्रस्थभाष्यप्रामाण्यादेकव्यक्तिनिमि मेव कृताकृतप्रसङ्गित्वं गृह्यते तत्फलितमाह शब्दान्तरस्य

एतन्मूलक मेवाह ।

**लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः ४५**

अतिदेशविषय इयंमासिद्धवत्सूत्रे कैयटेनोक्ता ४५ ॥

यदा तु शास्त्रव्यतिरेकेण तद्विधेयकार्ययोरेव नित्यत्वादिबिचारो यदापि व्यक्तिविशेषाश्रयणाभावस्तदाह ।

**क्वचित्कृताकृतप्रसङ्गित्वमात्रेणापि नित्यता ॥**

कृते द्वितीये नित्यत्वेनाभिमतस्य पुनः प्रसङ्गमात्रं नित्यत्वव्यवहारे प्रयोजकं न तु वाधकावाधितफलोपहितप्रसङ्ग एव तथेति भावः । तदाह ।

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥ ४८ ॥**

सप्तमे कैयटेन तदुपष्टम्भकं लोकव्यवहारद्वयमुदाहृतम् ! वालिसुग्रीवयोर्युध्यमानयोर्भगवता वालिनि हतेऽपि सुग्रीवस्य वालिनः प्राबल्यं न व्यवहरन्ति । भग-

प्नुवान्निति शब्दान्तरादिति शब्दान्तरे इतिच, तदन्तस्येति विकरणविशिष्टस्यैव लब्धव्यवहितपूर्वत्वविशिष्टाङ्गत्वादितिभावः एतत्फलन्तु इष्धातोस्सनि इड्द्वित्वयोः प्राप्ताविटि कृते षिशब्दस्याकृते इटि षशब्दस्य प्राप्तत्वेन व्यक्तिभेदेनानित्याद्द्वित्वादकृते कृतेऽपि सन एव प्राप्तत्वेन नित्यत्वात् पूर्वमिटि षिशब्दस्य द्वित्वे एषिषिषतीतिभवतीति, एवं कृताकृतप्रसङ्

वत्सहायैः पाण्डवैर्जये लब्धेऽपि पाण्डवानां प्राबल्यं व्य
वहरन्ति चेति । सर्व्वं चेदं लक्ष्यानुरोधाद्व्यवस्थितम् ।

लुटः प्रथमस्य (२.४.८५.) इतिसूत्रे भाष्ये ।

**स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति ॥**

इति पठ्यते । यत्र त्वेकस्यैव कार्यस्य परत्वं नित्य
च तत्रेच्छयान्यतरत्तदुभयं वा तस्य बलवत्त्वे नियामक
ल्लेख्यम् । अत एव तत्र तत्र परत्वान्नित्यत्वाच्चेति भा

एकेनैव लक्षणेनापेक्ष्यत इत्येतत्फलितमाह लक्षणान्तरेण प्राप्नु
वंन्निति अत एव नुमजरसोः प्राप्तयोः परत्वाज्जरसित्
भाष्ये नुमोहि जरसादेशात्पूर्वमजन्तलक्षणेन जरसादेशा
झलन्तलक्षणेन प्राप्तत्वादनित्यत्वम् ॥ ४५ ॥

यदातु लक्ष्यानुरोधात् व्यक्त्यैक्यस्य लक्षणैक्यस्य वा
दरस्तदा आह क्वचित् कृताकृतेति ॥ ४६ ॥

यदा कृताकृतप्रसंगमात्रमपेक्षते नतु बाधकाबाधित
त्याग्रह स्तदा आह यस्य च लक्षान्तरेणेति, सप्तमे सप्तमाध्
भाष्यव्याख्यावसरइत्यर्थः एतदुपष्टम्भकामिति एतत्परिभा
द्वयज्ञापकमित्यर्थः यथा भगवत्प्रयत्नेनैव सुग्रीवस्य पाण्डवा
च जये ऽविशिष्टे ऽपि लोकाः वालिनं प्रति सुग्रीवस्य प्राब
न व्यवहरन्ति कौरवान् प्रति पाण्डवानां प्राबल्यं व्यवहर
तथा प्रकृतेऽपि लक्षणान्तरेण निमित्तविघातस्थले प्रसं
बाधकाबाधितफलोपहितप्रसंगत्वाभावे अविशिष्टेऽपि क
न्नित्यत्वं क्वचिदनित्यत्वमिति भावः ॥ ४८ ॥

उच्यते । वस्तुत स्तत्र परत्वादित्युक्तिरेकदेशिनः। स्पष्टं चेदं विप्रतिषेधसूत्रे कैयटे। णौ चाङि [७.४.१.] इति ह्रस्वापेक्षया नित्यत्वान्तरङ्गत्वप्रयुक्तोद्दत्वस्य प्रथमतः प्रवृत्तौ नित्यत्वादित्येव भाष्य उक्तम्। एवं नित्यान्तरङ्गयोर्बलवत्त्व मपि यौगपद्यासम्भव एवेति बोध्यम् ॥ ४९ ॥

नित्यादप्यन्तरङ्गंबलीयोऽन्तरङ्गे वहिरङ्गस्यासिद्ध-त्वात् तदाह ।

## असिद्धं वहिरङ्गमन्तरङ्गे ॥ ५० ॥

नियामकमुल्लेख्यामिति उभयोरपिवलवत्त्वप्रयोजकत्वा-दिति भावः परत्वादित्युक्तिरेकदेशिन इति नित्यत्वेन नित्य-स्यानित्यापेक्षयाऽधिकबलवत्त्वेन तुल्यबलत्वाभावेन विप्रतिषेध सूत्राप्रवृत्तेरिति भावः ॥ ४९ ॥

नित्यादप्यन्तरङ्गं वलीय इति इदन्तु अन्तरङ्गवहिरङ्गयोः समकालप्राप्तिकत्वे बोध्यं, जातवहिरङ्गापेक्षया हि अन्तर ङ्गस्य बलवत्त्वबोधने फलाभावात् नित्यादपीति. अपिश-ब्दात् परादपीति बोध्यम् अन्तरङ्गश्च उत्सर्गभिन्नं गृह्यते तेनोत्सर्गरूपान्तरङ्गस्य बलवत्त्वाभावेऽपि न बाधः, तद्भिन्नस्यैव पक्षत्वात् ( असिद्धत्वादिति ) न चासिद्धत्वस्य वहिरङ्गनिष्ठत्वेन हेतुसाध्ययो वैयधिकरण्यामिति वाच्यम् अन्तरङ्गत्वस्यैव हेतु-त्वेन विवक्षितत्वात् असिद्धत्वादित्यन्तग्रन्थस्तु अन्तरङ्गत्वस्य ब-लवत्त्वप्रयोजकतायामनुकूलतर्कस्य प्रतिपादकः, असिद्धत्वमभा वप्रतियोगित्वं तथाच अन्तरङ्गदृष्ट्या वहिरङ्गस्याभावप्रतियो-गित्वात् अर्थादन्तरङ्गशास्त्रस्य वहिरङ्गशास्त्रविषयकज्ञानाभावा

अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽन्तर्भूता-
न्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम् । एवं तदीयनि-
मित्तसमुदायाद्बहिर्भूताङ्गकं बहिरङ्गम् । एतच्च खरवसा-
नयोः (८.३.१५] इति सूत्रेऽसिद्धवत्सूत्रे च भाष्यकै-
टयोः स्पष्टम् अत्राङ्गशब्देन शब्दरूपं निमित्तमेव गृह्य-
शब्दशास्त्रे तस्यैव प्रधानत्वात् । तेनार्थनिमित्तकस्य
वहिरङ्गत्वम् । अत एव न तिसृचतसृ [६.४४.]इति

त् विरोधिज्ञानाभावेन लक्ष्ये ऽन्तरङ्गस्य निष्शङ्कप्रवृत्तिः
हिरङ्गस्य तु स्वविरोध्यन्तरङ्गज्ञानात् लक्ष्ये साशङ्कप्रवृत्ति
त्यन्तरङ्गस्य बलवत्त्वं लोके तथैव दर्शनात् यद्वा अन्तरङ्गे
रङ्गस्यासिद्धत्वादिति हेतु रेव वहिरङ्गाविषयकज्ञानाभावा
त्यर्थः तस्यचाभावस्यान्तरङ्गेपक्षे सत्वान्न साध्यवैयधिक-
ण्यम् तथाच स्वविशिष्टं शास्त्रं स्वापेक्षया वलवत् स्वविशिष्टत्वं
उभयत्र बै० स्वनिष्ठापवादत्वानिरूपकत्व—स्वनिरूपितान्त
त्वोभयसम्बन्धेन अथवा स्वाविषयकज्ञानाभावोहेतुः सच
भाषालभ्य इत्याह असिद्धं वहिरङ्गमन्तरङ्ग इति ) अ
जातस्य समकालप्राप्तिकस्य च वहिररङ्गस्य ज्ञानाभावः
न्तरङ्गशास्त्रे वोध्यत इत्यजातवहिरंगके लक्ष्ये इव जातवहि-
ङ्गकेऽपि लक्ष्ये अन्तरंगशास्त्रं प्रवर्त्तत इति वोध्यम् अ
रङ्गवाहिरङ्गयोर्लक्षणे आह अन्तर्मध्य इत्यादि अन्तरङ्गत्ववहि-
गत्वयोश्च सानिरूपकत्वेन यन्निरूपितान्तरंगत्वं विवक्षि-
दीयनिमित्तसमुदायान्तर्भूतनिमित्तकत्वमन्तरङ्गत्वं, यन्नि-
वहिरंगत्वं विवक्षितं तदीयनिमित्तसमुदायवहिर्भूतानिमित्त

मित्तकत्वेनान्तरङ्गत्वात् पूर्वं ह्रस्वे ततोदीर्घे उक्तन्यायात्पुनर्ह्स्वाप्राप्त्या उकाल इति नकृत मिति बोध्यम्, नचादसोऽसेर्दादुदो म इत्यत्र उश्च ऊश्चेति समाहारद्वन्द्व इति कौमुदीविरोधः उक्तरीत्यान्तरङ्गत्वात्पूर्वं ह्रस्वे ततोदीर्घे ह्रस्वरूपासिद्धेरिति वाच्यम् तस्या एतद्दूषणेनैव दूषितत्वात् भाव्यमानोप्युकारः सवर्णान् गृह्णातीत्यनया ह्रस्वोकारमात्रोच्चारणेनैव ह्रस्वदीर्घविधानस्य शेखरकृताप्रतिपादनाच्च, विकरणेभ्यो नियमोबलीयानित्येतज्ज्ञापकेन विभाषा परस्मैपदविधानेनापरनिमित्तकत्वमन्तरङ्गत्वमित्यस्यैव ज्ञापनेन पचते इत्यादौ विकरणेभ्यः पूर्वमपरनिमित्तकत्वेनान्तरङ्गत्वादात्मनेपदसिद्धौ विकरणेभ्य इत्यस्या अपि एतन्मूलकत्वमेवेति बोध्यम् ननु ज्ञापितेऽपि तदन्तरङ्गत्वे उऊइतिस्थिते ह्रस्वस्यापरनिमित्तकत्वेनान्तरङ्गत्वं दीर्घस्यान्तर्भूतनिमित्तकत्वमन्तरङ्गत्वमित्युभयोस्साम्यमेवेति चेन्न बहिरङ्गत्वेन विवक्षितशास्त्रघटकसप्तम्यन्तपदेनाश्रीयमाणसमुदायघटकवृत्तिविषयताप्रयोजकसप्तम्यन्तपदघटितत्वस्यैवान्तरङ्गत्वरूपत्वात् ह्रस्वविधायके चोपयुक्तसप्तम्यन्ताभावेन दीर्घस्यान्तरङ्गत्वाभावात् नच वाह ऊठ इत्यत्र सप्तम्यन्तपदाभावेन पुगन्तलघूपधस्यचेत्यस्य तं प्रत्यन्तरङ्गत्वाभावेन ज्ञापकतापरभाष्यविरोधापत्तिरिति वाच्यं समकालप्राप्तिकान्तरङ्गत्वकुक्षावेवोभयत्र सप्तम्यन्तपदस्य प्रवेशनीयत्वात् ज्ञापकपरभाष्यन्तु जातासिद्धत्वाभिप्रायकं तत्र चान्तएव सप्तम्यन्तपदप्रवेशइत्यदोषात् ननु समकालप्राप्तिकान्तरङ्गत्वलक्षणे उभयत्र-सप्तम्यन्तपदप्रवेशे अन्तरङ्गत्वादियङ् रियति पियतीति भाष्यविरोध स्तत्र गुणशास्त्रीयसप्तम्यन्तपदेनाश्रीयमाणस्तिप् तदन्तर्भूतानिमित्तकत्वाभावादियङः रिअ इत्येतदन्तर्भूतानिमित्तकत्वेऽपि तस्य सप्तम्यन्तपदेनानाश्रयणादितिचेन्न शीघ्रोपस्थि

तनिमित्तकत्वरूपान्तरङ्गत्वस्येयङ्सत्वेनादोषात् । अत
नन्वेवमस्तुसुवदित्यादौ लघूपधगुणादुवङोऽल्पनिमित्तकत्वा
वादुवङ् न स्यादिति शंकाग्रन्थ उपपद्यते ऽन्यथा गुणशा
याङ्गपदेनाश्रीयमाणः अस्तुसुअ इति समुदायस्तदन्तर्भूतोऽ
स्तन्निमित्तकत्वेनोवङोऽन्तरङ्गत्वात् शङ्काया उत्थानाभा
मम तु गुणशास्त्रीयसप्तम्यन्तपदेनाश्रीयमाणान्तर्भूतनिमि
त्वस्योवङोऽभावात् सोपपद्यते शीघ्रोपस्थितनिमित्तकत्वेन
माहितम् अत एव च स्योन इत्यत्र ऊनशब्दमाश्रित्ययणा
न शब्दमाश्रित्यगुण इति भाष्ये सप्तम्यन्तपदेनाश्रीयमा
ब्दमादायैवान्तरङ्गत्वमुक्तम् ननु तत्रैवांतरङ्गत्वाद्यणागुणा
त्वमिष्यत इति सिद्धांतभाष्यविरोधः यणशास्त्रे गुणशा
सप्तम्यन्तंयत्तयदाश्रीयमाणसमुदायान्तर्भूतनिमित्तकत्वरू
ङ्गत्वाभावादिति चेन्न शीघ्रोपस्थितनिमित्तकत्वरूपान्तरङ्गत्व
णिसत्वात् ननु उभयत्र सप्तम्यन्तपदघटितान्तरङ्गत्वस्य वि
कश्च इश्च ईश्चचेतिद्वंद्वं कइईशेतिस्थिते (परमपि सव
वाधित्वाऽन्तरङ्गत्वाद्गुणे अयादेशे कयीशा इतिसि
अन्यथा परत्वाद्दीर्घे गुणे केशा इति स्यादिति) समकाल
कत्वहिरंगासिद्धत्वस्य मूर्धाभिषिक्तोदाहरणस्यापि शीघ्रो
तनिमित्तकत्वरूपान्तरंगत्वेनैव सिद्धिरितिचेन्नास्तीतिगृहा
न्वपरानिमित्तकत्वरूपान्तरंगत्वस्वीकारे नामीत्यत्रामीति
रामआमितिस्थिते नित्यत्वाद्दीर्घे नुट् न स्यादित्येतत्स
भाष्यासंगतिः अपरनिमित्तकत्वरूपान्तरंगत्वस्य नुटस्
तस्यैव पूर्वं प्रवृत्तेः द्युयूषतीत्यादौ दिवस्इति स्थिते
ऊठं वाधित्वा ऽपरनिमित्तकत्वेनान्तरंगत्वात्पूर्वं प्रथमं
शब्दस्यैव द्वित्वे ऽभ्यासे उकारश्रवणानापत्तिः आ
दौ गुणे औपदेशिकाजन्तत्वमादाय थल इटोनिषेधाय

स्वरतिसूतिसूयतिधूञूदितो वेति सूत्रे भाष्यकृत्कृतस्योपदेशपदानुवर्तनस्य वैयर्थ्यापत्तिश्चापरनिमित्तकत्वेन गुणापेक्षयाऽन्तरंगत्वात् पूर्वमिटोनिषेधसिद्धिरिति चेन्न उक्तभाष्यादपरनिमित्तकादेशाविधायकत्वमन्तरंगत्वमिति स्वीकारात् नुदादित्वानिषेधानामनादेशत्वेनादोषात् जहर्थेत्यत्र गुणात्पूर्वं प्राप्तस्येटोनिषेधे गुणे पुनः प्राप्तस्येटोनिषेधायोपदेशपदानुवृत्तेरावश्यकत्वाच्च यदिच अतोमित्यादौ तपरत्वमुच्चारणसुखार्थमेव अश्चआश्चेतिसमाहारद्वन्द्वे अमित्यमेव रूपम्भवति ऊकालइत्यत्र समाहारद्वन्द्वेनह्रस्वोकारोच्चारणे लाघवस्यसत्वेपीदृशलाघवस्य नादरः अतएव लाघवात् समाहारद्वंद्वे षट्चतुरइति अस्थिदधिसक्थ्यक्ष्ण इति चन्यासं विहाय इतरेतरयोगेन षट्चतुर्भ्यः अस्थिदधिसक्थ्यक्ष्णामितिगुरुन्यासः कृत इतिमन्यते, तदा अपरनिमित्तकत्वमन्तरङ्गत्वम्मास्तु गौधेरः पचेदित्यादावन्तर्भूतानिमित्तकत्वेन लोपस्यान्तरङ्गत्वात्तं प्रतिएयेयादेशयोरसिद्धत्वेनवलिलोपोन स्यादिति तु न वलि लोपे अन्तरङ्गपरिभाषाया अप्रवृत्तिकल्पनात् वृश्चतीत्यादौ वलि लोपदृष्ट्या संप्रसारणासिद्धत्वप्रतिपादनपरभाष्यविरोधस्तु न, जातबहिरङ्गासिद्धत्वाभावस्यैव कल्पनात् अत एव क्नोपयतीत्यादौ णिजपेक्षपुकोयलोपदृष्ट्यानासिद्धत्वं चेले क्नोपेरिति निर्देशश्चोपपन्नः यायावरः ज्ञातिरित्यादौ यङोऽकारलोपस्य प्रत्ययनिमित्तकस्य यलोपे नासिद्धत्वमिति केचित्, नागेशानुयायिनस्तु अजानिष्ठान्यानन्तर्यनिमित्तके कार्ये कर्त्तव्ये कृते च यदन्तरङ्गं प्राप्नोति तत्र कर्त्तव्ये बहिरङ्गासिद्धत्वन्नेत्यर्थकेन नाजानन्तर्ये इत्यनेनैवोक्तदोषाणां परिहार इति वदन्ति, संज्ञाकृतबहिरङ्गत्वाश्रयणपरकैयटविरोधं स्वमते उपपाद्य खण्डयति नान्विति इकोयणचीत्यादावपि तदन्तविधाविति येनविधिरितिसूत्रेणविशेषणमात्रस्यतदन्तसंज्ञकत्वेतद-

पवादभूतायायस्मिन्विधिस्तदादावल्ग्रहणइतिपरिभाषया
पिप्रकारमात्रपरसप्तम्यन्तप्रवृत्त्यापत्तौ इकोयणचीत्यादावचीति
पदस्यापि अजादावित्यर्थे इत्यर्थः अपवादत्वादिति अनुनासि
निमित्तकस्योठोऽपवादकत्वादित्यर्थः एतेनादिप्रधातोर्णिज
न्त् क्विपिणिलोपे तस्य स्थानिवद्भावा द्बलोपाप्राप्त्यातन्नोर
रितार्थ्येनापवादत्वाभावः ऊठितुनस्थानिवत्त्वंक्कौविधि
निषेधादित्यपास्तम् अन्तरंगे इति पञ्चसंज्ञापेक्षगुणापेक्षया
श्रयापेक्षस्योठो ऽन्तरगत्वमितिभावः तदन्तविधावपीति
यणचीत्यादौ तदादिविधिनाऽजादावित्यर्थेऽपि सि अन
समुदायस्योभयत्राश्रयणेऽपि संज्ञाद्वयापेक्षयणपेक्षया पञ्च
सापेक्षात्गुणस्याधिकसंज्ञासापेक्षात्वेन त्वद्रीत्या बहिरङ्गत्वं
सत्वेन गुणस्यान्तरंगत्वप्रतिपादनपरभाष्यासंगत्यापत्या
क्तं गुणस्योठंप्रति बहिरंगत्वं न युक्तमितिभावः शब्दप
दयेति शब्दशक्त्येत्यर्थः । तथासतीति बहुपदार्थापेक्षत्व
पदार्थापेक्षत्वयोरन्तरङ्गबहिरङ्गत्वप्रयोजकत्वे इत्यर्थः
दिति भाष्यकार इति शेषः अत एवेति गुणपेक्षयोठोऽ
ङ्गत्वाभावादेवेत्यर्थः त्वद्रीत्येति संज्ञाकृतमपि बहि
त्वमिति रीत्येत्यर्थः तदपीति गुणादूठोऽन्तरङ्ग
मपीत्यर्थः ननु तद्विना गुणाद्यणादेशोन्तरङ्गत्वादिति
नासंगत्या तदपि कथितप्रायमित्यत आह प्राथम्यादिति
त्वमतेऽपि गुणाद्यणादेश इति भाष्यस्योपपत्तये गुणे
पूर्वमूठः प्रवृत्तिरावश्यकी सा कथं स्यादित्यत आह कि
किन्त्वित्यर्थः सिद्धान्ते स्वमत इत्यर्थः यणाबाधितत्वा
लक्ष्यानुरोधात् बाधकाबाधितकृताकृतप्रसंगित्वरूपनित्य
स्याश्रयणादिति भावः परिभाषायामङ्गशब्देनेति परिभा
घटकान्तरङ्गशब्दघटकाङ्गशब्देनेत्यर्थः यथाश्रुतन्तु न

ङ्गत्वाच्च ननु येन विधिस्तदन्तस्य ( १,१,७२ ) इति सूत्रे भाष्ये इको यणचि (६,१,७७) इत्यादावपि तदन्तविधौ स्योन इत्यत्रान्तरङ्गत्वाद्यणो गुणबाधकत्वमिष्यते तन्न सिद्ध्येत्, ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण इत्यन्तरङ्गत्वाद्गुण एव स्यादित्युक्तम् । अत्र कैयटः सिवेर्बाहुलकादौणादिके नप्रत्यये गुणवलोपोठां प्रसङ्गे ऊडपवादत्वाद्वलोपं बाधते गुणं त्वन्तरङ्गत्वाद्बाधते । गुणो ह्यङ्गसम्बन्धिनीमिग्लक्षणां लघ्वीमुपधामार्द्धधातुकं चाश्रयति ऊठ् तु वकारान्तमङ्गमनुनासिकादिं च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः । तत्र कृते यण्गुणौ प्राप्नुत इति एवं च संज्ञापेक्षस्यापि बहिरङ्गत्वं स्पष्टमेवोक्तमिति चेत् न । तदन्तविधावपि बहुपदार्थापेक्षत्वरूपबहिरङ्गत्वस्य गुणे सत्त्वेन तत्र दोषकथनपरभाष्यासङ्गतेः । बहिरङ्गान्तरङ्गशब्दाभ्यां बह्वपेक्षत्वाल्पापेक्षत्वयोः शब्दमर्य्यादयाऽलाभाच्च । तथा सत्यसिद्धं बह्वपेक्षमल्पापेक्ष इत्येव वदेत् । अत एव विप्रतिषेधसूत्रे भाष्ये गुणाद्यणादेशोऽन्तरङ्गत्वादित्यस्य स्योन इत्युदाहरणं न तु गुणादूडन्तरंगत्वादित्युक्तम् । त्वद्रीत्या तदपि वक्तुमुचितम् । प्राथ-

म्यात्तदेव वा वक्तुमुचितम् । मम त्वन्तरङ्गपरिभ
षया तद्बाधनासम्भवात्तन्नोक्तम् । किं च सिद्ध
नित्यत्वात् गुणात् पूर्वमूठ, गुणस्तु ऊठि यणा
धितत्वादनित्यः । ऊनशब्दमाश्रित्येत्यादिभाष्ये
च परिभाषायामंगशब्देन सप्तम्याद्यन्ततयोपात्त
ब्दरूपं निमित्तमेव गृह्यत इति स्पष्टमेवोक्तम् । य
कैयटेन तदन्तविधिपक्षे परत्वाद्गुणः प्राप्नोतीत्य
तत्तूनशब्दमाश्रित्येत्यादिभाष्यासङ्गत्या चिन्त्य
वालि लोपेऽन्तरङ्गपरिभाषा न प्रवर्त्तते इति
युक्तम् । तत्सूत्रे भाष्य एव ब्रश्चादिषु लोपा
सङ्गमाशङ्क्योपदेशसामर्थ्यान्न । न च वृश्चतीत्य
चारितार्थ्यं, बाहिरंगतया संप्रसारणस्यासिद्धत्वेन
मेव तत्प्राप्तेरिति भाष्योक्तेः । यत्तु नलोपस्य
संज्ञायामसिद्धत्वात्पञ्चेत्यत्र न षट् (४,१,१०)
निषेध इति तच्चिन्त्यम् । नलोपस्य हि पदसं
सापेक्षत्वेन बहिरङ्गत्वं वाच्यम् । तच्च न संज्ञा
बहिरङ्गत्वस्यानाश्रयणात् । पञ्चेत्यत्र निषे
स्त्रियां यत् प्राप्नोति तन्नेति व्याख्यानसाम
भूतपूर्वषट्त्वमादायेति बोध्यम् । अत एव क्रति
ग्रहणं चरितार्थम् । वृत्रहभ्यामित्यादौ पदत्वनि

त्तकत्वेऽपि नलोपस्य बहिरङ्गत्वाभावात्। भ्यामः पद संज्ञानिमित्तत्वे ऽपि नलोपस्य तन्निमित्तकत्वाभावात्। परम्परया निमित्तत्वमादाय बहिरङ्गत्वाश्रयणे तु न मानम्। ध्वनितं चेदं नलोपः सुप्(८,२,२)इति सूत्रे भाष्य इति तत्रैव भाष्यप्रदीपोद्योते निरूपितम्।

वाहऊठ्सूत्रेसप्तम्यन्तपदाभावेनज्ञापकतापरभाष्यासङ्गत्यापत्तेः तथाच बहिरङ्गत्वेन विवक्षितं यच्छास्त्रं तद्घटकपदप्रयोज्यविषय-ताश्रयघटकवृत्तिविषयताप्रयोजकसप्तम्यन्तपञ्चम्यन्तान्यतरपद घटितत्वमन्तरङ्गत्वमिति लभ्यते बहिरङ्गत्वेन विवक्षितं वाहऊठ्-सूत्रं तद्घटकाङ्गभपदप्रयोज्यविषयताश्रयोविश्ववाहइति समुदाय-स्तद्घटको-ण्विस्तदन्तस्यैव शशाद्यव्यवहितपूर्वत्वेन भत्वात् तन्नि ष्ठविषयताप्रयोजकंसप्तम्यन्तपदमार्धधातुकपदंतद्घटितंपुगन्तल-घूपधस्येतिसूत्रमितितदन्तरङ्गम् अन्तरङ्गत्वेनविवक्षितंयच्छास्त्रंतद्घ टकसप्तम्यन्तपदप्रयोज्यविषयताश्रयघटितवृत्तिविषयताप्रयोजकप-दघटितत्वं बहिरङ्गत्वम् अन्तरङ्गत्वेन विवक्षितञ्च पुगन्तलघूपधस्य-चेति शास्त्रं तद्घटकसप्तम्यन्तपदमार्धधातुकपदं तत्प्रयोज्य विष-यताश्रयो ण्विस्तद्घटितं विश्ववाहिति तन्निष्ठविषयताप्रयोजकं-भङ्गपदं तद्घटितं वाहऊठ्सूत्रंतद्बहिरङ्गमिति लक्षणसमन्वयः कार्यकालपक्षेऽङ्गभसंज्ञाशास्त्रैकवाक्यतया वाहऊठ्सूत्रस्यापि प्रत्ययेपचीत्यादि सप्तम्यन्तपदघटितत्वमस्त्येवेति न वाच्यम् स्वमते संज्ञाशास्त्राणां विधिशास्त्रैकवाक्यतायाः शब्देन्दुशेखरे खण्डितत्वात् तावतापि समन्वयासम्भवाच्च परमिदं जातासिद्धत्व-प्रयोजकान्तरङ्गबहिरङ्गभावस्थल एव समकालप्राप्तासिद्धत्वस्थले तु

उभयत्र सप्तम्याद्यन्ततयोपात्तमेवाङ्गपदेन गृह्यत इति पूर्वमुक्त
गौधेर इत्यादावेयादेशादेर्वलिलोपापेक्षयाऽसिद्धत्वाभावाय
क्नोपेरिति निर्देशेन वलिलोपेऽन्तरङ्गपरिभाषा न प्रवर्तत
ज्ञाप्यतेऽन्यथा यलोपापेक्षया णिज्निमित्तकपुकोबहिरङ्गत्वेन
द्धत्वाद्यलोपाप्राप्त्या निर्देशासङ्गत्यापत्तेरितिप्राचीनोक्तं खण्ड
वलिलोपइत्यादिना अत्र यद्वक्तव्यन्तदुक्तम् वृश्चतीत्यादावित्
इदं यथा नोपपन्नं तथोक्तम्० पञ्चेत्यत्र टापोऽभावाय षट्सं
वक्तव्या तदर्थञ्च कार्यकालपक्षे षट्संज्ञादृष्ट्या नलोपासिद्ध
मवश्यंवक्तव्यं तच्च संज्ञाकृतबहिरङ्गत्व एवोपपद्यतइति संज्ञा
तमपि बहिरङ्गत्वं वक्तव्य मित्याशंक्य समाधत्ते यत्विया
पञ्चेत्यत्र निषेधास्त्विति ननु नलोपः सुवित्यादिना षट्संज्ञा
नलोपासिद्धत्वं किन्न स्यादितिचेन्न तत्र संज्ञापदेन
ज्ञाया एवग्रहणस्य तत्सूत्रस्थभाष्यतोलाभात् तत्राहि दत्त
दण्डिदत्तावित्यादौ नलोपस्य धिसंज्ञादृष्ट्याऽसिद्धत्वेन
भावात् पूर्वनिपातानियमंफलमुक्त्वा यदाधित्वन्तदापूर्वनि
तत्यदापूर्वनिपातस्तदा नलोपे घित्वमित्यन्योन्याश्रयमा
संज्ञाग्रहणसामर्थ्याद्यस्य पूर्वपदत्वे घित्वं भावि तस्य पूर्वनि
इत्यर्थेन समाहितम् अन्यस्या अपि संज्ञायाग्रहणे षट्संज्ञा
नलोपासिद्धत्वेन सार्थक्यसम्भवात् सामर्थ्योक्तेरसङ्गत्या
द्वन्द्वेघिरित्यस्यैतादृशार्थे फलं द्युलिहौ ग्रामणिराजानाकि
बोध्यम्। व्याख्यानसामर्थ्येनेति । अन्यथा षडादिभ्यष्टापो
म्भवात् ङीप् न स्यादित्येव वदेदितिभावः वस्तुतस्तु व्या

सामर्थ्येनेत्यस्य व्याख्यानबलेनेत्यर्थः, भूतपूर्वषट्त्वमादायेत्यस्य लुगर्थ पूर्वं भूतं जातं यत् षट्त्वं संकेतसम्बन्धेन षट्पदवत्त्वरूपं तत् स्थानिवद्भावेनादायेत्यर्थः यथाश्रुतन्तु न युक्तं प्रियपञ्चाद्रौपदीत्यत्र, डापोऽभावाय तादृशव्याख्यानस्यावश्यकत्वेन सामर्थ्यस्योपक्षीणत्वात् अतएवेति संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणादेवेत्यर्थः। नाजानन्तर्य्यपरिभाषातु नास्त्येवेतिभावः वस्तुतस्तु नाजानन्तर्य्यपरिभाषाया अभावेऽपि तत्स्थले बहिरङ्गपरिभाषाया अनित्यत्वाश्रयणेन नेदं संज्ञाकृतबहिरङ्गत्वानाश्रयणे लिङ्गं वृत्रहभ्यां हभ्यामित्यादावन्तर्भूतनिमित्तत्वरूपान्तरङ्गत्वस्यापिसत्त्वाच्च ध्वनितमिति. तत्र हि सन्निपातपरिभाषया वृत्रहभ्यामित्यादौ तुगभावमुपपाद्य कृत्तुग्ग्रहणं प्रत्याख्यातं नत्वन्तरङ्गपरिभाषया, वाक्यार्थबोधे पदार्थज्ञानस्य हेतुत्वादन्तरङ्गादिपदं व्याख्याय वाक्यार्थमाह अन्तरङ्गइत्यादि जातासिद्धत्वसमकालिकासिद्धत्वयोः फले अन्ते निरूपयिष्येते ननु वृश्चतीत्यादौ भविष्यत्प्राप्तिकस्यापि सम्प्रसारणस्य वलोपदृष्ट्याऽसिद्धत्वोक्तिरसंगता स्यादित्यत आह व्रश्चादिष्विति एतेनेति अर्थद्वयस्याप्यनयैव संग्रहेणेत्यर्थः एनामिति असिद्धं बहिरङ्गमित्येतत्परिभाषामित्यर्थः तस्या अन्तरङ्गं बहिरङ्गाद्बलीय इत्यस्या इत्यर्थः लिंगामिति उपस्थितिप्रयोजकं चिह्नमित्यर्थः। अन्तरङ्गशास्त्रं गत्वा प्रतिपादयति, बहिरङ्गशास्त्रं नास्तीति त्वं जानीहीति यावत्, अन्तरङ्गशास्त्रत्वस्य लिंगत्वे फलमाह त्रिपाद्यां न प्रवर्तते इति अन्तरङ्गशास्त्रे त्रिपादीस्थे न प्रवर्त्तते इत्यर्थः

अन्तरङ्गे कर्त्तव्ये जातं तत्कालप्राप्तिकं बहिरङ्गमसिद्धमित्यर्थः । वृश्चत्यादिषु पदसंस्कारप समानकालत्वमेव द्वयोरिति बोध्यम् । एतेनान्त बहिरङ्गं दुर्बलीय इति परिभाषान्तरमित्यपास्तम् एनामाश्रित्य विप्रतिषेधसूत्रे भाष्ये तस्याः प्रत्या ख्यानाच्च । अन्तरङ्गशास्त्रत्वमस्या लिङ्गम् ।

इयं च त्रिपाद्यां न प्रवर्त्तते त्रिपाद्या असिद्ध त्वात् । अस्याश्च वाह ऊठसूत्रस्थमूठ्ग्रहणं ज्ञापक मित्येषा सपादसप्ताध्यायीस्था अन्यथा सं सारणमात्रविधानेन लघूपधगुणे वृद्धिरेचि(६,१,८८ इति वृद्धौ विश्वौह इत्यादिसिद्धेस्तद्वैयर्थ्यं स्पष्टमे

असिद्धत्वादिति प्रतिपाद्याभावे प्रतिपादनासम्भव इति भा बहिरङ्गशास्त्रत्वं तु न लिंगं तस्य जातत्वे कर्तव्यत्वाभावेन प्रतिप त्त्यवैयर्थ्यात्, तस्य त्रिपादीस्थत्वेऽपि अन्तरङ्गस्य सापादिक आगच्छ हेपयोद् आगच्छ हेपयोद इत्येतत् सिद्ध्यर्थं परिभाष प्रवृत्तेरिष्टत्वाच्च, तथाहि अटतीत्यट् पयस्पट् पयोट् तत्र सम्बोध वाक्यनिमित्तकः प्लुतादूराद्धूतेचत्येन नाटोऽकारस्य पयोद पयदइतिस्थिते संयोगात्पूर्वाकारस्य गुरोः,गुरोरनृत इति प्लु वाक्यनिमित्तको बहिरङ्गस्त्रैपादिकः अन्तरङ्गात्वदृष्ट्याऽसिद्ध तोरोरप्लुतादप्लुतइतिसूत्रविहितोत्वसिद्धिः,बहिरङ्गशास्त्रत्व

सत्यां ह्येतस्यां बहिरंगसम्प्रसारणस्यासिद्धत्वाल्लघूपधगुणो न स्यात्। न च पुगन्त (७,३,८६) इति सूत्रे निमित्तमिको विशेषणमत एव भिनत्तीत्यादौ न गुणः एवं च नाजानन्तर्ये (प० ५१) इति निषेधात्कथं परिभाषाप्रवृत्तिरिति वाच्यम् प्रत्ययस्यांगांश उत्थिताकाङ्क्षत्वेन तत्रैवान्वयात्। पुगन्तेत्यादौ कर्मधारयाश्रयणेन प्रत्ययपाराङ्गावयवलघूपधारूपेको गुण इतीको गुणवृद्धी (१,१,३) इति सूत्रभाष्यसम्मतेऽर्थे भिनत्तीत्यादावदोषाच्च। अकारान्तोपसर्गेऽनकारान्ते चोपपदे वहेर्वाहेर्वा ण्विविचावनभिधानान्न स्त एव। वार्य्यूहेत्यादि तूहतेः क्विपि बोध्यम्। धातूनामनेकार्थत्वान्नार्थासंगतिः। प्रौहे इत्याद्यत्वाध्येव वृद्धेरप्राप्तेः अस्योहस्यानर्थक्यास्यात् न प्रादूहोढो (६,१,८९,३, वा०) इत्यपि प्रवृत्तिः। न च कार्य्यकालपक्षे त्रिपाद्यामेतत्प्रवृत्तिर्दुर्वारेति

लिङ्गत्वेतु प्लुतस्य बहिरङ्गस्य त्रिपादीस्थत्वेन सापादिकपरिभाषात्यसिद्धत्वेनाभावादसिद्धत्वप्रतिपादनासम्भवेनोत्त्वानापत्तेःपूर्वत्रासिद्धमित्यनेन तु नासिद्धत्वसिद्धिरिहि सुश्रोता अत्रेत्यादिसकल

लक्ष्यप्राप्तस्य तस्याप्लुतादप्लुतइत्येतत्सामर्थ्येन बाधाि
तत्रैव शब्देन्दुशेखरे उक्तम् त्रिपाद्यामप्रवृत्तेरेवाभिषिणो
षिणोति, राज्ञः, सर्वेषामित्यादौ णत्वश्चुत्वषत्वेषुत्रिपादि
अन्तरङ्गेषु कर्त्तव्येषु षत्वाल्लोपसुडादीनां बहिरङ्गाणां
ऽसिद्धत्वमूनन्वेतस्या अष्टाध्याय्यां पाठाभावेन कथमेतद
त्रिपाद्या असिद्धत्वमित्याह अस्याश्चेत्यादि, परिभाषाया ज्ञा
बोध्यरूपत्वात् बोध्यस्य बोधकदेशस्थत्वौचित्यादितिभावः
धगुणइति लोकसिद्धनान्तरङ्गं बहिरङ्गाद्बलीय इति न्यायेन
पधगुणात्पूर्वमाद्गुणे विश्वौहोसिद्धिरितिन वाच्यं तस्या
स्यामेवान्तर्भावेनास्यामवस्थायामभावात् लघूपधगुणस्य
न्तरङ्गत्वाच्च नच ऊडिदंपद्याद्यप्पुम्रैद्युभ्यइतिसूत्रेण
इत्यादौ स्वरो न स्यादूठोऽग्रहण इति ज्ञापकत्वासिद्धि
वाच्यम् अत्र केचित् ऊठ्युपधाग्रहणं कर्त्तव्यमिति तत
वार्त्तिकादत्र स्वरस्यानिष्टत्वात् प्रतिपदोक्तपरिभाषासहकृ
क्तवार्त्तिकस्योपधापदमुच्चार्य्य विहितस्यैवोठो ग्रहणं कर्तव्य
स्यर्थात् कौमुद्यां प्रष्ठौह इति तत्सूत्रोदाहरणन्तु वृत्तिकारानुसा
वस्तुतोऽयुक्तमेव जूरा तूर्त्यादेरेव तदुदाहरणात् । अत एव
शेखरेच ज्ञापकत्वविचारावसरे एतद्दूषणन्नोपन्यस्तमित्या
उपधाग्रहणमन्त्यप्रतिषेधार्थमन्त्यस्य माभूत् अक्षद्युवे इतिभा
णान्त्यव्यावृत्तिरेवोपधाग्रहणस्य प्रयोजनं लभ्यते अप्रतिप
विश्वौह इत्यस्यापि व्यावर्त्यत्वे तत्साधारण्येनानुपधाभूत
वृत्यर्थमित्येव वदेत्,शेखरे ज्ञापकविचारसमये एतद्दोषानुप

समात्रेण वृत्तौ कौमुद्याञ्च प्रष्ठौह इत्युपन्यासस्यायुक्तत्वबोधनानौचित्यात् उद्देश्यविधेयभावसम्बन्धेनान्विताथैकपदद्वयघटितसमुदायोपादाने विभाषादिक्समासे, तत्पुरुषे तुल्यार्थतृतीयेत्यादावेव प्रतिपदोक्तपरिभाषाया ग्रन्थकृता प्रवर्त्तनेन तत्रैव प्रवृत्तेरौचित्येनानित्यत्वेन च।भेदेनोपधान्वितो ठ्वोधकोपधापदोठ्पदघटित ऊठ्युपधेतिसमुदाये तस्याप्रवृत्तेः प्रष्ठौहइत्यादाविष्ट एव स्वर इति परे, तर्हिज्ञापकत्वं कथमिति चेदुच्यते स्वराविधायके, वाहऊठित्यत्र च, ह्रस्व एव कर्त्तव्ये दीर्घस्य विधानं ज्ञापकमेव ताद्धि · एत्येधत्यूठ्सु इत्येतत्प्रवृत्त्यर्थमिदानीं लघूपधगुणे वृद्धिरेचीत्येव सिद्धम् ज्ञापितायाश्चास्यां वाहउठित्यस्यासिद्धत्वेन लघूपधगुणाप्राप्तौ वृद्धिरेचीत्यस्याप्रवृत्तौ वृद्ध्यनापत्या दीर्घग्रहणमेत्येधत्यूठ्स्वित्येतत्प्रवृत्तिसम्पादनेन चरितार्थं न च तत्रापि ह्रस्वकरणेन वृद्धेस्सिद्धौ दीर्घग्रहणं न स्वांशे चरितार्थमिति वाच्यम् अवतीत्यूः जनस्य ऊः जनौरित्यादौ ज्वरत्वरेति दीर्घ ऊठि वृद्ध्यनापत्तेः तत्रापि ह्रस्वकरणे जूरावित्यादौ दीर्घश्रवणानापत्तेः । नच स्वराविधायके ह्रस्वकरणे जूरेत्यादौ स्वरानापत्तेर्नेदीर्घग्रहणं ज्ञापकमितिवाच्यम् स्वराविधायके वार्तिके च ठित्करणेनादोषात् ननु स्वराविधौ तद्वार्त्तिकेच ठिदितिकरणे पदद्वय।धिक्येन वहुव्रीह्याश्रयणेन च गौरवमितिचेदत्र चन्द्रिकाकाराः स्वरविधायके वार्तिकेच ऊठित्यत्र दीर्घेणोकारोऽपि प्रश्लिष्यते

ऊठ्साहचर्य्याच्च स वकारस्थानिक उपधाभूतो धातुस्थो गृह्यते तेन सोमसुतः अक्षद्युवा तस्थुषः यून इत्यादौ न स्वरापत्तिरित्यर्थश्च सम्प्रसारणमात्रविधानेन सिद्धे ऊठ्ग्रहणं ज्ञापक मित्याहुः अस्तु वा ज्ञापकतापरभाष्यप्रामाण्यात् प्रतिपदोक्तपरिभाषाश्रयणाच्च स्वराऽभावएवेष्टः प्रष्ठौह इति स्वरोदाहरणे कौमुदीकारस्य प्रमाद एवेति यथान्यासेनैव ऊठ्ग्रहणं ज्ञापकमिति परे, ह्रस्वऊठ् एवविधीयतां स्वरेऽपि ह्रस्व एव ज्वरंत्वर, च्छ्वोः शूडितिसूत्रद्वयेनापि ह्रस्व एव विधातव्यः वृद्धावपि तथैव जूरावित्यादौ दीर्घश्रवणन्तु उआठित्यादेशद्वयविधानपूर्वकसवर्णदीर्घकरणेनोपपन्नं भविष्यतीतिज्ञापितेऽपि दीर्घोच्चारणंस्य न्चास्तार्थमिति वाच्यम् आवयतीत्यौरित्यादौ ण्यन्तादवेः क्विपि णिलोपे आङ्गत्वात्सवर्णदीर्घं बाधित्वा वृद्धौयणि वौरित्यापत्त्या ऽऽदेशद्वयाविधानाऽसम्भवादितिदिक्, बहिरङ्गसम्प्रसारणाऽसिद्धत्वादिति ननु सम्प्रसारणस्य बहिरङ्गत्वेऽपि तस्य पूर्वरूपेणाऽपहारात् पूर्वरूपस्य च बहिरङ्गत्वाऽभावाद्गुणो निराबाध इतिचेदत्रकेचित् पूर्वरूपे सम्प्रसारणतुल्यत्वं हलःइति सूत्राज्ज्ञाप्यते अन्यथा हूतमित्यादौ पूर्वरूपस्या सत्त्वेन तस्य वैयर्थ्यापत्तेः स्थानिवद्भावेन तु न निर्वाहः सम्प्रसारणत्वस्याल्मात्रवृत्तित्वात् स्थान्येकदेशवृत्तित्वात् अचः परस्मिन्नित्यपि न स्वविधित्वात् दीर्घविधौ तन्निषेधात् इत्थंच सम्प्रसारणनिष्ठं बहिरङ्गत्वमपि पूर्वरूपस्येति न दोषः

अतएव ज्ञापकतापरभाष्यमप्युपपद्यते जागृढ इत्यादौ ग्रहेर्य ङ्लुगन्तात् तस्युत्तरखण्डे सम्प्रसारणपूर्वरूपाभ्यां ऋदुपधत्वेऽपि ऋदुपधत्वप्रयुक्तोयङ्लुग्निमित्तकोरिगागमो न सम्प्रसारणस्थानिकपूर्वरूपस्याऽपि बहिरङ्गत्वातिदेशेन रिगागमापेक्षयाऽसिद्धत्वादित्याहुः परेतु सम्प्रसारणाच्चेतिसूत्रेण सम्प्रसारणात्परस्याऽचोनिवृत्तिमात्रमुच्यते पूर्वपरयोर्निवृत्तिं कृत्वा ऽपूर्वस्यैकस्यानयने गौरवात् तथाच सम्प्रसारणमेववर्त्तते इति सर्वमुपपन्नं हलश्चेति सूत्रञ्च चरितार्थं, नच जागृढ इत्यादौ परनिवृत्तिरूपादेशस्य स्थानिवत्त्वेन ऋकारस्य यणापत्तिरिति वाच्यम् तस्यानादेशत्वात् सम्प्रसारणस्यैव पूर्वरूपात्मकस्यादेशत्वात् नन्वेवं राममित्यादावुक्तयुक्त्या अमिपूर्व इति पूर्वरूपेणापि परस्याकारस्यनिवृत्तौ मकारात्मके सुपि सुपिचेतिदीर्घस्स्यादितिचेन्न मकारस्य सुप्त्वाऽभावात् । अर्थाधिकाविकारेणैकदेशविकृतन्यायाऽप्रवृत्तेः मकारस्यानादेशत्वेन स्थानिवद्भावाप्रवृत्तेश्च नच द्वयोः स्थाने एकादेशेन द्वयोर्निवृत्तिर पूर्वस्य स्थितिर्लभ्यते न परस्य निवृत्तिरिति वाच्यम् एकस्य सत्त्वेऽपि द्वित्वावच्छिन्नप्रतियोगिताकाऽभावस्य सत्त्वात् घटसत्त्वे घटपटौ नस्त इतिवत्, अन्यसहायेन स्थितस्यान्यासहायेन स्थितावपूर्वत्वोपपत्तेश्च, निमित्तमिकोविशेषणमिति । अङ्गविशेषणत्वे हि सार्वधातुकाद्यव्यवहिताङ्गावयवस्येकोगुणइत्यर्थे भिनत्तीत्यादौ भिनद्गति इतिस्थिते

सार्वधातुकाऽव्यवहितपूर्वाङ्गं भिनत्ति तदवयवस्येकारस्य
गुणापत्ति रिकोविशेषणेतु येननाव्यवधानन्यायेन भेत्तव्या
वेकवर्णव्यवधाने चरितार्थत्वादनेकव्यवधानादत्र न गुण
इति भावः । एवञ्चेति आङ्गनिष्ठं यत्प्रत्ययानिरूपितमान-
न्तर्यं तन्निमित्तकत्वेनेत्यर्थः वस्तुतस्तु नेदं युक्तं सामर्थ्या
देकवर्णव्यवहितस्येको गुणविधानेनाङ्गनिष्ठान्यानिरूपित
व्यवहितत्वरूपाजानन्तर्यनिमित्तकत्वाऽभावेन नाजानन्तर्य
परिभाषाया अप्रवृत्तेः तत्राप्येकवर्णव्यवधानसहने माना-
भावात् । प्रत्ययस्याङ्गांशे उत्थिताकांक्षत्वेनेति इदन्न युक्तं
संकेतसम्बन्धेन प्रत्ययपदवत्त्वस्यैव प्रत्ययपदार्थत्वेन घटत्वा
दिवदुत्थिताकांक्षत्वाभावात्, पुत्रादिपदार्थे आकांक्षोत्थाप
जन्यत्वादिवदत्र ससम्बन्धिकस्य कस्य चिदर्थस्याभावा
पुगन्तेत्यादौ कर्म्मधारयाश्रयणेनेति, लघ्वीचासावुपधा
लघूपधा पुकि अन्तः पुगन्तः पुगन्तश्च लघूपधा
पुगन्तलघूपधमिति समाहारस्तस्य पुगन्तलघूपधस्येत
स्याश्रयणेनेत्यर्थः अदोषादिति इकउपधात्वाभावा
दितिभावः । ननूठ् ग्रहणमज्ञापकं अकारान्तोपसर्गे प्रौह इत्य
लघूपधगुणेऽपि वृद्धिरेचीत्येतद्बाधित्वा एङिपररूपमितिपररूपे
इष्टवृद्धेरसिद्ध्यापत्तेः अनकारान्ते वायूह इत्यादौ लघूपधगु
उकारश्रवणानापत्तेश्चेत्यत आह " अकारान्तोपसर्गे इत्यादि
वहेर्वाहेर्वेति वहेर्णिवः, णिजन्तात् वाहेर्वाजित्यर्थः
णिजन्ताद्वाहेरिति न यक्तं णिजन्ताद्वाजिति प्रतीकमुपादा

वाच्यम्। पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्य तन्निरूपितबहिरङ्गत्वाभावात्तया तस्यासिद्धत्वप्रतिपादनासम्भवात्। न चानया पूर्वस्यासिद्धत्वात्तदभावेन तंप्रति परासिद्धत्वं पूर्वत्र [ ८,२,१ ] इत्यनेन वक्तुमशक्यमितिवाच्यम्। एवं हि

---

अनेन लोके विश्ववाट्शब्दस्य साधुत्वमात्रमुच्यते नत्वस्योठ्अङ्गभसंज्ञाक्षिप्तप्रत्ययेन वाहोविशेषणात् णिलोपस्य स्थानिवत्त्वेन व्यवधानादितिशब्देन्दुशेखरोक्तेन विरोधादि तिचेन्न आक्षिप्तस्यशाब्दबोधेभानाभावात् कार्यकालपक्षेऽपि संज्ञाशास्त्राणामेकवाक्यताया अभावाच्च तद्ग्रन्थस्य खण्डनीयत्वात् वाहप्रयत्न एतदभिप्रायेणैतद्ग्रन्थस्य सत्त्वाच्च, नच कार्यकालपक्ष इति पूर्वं प्रति परिभाषां प्रति अन्तरङ्ग परिभाषां प्रतीत्यर्थः परस्य त्रिपादीस्थान्तरङ्गशास्त्रस्य पूर्वस्य सापादिकबहिरङ्गस्येति कस्यचिद्व्याख्यानन्तु अविचारितरमणीयम् यतोऽस्यग्रन्थस्यैतादृशार्थकत्वे परिभाषादृष्ट्यात्रैपादिकान्तरङ्गस्यासिद्धत्वमात्रप्रतिपादनेन परिभाषायास्तत्राप्रवृत्त्युपपत्तौ पूर्वस्य तन्निरुपितबहिरङ्गत्वाभावादित्येतत्पर्य्यन्तानुधावनस्य वैयर्थ्यापत्तेः त्रिपाद्या असिद्धत्वहेतुनैव त्रिपाद्यामप्रवृत्तिमुक्त्वा तद्धेतुनैव तत्राप्रवृत्त्युक्तेः पुनरुक्तत्वापत्तेश्च उत्तरस्य पक्षद्वयसाधारण्यात् शङ्कादले कार्यकाल इति विशेषोक्तेर संग-

त्यापत्तेश्च त्रिपाद्य सिद्धत्वहेतोरस्यामिव परिभाषान्तरेऽपि
त्वात् कार्यकालेऽन्यासां प्रवृत्तिर्भवत्यस्या नेति वैषम्य
भावाच्च तस्मादयमाशयः यथोद्देशे परिभाषाणां ज्ञापक
त्वेन सापादिकत्वात् त्रिपाद्यामसिद्धत्वेनाप्रवृत्तावपि कार्य
विधिदेशस्थत्वेन परिभाषाणां विधिशास्त्रस्य च
देशस्थत्वेनपूर्वत्रासिद्धमित्यस्या प्रवृत्त्याऽसिद्धत्वाभावेन
द्यां प्रवृत्तिरव्याहतेत्यत आह कार्यकाले इति
परिभाषां प्रत्यन्तरङ्गस्यासिद्धत्वाभावेऽपि सापादिक
प्रति त्रैपादिकान्तरङ्गस्य पूर्वत्रासिद्धमित्यनेनासिद्धत्वा
ङ्गाभावे तन्निरूपितबहिरङ्गत्वस्याप्यभावः सत्य
बहिरङ्गं सतिच बहिरङ्गेऽन्तरङ्गमितिभाष्यात्
परस्परसापेक्षान्तरङ्गत्वबहिरङ्गत्वयोरभावेन परि
अप्रवृत्तिरिति ' न च पूर्वत्रासिद्धमित्यतः प्रागेव परि
त्रैपादिकान्तरङ्गे प्रवर्त्ततां तदानीमन्तरङ्गबहिरङ्गयोस्स
नच पश्चात्पूर्वत्रासिद्धमित्यस्य प्रवृत्त्याऽपि परिभाषा
तस्याप्रामाण्यं स्यादिति वाच्यम् । अन्तरङ्गैकवाक्य
पूर्वत्रासिद्धमित्यस्याप्यन्तरङ्गत्वेन परिभाषया तद्
पूर्वस्यासिद्धत्वेन पूर्वत्रासिद्धमित्यस्य पूर्वशास्त्रज्ञाना
तन्निरूपितासिद्धत्वमन्तरङ्गस्य नस्यादिति परिभाषा
तस्या प्रामाण्यप्रसक्ते रित्याह नचा नयेत्यादि वाच्यमि
एवं हीति पूर्वापरीभावे नियामकाभावे हीत्यर्थः प्रत्य
नेति प्रत्यक्षप्रमाणस्य सर्वतोबलवत्त्वादितिभावः गुरुवर

निगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः । किं च पूर्वत्रे-
स्य प्रत्यक्षत्वेन तेनानुमानिक्या अस्या बाध एवो-
तः । अतः कार्य्यकालपक्षेऽपि त्रिपाद्यामस्या अनुप-
थतिरेव । अत एव कार्य्यकालपक्षमेवोपक्रम्योक्त-
क्तीरुक्त्वाऽयुक्तोऽयं परिहारो न वा वहिरङ्गलक्षणत्वा-
तीत्युक्तं विसर्जनीयसूत्रे भाष्ये सिद्धान्तिना
पादीस्थेऽन्तरङ्गे कर्त्तव्येऽयं परिहारो न युक्त इति
दर्थः । किं तु वचनमेवारब्धव्यमिति तदाशयः ।

---

त्वणस्तु ग्रन्थकारोक्तयुक्तौ सर्वथाऽपरितुष्यन्तोऽन्यां व्यवस्थां
र्णयान्ति तथाहि परिभाषा द्विविधा शास्त्रत्वसंपादिका
ास्त्रत्वावच्छिन्नोद्देश्यिका च तत्र यया विना अप्रामा-
यज्ञानानास्कन्दितसाधुत्वप्रकारकबोधजनकत्वरूपशास्त्रत्वमेव
तां प्रति परं शास्त्रमसिद्धमित्यर्थकपूर्वत्रासिद्ध मित्य
नेन त्रैपादिकस्यासिद्धत्वाभावेन सा त्रिपाद्यां प्रवर्तते यथा
स्मिन्नित्यादि यया विनापि उक्तशास्त्रत्व मस्ति तां
ति निरुक्तार्थकपूर्वत्रासिद्धमित्यनेनासिद्धत्वात् सा त्रिपाद्यां
प्रवर्तते यथा असिद्धंवाहिरङ्गमिति सर्व मुपपन्नम् । अस्या-
ाध इति परिभाषातः पूर्वं प्रवृत्तेरिति यावत्, किन्तु वचन
मेवारब्धव्यमिति सुध्युपास्य इत्यत्र संयोगान्तलोपाभावाय
यणः प्रतिषेधो वक्तव्यः चक्रयत्रेत्यत्र संयोगादिलोपार्थं

निग । इत्यत्राचिविभाषेतिलत्वार्थं ब्रीहिवापाणी
णत्वार्थं तस्य दोषः संयोगादिलोपलत्वणत्वेषु,
पत्यं कार्तिरित्यादौ रदाभ्यामितिनत्वाभावाय निष्ठानत्व
नृमतोऽपत्यं नार्म्मतमित्यादौ मादुपधाया इति वत्वाप
नृमतोवप्रतिषेधः नार्कूटः नार्पत्य इत्यत्र विसर्ग
विसर्जनीयोऽनुत्तरपदे इत्यादिवचनानि कर्त्तव्यानि
ननु त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्तिमभ्युपगच्छतां
मन्तरङ्गपरिभाषयैव सर्वदोषोपशमात् वचनानि
वक्तव्यानीति लाघवात् त्रिपाद्यां प्रवृत्ति रेवास्तु अतिप्रसङ्ग
यथोद्देशपक्षाश्रयणेन परिहरणीय इति चेन्न
युक्तिसिद्धस्य बाधायोगात् अत एव व्यक्तिशक्ति
पेक्षया जातिशक्तिपक्षे सत्यपि लाघवे व्यक्ति
स्वीकृता तार्किकैः, किञ्च ममापि संयोगान्त
झलोपकर्षणेन यणः प्रतिषेधवचनाभावएव चक्रचत्रेत्यत्र
पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेनैव वहिरङ्गत्वं वाच्यं
कैदित्यत्र तन्नास्तीति तदर्थं संयोगादिलोपग्रहणम्
तवापि तत्र ईं इण्धातोर्लङि तिङ्श्चेत्यकाचि
दितिरूपम् तत्राकचस्तन्मध्यपतितत्वाभावेन तन्मध्य
न्यायाप्रवृत्या तिङन्तद्यादित्वाभावेन अकैदि
पदत्वाभावात्, तक्षिधातोर्ण्यन्तात् क्विपि णिलोपे सुपि
संयोगान्तलोपे तगिति रूपं संयोगादिलोपस्तु
लोपस्य स्थानिवद्भावात् तत्र पूर्वत्रासिद्धीये न

इत्यस्याप्रवृत्त्यर्थं च संयोगादिलोपग्रहणं णिलोपस्य बहिरङ्ग-
त्वाभावेन न परिभाषया सिद्धिः प्लायते इत्यत्र प्र अयते
इति स्थिते पदद्वयापेक्षेण उपसर्गस्यायताविति सूत्रेण लत्वार्थं
आवश्यकस्य दीर्घरूपैकादेशस्थानिवत्त्वस्य प्रतिबन्धकीभूत
पूर्वत्रासिद्धीयमस्थानिवदितिवचनस्याप्रवृत्तये लत्वग्रहणं
चाप्यावश्यकमेव परिभाषयाच् ननिर्ह्रासोर्दीर्घस्यान्त-
रङ्गत्वात् प्राहिणोदित्यत्र पूर्वं धातोस्साधनेनैव योगस्य सिद्धा-
न्ततया पश्चादुपसर्गयोगे अन्तरङ्गत्वाद्गुणे हिनुशब्दनिमि-
त्तकाहिनुमीनेति णत्वप्रवृत्तये गुणस्थानिवद्भावस्यैव शरणीकर्त्त-
व्यतया णत्वग्रहणमपि तथावश्यकं णत्वस्यैव बहिरङ्गतया
तत्राभीष्टसिद्धिकरी परिभाषा, ऋधातोः क्तप्रत्यये निष्पन्नादृत
शब्दादाचारक्विबन्तात् लङि आर्तदित्यत्र निष्ठानत्वाभावाय
वार्तिकाश्रयणमेव तथापि, न बहिरङ्गपरिभाष्य कल्याणाय
वृद्धेरबहिरङ्गत्वात्, एवं ऋशब्दान्मतुबन्तादाचारक्विबन्तात् लङि
आर्म्मतादित्यत्र वत्वाभावार्थं वचनारम्भ एव तथापि युक्तः
वृद्धेरन्तरङ्गत्वात् ऋशब्दप्रकृतिकक्लपप्रत्ययान्तात् ऋकल्प
शब्दाल्लङि आर्कल्पयदित्यर्थं विसर्जनीयोऽनुत्तरपदे
इत्यप्यावश्यकमेवेत्यलं भाष्यसम्मतयुक्त्युल्लंघनेन, प्रसङ्गात्
विसर्जनीयोऽनुत्तरपदे इत्यस्यार्थो विचार्यते उत्तरपदशब्देन
वृत्तिचरमावयवो गृह्यते इति रामः करोति नार्कलिपरित्यादौ
नातिव्याप्त्यव्याप्ती दास्याः पुत्रइत्यादौ विसर्गोपपत्तये
त्वावच्छिन्नविधेयताश्रयरेफस्य वृत्तिचरमावयवे परे न विसर्ग

इत्यर्थेऽपि गीःपतिरित्यादौ दोष इति न वाच्यम्
चरमावयवत्वानिमित्तकोयोरेफस्तस्य न विसर्ग
गीःपतिरित्यादौ च न रेफस्तथाभूतः निमित्त
यथाकथञ्चिदेव तेन नार्कूटः नार्कलिपरित्यादौ न
रेफनिमित्तवृद्धिनिमित्तप्रातिपदिकावयवकूटकल्पादेरपि अ
प्त्या वृद्धिनिमित्ततद्वारा रेफनिमित्तत्वात् नचाप्या
तीत्यादौ दोषः वृत्तिचरमावयवस्थानेऽर्थवतोनिव
रायइत्यादावपि सुरूपार्थवन्निमित्तकत्वेन रेफस्य विस
पत्तिरिति वाच्यं खर्वैशिष्ट्यो विसर्गोऽसाधुरित्यर्थात्
स्वघटितार्थवदव्यवहितपूर्वस्थानिकरेफस्थानिकत्वस्वनि
त्वोभयसम्बन्धेन उपार्छेति परमर्त्त इत्यादौ
कारादिस्तद्घटितोऽर्थवान् ऋच्छादिस्तदव्यवहितपूर्व
स्तत्स्थानिकोवृद्ध्यादिद्वारा रेफ स्तत्स्थानिकत्वं स्वनि
दिनिमित्तकत्वं च जायमानविसर्गे स्यादिति तस्या
त्वोपपत्तिः नच दास्याः पुत्र इत्यादौ न्दॄः पाहीत्यादि
विसर्गस्यासाधुत्वापत्तिः पकाररूपखरः वैशिष्ट्यानि
स्वनिमित्तकत्वमस्तिस्वघटितो ऽर्थवान् पुत्रशब्दः पारि
तदव्यवहितपूर्वः सकारो नकारश्च तत्स्थानिकरेफस्थानि
मप्यस्ति विसर्गस्येति खर्वैशिष्ट्यादितिवाच्यम् रेफे रत्वा
त्वविधेयताश्रयत्वस्यापि निवेशनाददोषात् वस्तुतस्तु
निमित्ततानिरूपितरत्वावच्छिन्नविधेयताश्रयत्व स्वनि
पूर्वस्थानिकत्वोभयसम्बन्धेन यत्किञ्चिद्विशिष्टस्य रे

अत एव निगाल्यत इत्यादौ ल्त्वार्थं तस्य दोष इति वचनमेवारब्धम्। अन्यथान्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे तद्वैयर्थ्यं स्पष्टमेव। येऽपि लक्ष्यानुरोधादानुमानिक्याप्यन्तरङ्गपरिभाषया प्रत्यक्षसिद्धस्य पूर्वत्वेत्यस्य बाधं वदन्ति तेऽपि लक्षणैकचक्षुर्भिर्नादर्तव्या इति दिक्।

अत एव ओमाङोश्च [ ६, १, १५ ] इत्याङ्ग्रहण चरितार्थम्। तद्धि खट्वा आ ऊढेत्यत्र परमपि सवर्णदीर्घं बाधित्वा अन्तरङ्गत्वाद्गुणे कृते वृद्धिप्राप्तौ पररूपार्थम्। साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोगे पश्चात् खट्वाशब्दस्य समुदायेन योगाद्गुणस्यान्तरङ्गत्वमिति सम्प्रसारणाच्च [६, १, १०८ ] इति सूत्रे भाष्ये स्पष्टम्। एहीत्यनुकरणस्य शिवादिशब्दसम्बन्धे तु नास्य प्रवृत्तिर्ज्ञापकपरसम्प्रसारणाच्चेति सूत्रस्थभाष्यप्रामाण्येनानित्यं प्रकृतिवदनुकरणमित्यतिदेशमादाय लब्धाङ्गत्वे एतदप्रवृत्तेः।

---

विसर्गः उपार्छतीत्यादौ ऋच्छमादाय परमर्त्तइत्यादौ ऋकारमादाय समन्वयः रत्वावच्छिन्नविधेयतानिवेशान्न वृः हीत्यादौ दोषः निमित्ततानिवेशात् गीः पतिरित्यादौ न

दोषः उद्देश्यदलभावेष्टविषयतामात्रस्य निमित्तापदेन ग्राह्य नाकूटः नार्कलिपरित्यादौ नदोषः प्रातिपदिकत्वावच्छि विषयताया अपर्याप्त्या कूटाकौसत्वादित्यलम् ( अतएव नि ल्यतइति ) कार्यकालपक्षेऽप्यन्तरङ्गपरिभाषायासि मप्रवृत्तत्वादेवेत्यर्थः पूर्वत्रेत्यस्यवाधमिति तथासति क्रि श्यामन्तरङ्गपरिभाषाप्रवृत्तिप्रतिवन्धकासिद्धत्वस्याभावेन शे षायामस्याः प्रवृत्तिर्निरावाधेतिभावः ( लक्षणैकचक्षुष्कस्य लक्षणद्वारैव लक्ष्यसाधुत्वं जानतां लक्षणैकशरणा लक्ष्यानुरोधेन लक्षणं व्यवस्थापयतां दुस्तरोऽन्योन्याश्र इतिभावः, धर्मिग्राहकमानेन जातवाहिरङ्गासिद्धत्ववोधकत्व मेवास्या न समकालप्राप्तवाहिरङ्गासिद्धत्ववोधकत्वमितिभ्रमद शासाय तदंशेऽपि मानमाह अतएव ओमाङोश्चेति समका प्राप्तवहिरङ्गासिद्धत्ववोधकत्वादेवेत्यर्थः नच खट्वा आ इतिस्थिते परमपि सवर्णदीर्घं वाधित्वा नित्यत्वादा दीर्घाप्राप्तौ प्राप्तवृद्धिवाधनार्थमाङ्ग्रहणं चरितार्थं ज्ञापकं स्यादिति वाच्यं नित्यापेक्षया ऽप्यपवादस्य स्त्वेन पूर्वं दीर्घस्यैव प्रवृत्तौ ततोगुणे रूपसिद्धौ तस्य ज्ञापकत्वसम्भवात् नच ज्ञापनोक्तमपि व्यर्थं रङ्गापेक्षयाप्यपवादस्य वलीयस्त्वादिति वाच्यमपवादस्य न्तरङ्गवाहिरङ्गभावाविषये दैत्यारिरित्यादौ चरितार्थस्य ऽन्तरङ्गेण गुणेन वाधसम्भवात् तदुक्तमपवादो चरितार्थं स्तर्ह्यन्तरङ्गेण वाध्यत इति पदद्वयसम्वन्धि

यापेक्षत्वस्योभयोस्साम्येनाचःपरस्मिन्निति भाष्योक्ताहूने मृद्ध्या
द्वयेत्यत्रपूर्वयणइव पूर्वोच्चरितनिमित्तकत्वरूपान्तरङ्गत्वस्य दीर्घ-
यैव सत्त्वेन चान्तरङ्गत्वं गुणस्य कथमित्यत आह
[ साधनबोधकेत्यादि ] एवं रूपेणयोगे हेतुरग्रे वक्ष्यते-
क्रियायाः साध्यत्वेनेत्यादिना, नन्वेवं रीत्या गुणस्यान्तरङ्ग-
त्वेप्यचः परस्मिन्निति भाष्यरीत्या दीर्घस्याप्यन्तरङ्गत्वामित्य-
व्यवस्थेति चेन्न स्वार्थद्रव्यलिङ्ग संख्याकारकाणां
मेणैव बोधविषयत्वेन तत्क्रमेणैव तद्बोधकशब्दयोगेनैतद्रीत्यैव मृ-
यापद्व्येत्यादावपि पूर्वयणोऽन्तरङ्गत्वात् एतज्ज्ञापककृता-
रभाष्यप्रामाण्यात् पूर्वोच्चारितनिमित्तकत्वस्य निमित्तानामेक-
दघटकत्वे एवान्तरङ्गत्वप्रयोजकत्वाभ्युपगमाच्च एतदभिमा-
णैवोच्यते भाष्ये स्पष्टमिति, ननु आङ्पूर्वकेणधातोरेहीति
पं तदनुकरणे एहिशब्दे ऽनुकार्यघटकैकारे पूर्वान्तवद्भाव-
इत्वादनुकरणंप्रकृतिवदित्यातिदेशेनलब्धआङ्त्वेऽनुकरणैकदेश-
तैकारे शिवादिशब्दयोगे प्राप्तवृद्धिबाधपुरस्सरं-
ररूपार्थमाङ्ग्रहणं न ज्ञापकं स्यादित्यत आह एहीत्यनुकर-
इत्यादि अनेन च प्रकृत्येकदेशपर्याप्तधर्मस्याप्यनुकरणैक-
देशेऽप्यतिदेशोऽतएवाप्सुमन्तावाज्यभागावित्यादावनुकरणभूता-
सुघटके सुशब्दे ऽनुकार्यसप्तम्यन्तैकदेशसुशब्दगतसुप्त्वमादाय
सलुकोऽभावाय अपोयोनियन्मतुब्ध्विति मतुप्यलुकचरितार्थः
इहीत्यनयोरनुकरणद्वयामित्यन्ये नच पदसंस्कारपक्षे
हीतिरूपं संसाध्य पश्चाच्छिवादिसम्बन्धे पूर्वान्तवद्भावेन

यत्तु पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन ।
र्गेण तत्संज्ञकशब्देन साधनेन कारकेण तत्प्रयुक्त
। अत एवानुभूयत इत्यादौ सकर्म्मकत्वात् क
लकारासिद्धिरिति तन्न । क्रियायाः साध्यत्वेन बोधा
स्य च साधनाकाङ्क्षतया तत्सम्बन्धोत्तरमेव निश्चित
बोधेन साधनकार्य्यप्रवृत्त्युत्तरमेवाक्रियायोगनिमित्त
पसर्गसंज्ञकस्य सम्बन्धौचित्यात् । अत एव सुट् क
[६,१,१३५] इति सूत्रे पूर्वं धातुरुपसर्गेणेत्युक्त्वानैत
पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्युक्त्वोक्त
अस्यैवयुक्तत्वमुक्तं साधनं हि क्रियां निर्वर्त्तयतीति
भाष्ये । उपसर्गद्योत्यार्थान्तर्भावेण धातुनैवार्थाभिधा
क्तेषु कर्म्मणि लकारादिसिद्धिः । पश्चाच्छ्रोतुर्बोधाय
कोपसर्गसम्बन्धः । एवं च अन्तरङ्गतरार्थकोपसर्ग
त्तः सुट् संकृतीत्यवस्थायां द्वित्वादितः पूर्वं प्रवर्त्तते
द्वित्वादि । अत एव प्रणिदापयतीत्यादौ णत्वं य
[ प० ११ ] इति न्यायेन समाहितं भाष्ये । अ
प्रत्येति प्रत्यय इत्यादिसिद्धिः अन्यथान्तरङ्गत्वाद
दीर्घे रूपा सिद्धिः । यदुपसर्गनिमित्तकं कार्यमुप

लब्धात्मकत्वे एकारे पररूपार्थमाङ्ग्रहणं चरितार्थमितिवाच्य-
र्वंरीत्यापि प्रयोगो न भवति ज्ञापकतापरभाष्यप्रामाण्यादेव।
धातूपसर्गनिमित्तकगुणस्यान्तरङ्गत्वोपपादनेन पूर्वं धातुरुपस-
र्गेण युज्यते पश्चात्साधनेन धातूपसर्गनाम कं कार्यमन्तरङ्ग-
मितिप्राचां सिद्धान्तो नागेशस्य सम्मत इतिभ्रमवारणाय
प्राचीनमतमुपपाद्य खण्डयति यत्त्वित्यादिना (अतएवानुभू-
यतइति) अनुसमभिव्याहारेण भूधातोर्ज्ञानार्थकत्वमित्यभिमानः
[ निश्चितक्रियेति ] साध्यशरीरिण्याः साधनसम्बन्धोत्तरमेव-
स्वरूपनिष्पादादितिभावः साधनकार्येति येन क्रमेणार्थस्य
ज्ञानगोचरता तेनैव क्रमेण शब्दाभियोगः शब्दाभियोगक्रमेणैव
शब्दनिमित्तककार्याणां प्रवृत्त्यौचित्यामितिभावः, अतएव
साधनयोगस्य प्राथम्यादेवेत्यर्थः उक्तयुक्त्या, क्रियायास्साध्य-
त्वेनेत्यादियुक्त्येत्यर्थः [निर्वर्त्तयति] उत्पादयतीत्यर्थः [धातुनै-
वार्थाभिधानादिति ] शब्दार्थसम्बन्धस्यानादित्वात्धातो
र्ज्ञानार्थत्वस्यानुसम्बँन्धात्प्रागपि सत्वेन सकर्मकत्वात्कर्मणि ल-
कारे बाधकाभावः अनुः, केवलं प्रयोक्तुर्ज्ञानार्थतात्पर्यं श्रोतारं
ग्राहयति अतएव श्रोतुर्ज्ञानार्थबोधोऽनुसम्बँन्धोत्तरमेव नहि
श्रोतृबोधः कर्मसंज्ञायां लकारे वा कारणं येन पूर्वं कर्मणि ल-
कारो नस्यादिति सर्वमभिसन्धायाह पश्चाच्छोतृबोधायेति
बुध्यारूढानामर्थानां बोधनाय शब्दोच्चारणात् सर्वेषामर्थानां
तत्तदर्थबोधकशब्दप्रादुर्भावात्प्रागेवोपस्थितत्वात् साधनबोधक
शब्दनिमित्तककार्य्यापेक्षयोपसर्गार्थनिमित्तककार्य्यस्य शीघ्रोप-

श्रितं विशिष्टोपसर्गनिमित्तकत्वात्तदन्तरङ्गम् । यत्तु तथा तत्र पूर्वागतसाधननिमित्तकमेवान्तरङ्गम् । एव न धातु [ १, १, ४ ] इति सूत्रे प्रेद्ध इत्यत्र बाहिरङ्ग इति भाष्य उक्तम् ।

---

स्थितनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वमेवोत्पा स्तेन संज्ञ स्यादौ लिङ्पेक्षया भूषणरूपोपसर्गार्थस्य प्रथमतरमेवो तत्वेनतन्निमित्तकसंमुट् लिङ्निमित्तकाद्वित्वतोऽन्तरङ्गता एवञ्चेत्यादिना, अतएवेति साधनबोधकप्रत्ययनिमित्त स्याणामुपसर्गसंज्ञकशब्दमात्रनिमित्तकाद्यपेक्षया पूर्वो स्वादेवेत्यर्थः यदागमा इति सुकः पूर्वमेवणत्वे परिभा अनुपयोग एव स्यादितिभावः वस्तुतस्तु पूर्वमुपसर्गयो परिभाषोपयोगइति तदवतरणे प्रतिपादितम् अतएव प्र साधनबोधकप्रत्ययस्य पूर्वमुत्पत्त्या तन्निमित्तका प्रथमप्रवृत्तेरेवेत्यर्थः अध्यैयातामित्यादौ पूर्वं अप्याटश्चेतिवृद्ध्याः पूर्वं मातामादेशोत्तरप्रवर्तमानस्या आङ्गत्वेन प्रवृत्तिरिवात्रापि गुणस्यैव पूर्वागतोपसर्गसापेक्ष पेक्षयाऽऽङ्गत्वेन पूर्वप्रवृत्तौ नेदं फलमितिकेचित् ।

अन्यथेति पूर्वमुपसर्गयोग इत्यर्थः पूर्वोक्तमेव यदुपसर्गनिमित्तकमित्यादिना यत्तु न तथेति नोपसर्गार्थ कामित्यर्थः "भाष्येउक्तामिति" धात्वंशलोपनिमित्त आर्ध

किञ्च पूर्वमुपसर्गयोगे धातूपसर्गयोः समास ऐक स्वर्य्याद्यापत्तिरित्युपपदमतिङ् [ २,२,१९ ] इति सूत्रे भाष्ये स्पष्टम् । भावार्थकप्रत्ययस्यापि पूर्वमेवोत्पत्तेः । अत एव णेरध्ययन [७,२,२६] इति निर्देशः सङ्गच्छते इदं च सामान्यापेक्षं ज्ञापकं भावतिङोऽपि पूर्वमुत्पत्तिः। अन्यथा तत्र समासापत्तिः । तिङ्त्वातिङितिनिषेधान्न दोषो यदि भावतिङ्युपसर्गयोगोऽस्तीत्यलम् । यत्तु विशे

---

सति गुणोनेत्यर्थे प्रेद्ध इत्यत्र नकारलोपे क्तप्रत्ययनिमित्तके सत्याद्गुणइतिगुणस्यापि निषेधापत्तिमाशंक्य नधातुलोपइतिनिषेधापेक्षयोपसर्गसापेक्षगुणस्य वहिरङ्गत्वेनासिद्धत्वान्निषेध्याभावेन निषेधाप्रवृत्तिरिति तत्रोक्तं, पूर्वमुपसर्गयोगे तु क्तप्रत्ययसापेक्षनिषेधस्यैव वहिरङ्गत्वेन भाष्यविरोधस्स्यादितिभावः “ किञ्चपूर्वमुपसर्गयोगइति ” साधनबोधकलकारात्पूर्वमुपसर्गसंज्ञकशब्दयोगे कुगतिप्रादयइत्यनेन प्रभवतीत्यादौ प्रभु इत्यस्यैव समासे सोपसर्गधातोस्सामासिकस्वरेणैकस्वर्य्यापत्तिरित्यर्थः अन्वभवदित्यादावनु भू इत्यस्य समासे पाक्षिकस्येष्टस्य प्रकृतिभावस्य नसमासइति निषेधापत्तिरपिबोध्या पूर्वं लकारयोगेऽतिङितिनिषेधात्तिङन्तस्यासामर्थ्यादात्वंन्तस्य च समासाभावइतिबोध्यम् “भावार्थकप्रत्ययस्यापीति ” पूर्वोत्पत्तिप्रयोजकयुक्तेस्तुल्यत्वादितिभावः ।

षापेक्षात्सामान्यापेक्षमन्तरङ्गं विशेषापेक्षे विशेषधर्म-
स्याधिकस्य निमित्तत्वात् । यथा रुदादिभ्यः सार्वधा-
तुके [७,२,६६] इत्यत्र रुदादित्वं सार्वधातुकत्वं च
तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्य-
प्रत्ययत्वज्ञानंचावश्यकमितियासुडन्तरङ्गः । ए-
यत् अनुदात्तङित : [१,३,१२] इति सूत्रे कैयटे
लमात्रापेक्षयान्तरङ्गास्तिबादयो लकारविशेषापेक्षत्वा-
हिरङ्गाः स्यादय इति तत्परास्तम्, विशेषापेक्षत्वेऽपि
सामान्यधर्म्मनिमित्तकत्वाभावेन तत्त्वस्य दुरूपपादत्वा-
परनिमित्तकत्वेन स्यादीनां बाहिरङ्गत्वाच्चेति तन्न । वि-

---

न्यायसिद्धेऽर्थे ज्ञापकमप्याह " अतएव णेरध्ययन इति
सामान्यापेक्षमिति । न तु ल्युट एव पूर्वोत्पत्तावित्ति
तत्रेति,भावनिङीत्यर्थः यदि भावेति, भावातिङ् यु उपस-
गाभावे तु सामान्यापेक्षस्य नोपयोग : परन्तु नैवं
यतः स्य द्रौ तत्राप्युपसर्गयोगोपलम्भात् विशे-
विशेषधर्मस्याधिकस्येति, विशेषस्य व्याप्यस्य
सामान्यस्य व्यापकस्य धूमज्ञानाद्वन्हेरिवानुमानं सामान्य-
ज्ञानाधीनज्ञानविषयस्य विशेषधर्मस्य ज्ञानं सामान्य-
मावश्यकमितिरीत्या वा सामान्यज्ञानं ततश्च विशेषस्य भुव-

षस्य व्याप्यत्वेन व्यापकस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावेनाधिकधर्म्मनिमित्तकत्वानुपपादनात् भाष्ये एवं विधान्तरङ्गबहिरङ्गभावस्य क्वाप्यनुल्लेखाच्च यत्तु मतुप्सूत्रे भाष्ये पञ्च गावो यस्य सन्ति स पञ्चगुरित्यत्र मतुप्प्राप्तिमाशङ्क्य प्रत्येकमसामर्थ्यात् समुदायादप्रातिपदिकत्वात् समासात् समासेनोक्तत्वादिति सिद्धान्तिनोक्ते नैतत्सारमुक्तेऽपि हि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धितो यथा पाञ्चनापितिरिति पूर्वपक्ष्युक्तिं भाष्य । द्विगोर्लुगनपत्ये इति लुग्विधानात्तद्धितार्थे द्विगोस्तद्धितो भवति पञ्चगुशब्दश्चाद्विगुरितितदाशयं कैयटः । ततो द्वैमातुरः पाञ्चनापितिः पञ्चसु कपालेषु संस्कृत इत्यादौ सावकाशाद्द्विगोर्बहुव्रीहिणा प्रकृते परत्वाद्बाध इत्याशयेन नैष द्विगुः कस्तर्हि बहुव्रीहिरिति सिद्धान्ति-

---

सामान्यस्यानुमितत्वादुपस्थितयोर्द्वयोर्निमित्तत्वमित्यभिमानादिनिरोधमम् तदेवोपपादयति यथेत्यादिना,, एनेनेति,, विशेषापेक्षस्य विशेषधर्मरूपाधिकनिमित्तकत्वादेव बहिरङ्गत्वस्योपपादनेनेत्यर्थः । बुद्धिस्थहेतुमुपपादयति विशेषेति "सामान्यधर्मनिमित्तकत्वाभावेनेति." नहि शास्त्रप्रमाणसिद्धस्य सार्वधातुकत्वस्य प्रत्ययत्वधातुत्वज्ञानमन्तराऽज्ञातत्वमिव प्रत्य-

क्षप्रमाणसिद्धस्य लृदुत्वस्य लत्वज्ञानं बिनाऽज्ञातत्वं येन लृ
ज्ञाने लत्वज्ञानमावश्यकं स्यादितिभावः, लृदुत्वज्ञाना
न्वितलत्वज्ञानापेक्षायामपि स्यादिकार्ये घटे कुलालपितुरि
थासिद्धत्वेनलत्वस्यानिमित्तत्वादधिकनिमित्तकत्वप्रयुक्त
हिरङ्गत्वस्य दुरूपपादत्वात् तवाभीष्टस्य स्यादीनां
रङ्गत्वस्य प्रकारान्तरेणाप्युपपत्तावसदर्थावलम्बनन्तव शे
परनिमित्तकत्वेनेत्यादि, इदानीं रुदादिभ्य इति विशि
टोऽपि बहिरङ्गत्वं न सम्भवतीत्याह तन्नेत्यादिना निमित्तं
नाभावेनेति, प्रकृते शाब्दबोधीयाविषयताया एव निमित्तवा
ग्रहणादनुमित्युपस्थितेऽपि धर्मे शब्दजन्योपस्थितीयविषय
मनियतायास्तस्यादुरूपपादत्वमितिबोध्यम् ननुअर्थाप
स्थितस्यापि काचिच्छाब्दबोधे,भानदर्शनादत्रापि सार्वधातु
ज्ञानान्यथानुपपत्त्योपस्थितस्य धातुत्वादेर्भानसम्भवेन नि
त्तत्वं स्यादित्यत आह "एवंविधेत्यादि, सार्वधातुकत्वे ता
क्षितत्वेपि इटि घटे कुलालपितुरिवाऽन्यथासिद्धत्वेनाऽनि
त्वामित्यपि बोध्यम् भाष्ये दृश्यमानं विशेषाऽपेक्षस्य वा
मेकदेशिनोक्तमिति बोधनाय भाष्यमुपपादयति यत्वित्या
प्रत्येक मसामर्थ्यादिति नेत्यध्याहृत्य सर्वत्राऽन्वयः, अ
पञ्चअस्शब्दात् गोअस्शब्दादित्यर्थः असामर्थ्यात्,
शब्दार्थस्य गोपदार्थेनाऽन्वयान्मत्वर्थेऽ न्वयाऽसम्भवेनेति
समुदायात्, पञ्चअस्गोअस्रूपात्, समासात्पञ्चगुशब्दादि
यथा पाञ्चनापितिरिति पञ्चानांनापितानामपत्यमित्यर्थे इ

नोक्ते तमवकाशमजानानोऽपवादत्वाद्द्विगुः प्राप्नोतीति पूर्वपक्षी । अन्यपदार्थे सुबन्तमात्रस्य विधीयमानबहुव्रीहेः सङ्ख्यायास्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहितत्वाद्बाधकः प्राप्नोतीति कैयटः । ततः सिद्धान्त्येकदेश्याह । अन्तरङ्गत्वाद्बहुव्रीहिः । कान्तरङ्गता, अन्यपदार्थे बहुव्रीहि-र्विशिष्टेऽन्यपदार्थे द्विगुस्तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियत इति । अधिकारस्त्यर्थापेक्षमत्वर्थनिमित्तो द्विगुर्बहिरङ्ग इति कैयटः । नैषा सिद्धान्त्युक्तिरेतावतः प्यपवादत्वाहानेः । अच्सामान्यापेक्षयणो विशिष्टसवर्णापेक्षदीर्घेण बाधदर्शनात् । किञ्च उक्तरीत्या परत्वेनैव बाधासिद्धेः । किञ्च अत्राधिकापेक्षत्वेनैव बहिरङ्गत्वम् । न केवलविशेषापेक्षत्वेनेति नैतद्भाष्यारूढं विशेषापेक्षस्य बहिरङ्गत्वम् । अतएत सुबन्तसामान्यापेक्षो बहुव्रीहिस्त द्विशेषापेक्षो द्विगुरिति नोक्तं भाष्ये । न चार्थकृतबहिरङ्गत्वस्य अनाश्रायणादिदमयुक्तम् । एकदेश्युक्तित्वेनादोषात् । अतएवास्तिग्रहणंनोपाध्यर्थं किन्तु अस्तिशब्दा मतुबर्थमिति त्वदभिमतं बहिरङ्गत्वमपि द्विगोर्नास्तीति प्रतिपाद्य सिद्धान्तिना मत्वर्थे द्विगोः प्रतिषेधो वक्तव्य

इति वचनेनैतत्सिद्धमित्युक्तम् । अतएव तदोः स
[ ७, २, १०६ ] इति सूत्रेऽनन्त्ययोरिति चरिता
अन्यथा प्रत्ययसामान्यापेक्षत्वेनान्तरङ्गत्वादन्त्यस्या
न्त्यस्यैव सत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । पाद
[६ ४, १३०] इति सूत्रे भाष्यकैयटयोरप्येतदन्त्या
भाव एव सूचित इति सुधियो विभावयन्तु ।

---

तार्थे विहितेन द्विगुसमासेनोक्ते ऽपत्यरूपार्थे इञ्प्रत
द्विगोर्लुगनपत्ये इति द्विगुनिमित्ततद्धितस्याऽनपत्या
लुगनेन विधीयते, द्विगुसमासेनोक्ते तद्धितार्थे तद्धि
त्पत्तौ हि सूत्रम्व्यर्थं स्यादिति बोध्यम् पञ्चगुशब्दश्च द्वि
तथासत्यपि टच् न समासान्तविधेरनित्यत्वात् । सम
द्विगोरिति । निरुक्तरूपेण न बहुव्रीहेः प्रसक्तिः प्रथमा
भावादितिभावः तमप्रकाशमिति पाञ्चन गितिरित्यादौ
मान मित्यर्थः सिद्धान्त्येकदेश आहेति साधनांशस्य पू
न्सिद्ध न्तित्वं हेतोरयुक्तत्वादेकदेशित्वम्, अन्तरङ्गत्वसु
तिअन्यपदार्थेइत्यादि तस्मिंश्चाऽ तद्धितइति अस्याद्विगो
रानिमित्तभूते तस्मिन् मतुपि तद्धित इत्यर्थः, अ
बहुव्रीहिरित्याद्यन्तरङ्गत्वोपपादनपरभाष्येण विशेषा
बहिरङ्गत्वलाभे ऽप्येकदेशयुक्तत्वेनानादर इतिबोध्यम्
त्वाहानेरिति अन्तरङ्गादप्यपवादस्य बलवत्वादित्यर्थः ।

सवर्णेति विशिष्टत्वमेवाह सवर्णेति उक्तरीत्येति अवकाशत्व-रीत्येत्यर्थः नोपादानार्थमिति न, मतुबानिमित्तत्वार्थमित्यर्थः बहुव्रीहिवन्मतुपोऽपि शब्दशक्तिस्वाभाव्यादस्त्यर्थविषयता स्यादित्याशयः सिद्धान्तिना सिद्धान्त्येकदेशिनेत्यर्थः परम-सिद्धान्तीतु परत्वादत्र बहुव्रीहिमाह, नचैवमसुस्रुवादित्यादावु-वङोऽलपेति स्रुधातोर्लुङि चङि द्वित्वे ऽसुस्रुअदि तिस्थिते सार्वधातुकनिमित्तकलघूपधगुणस्य चङ्कारानिमित्त-कस्योवङश्चप्राप्तौ अन्तरङ्गत्वादुवङ् भवति, तत्र सिद्धंत् उभयोः परनिमित्तकत्वाविशेषादित्यर्थः नच गुणशास्त्रघटकाङ्ग-पदप्रयोज्यविषयताश्रयः असुस्रुअ इतितद्घटकाकारनिष्ठविष-यताप्रयोजकसप्तम्यन्ताच्च पदघटितस्वरूपान्तर्भूतनिमित्तकत्वान्त रङ्गत्वस्य उवाङि सत्वाच्छङ्कोदयाभावइतिवाच्यम् समकालप्रा-प्तवाहिरङ्गासिद्धत्वस्थले ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रि त्यगुणइति भाष्यात् सप्तम्यन्तपदेनोपात्तस्यैवाङ्गपदेन ग्रहणस्यो-क्तत्वात् पूर्वोपस्थितेति, पूर्वोच्चरितेत्यर्थः नन्वेवं खद्वा आऊढेत्य-त्रोक्तः पूर्वोपस्थितिमादाय गुणस्योक्तान्तरङ्गत्वमनुपपन्नं तदपेक्ष-याखद्वाकारस्यैव प्रथमोच्चारितत्वादितिचेन्न सति सम्भवे ऽर्थ-कृतस्यैव पूर्वोपस्थितत्वस्य ग्रहणं तदसम्भव उच्चारण कृतस्येति व्यवस्थयाऽदोषात् चङोनर्थकत्वात्, प्रथमं श-रीरकार्याणीति, सर्वापेक्षया शरीरस्य प्रथममुपस्थितत्वादिति-भावः जातिव्यक्तीत्यादि शब्दश्रवणानन्तरं प्रथमं जातिबुद्ध्यारूढा भवति जातिपदं धर्ममात्रपरं ततस्त-

त्पुरस्कारेण व्यक्तिः ततोजातिविशिष्टव्यक्तौ विशेषणवि
लिङ्गं ततस्सजातीयपदार्थान्तरसापेक्षापेक्षाबुध्या
ततोविजातीयक्रियापेक्षं कारकत्वं बुध्यारूढं भवति
क्रमेण तत्तदर्थवोधकशब्दप्रादुर्भाव इत्यर्थः ( तदं
अन्तःकार्यत्वरूपान्त रङ्गत्वमपीत्यर्थः अतएवेति जातवा
सिद्धत्वानियामकत्वादेवेत्यर्थः यण :स्थानिवत्त्वेनेति
त्वानियामकत्वेतु विलम्बोपस्थितौकारनिमित्तकस्य यणो
लोकासिद्ध्याऽसिद्धत्वेन यलोपवारणसंभवात्स्थानिवत्त्वा
न्तानुधावनस्य वैयर्थ्यापत्तेः, उक्तोदाहरणइति सुधापद्ध
दावित्यर्थः पूर्वमप्राप्तिकत्वमिति परिभाषायानोपयोगइति
स्रजिष्ठइत्यादाविति विन्मतोर्लुकि प्राप्तस्य स्रग्व
च्यकस्य लोपस्येत्यर्थः त्वदुक्तरीत्येति पूर्वस्थानिकत्वमन
मितिस्वीकारेणेत्यर्थः वस्तुतोनेदं भाष्यं सिद्धान्तभूतं
येन वाधके प्रवृत्ते उत्सर्गस्याप्रवृत्तेष्टिलोपाप्रवृत्तेः,
व्योनि ननु तर्हि तत्फलस्यानुस्वारे कर्त्तव्ये मुमोऽ सिद्ध
स्य कथं सिद्धिरत आह, परन्तपइत्यादि इदमुपलक्षण
न्तुर इत्यत्र संयोगान्तलोपेऽप्यसिद्धत्वाभावः नव्य
दीक्षितमतेपीत्यर्थः फलस्यान्यथासिद्ध्या तद्भाष्यस्यैकदे
स्पष्टमेवेतिवोध्यम्, आभीये अन्तरङ्गे आभीयस्य
समानाश्रयस्येति, इयं पंक्तिर्न समीचीनतया योजयितुं
तथाहि पपुषइत्यादौ वसोः संप्रसारणे पपाउस्
इतास्थित आतोलोपइत्येतदृष्ट्या संप्रसारणस्य

नन्वेवमसुस्नुवदित्यत्र लघूपधगुणादुवङोऽल्पनिमित्तत्वाभावादुवङ् न स्यादिति चेत् न, तत्रान्तःकार्य्यत्वरूपान्तरङ्गत्वसत्त्वात् अन्तः कार्य्यत्वं च पूर्वोपस्थितनिमित्तकत्वमङ्गशब्दस्य निमित्तपरत्वात्। इदमन्तरङ्गत्वं लोकन्यायसिद्धमिति मनुष्योऽयं प्रातरुत्थाय शरीरकार्य्याणि करोति ततः सुहृदां ततः सम्बन्धिनामर्थानामपि जातिव्यक्तिलिङ्गसंख्याकारकाणां बोधक्रमः शास्त्रकृत्कल्पितस्तत्क्रमेणैव च तद्बोधकशब्दप्रादुर्भावः क्लृप्त इति तत्क्रमेणैव तत् कार्य्याणीति पट्व्येत्यादावन्तरङ्गत्वात् पूर्वं पूर्वयणादेशः परयणादेशस्य वहिरङ्गतयाऽसिद्धत्वादित्यनेनाचः परस्मिन् [ १, १, ५७ ] इति सूत्रे भाष्ये स्पष्टम् तदपि युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव यथा पट्व्येत्यत्र पदस्य विभज्यान्वाख्याने न तु जातस्य वाहिरङ्गस्य तादृशेऽन्तरङ्गेऽसिद्धतानियामकं प्रागुक्तलोकन्यायेन तथैव लाभादिति वाह ऊट् [ ६, ४, १३२ ] सूत्रे कैयटे स्पष्टम्। अत एव चास्वोरित्यादौ वलि लोपो यणः स्थानिवत्त्वेन वारितोऽचः परस्मिन्नित्यत्र भाष्यकृता। क्रमेणान्वाख्याने तु उक्तो-

दाहरणे पूर्वप्रवृत्तिकत्वमप्यन्तरङ्गत्वं वहिरङ्गस्यासिद्धि-
मपि निमित्ताभावादप्राप्तिरूपं बोध्यम् । यत्तु एवं सी-
पूर्वस्थानिकमप्यन्तरङ्गमिति तच्चिन्त्यम् । स्रजिष्ठ इत्य-
विन्मतोर्लुकि टिलोपस्यापवादविन्मतोर्लुक्प्रवृत्त्या जाय-
पक्षाश्रयणेन वारणप्रयासस्य प्रकृत्यै काच् [६,४,१६३]
इति सूत्रप्रयोजनखण्डनावसरे भाष्यकृत्कृतस्य नै-
ल्यापत्तेः । त्वदुक्तरीत्या विन्मतोर्लुको वहिरङ्गासिद्ध-
अनायासतस्तद्वारणात्। भाष्ये ईदृशरीत्या वहिरङ्गा-
द्धत्वस्य क्वाप्यनाश्रयणाच्च । परिभाषायामङ्गशब्द-
निमित्तपरत्वाच्च ।

इयं चोत्तरपदाधिकारस्थवहिरङ्गस्य नासि-
त्वंबोधिकेतीचएकाचोऽम् [ ६,३,६८ ] इति सूत्रे भा-
पूर्वपक्ष्युक्तिरिति सा नादर्त्तव्या । परन्तप इत्यादाव-
स्वारे नासिद्धत्वं मुमस्त्रिपाद्यां तदप्रवृत्तेः । नव्यमते-
यथोद्देशपक्षाश्रयणेनान्यथासिद्धोदाहरणदानेन
तदुक्तित्वमावश्यकमित्याहुः । आभीयेऽन्तरङ्गे आभी-
बहिरङ्गस्य समानाश्रयस्य नानेनासिद्धत्वमासिद्धवादि-
सिद्धवत् सूत्रे भाष्ये स्पष्टम् । एवं सिचिवृद्धेर्येन न-

न्यायेनान्तरङ्गबाधकत्वमूलकं न सिच्यन्तरङ्गमस्ती-
कों गुण [१,२,३] इति सूत्रे भाष्ये स्पष्टम् ॥५०॥

सिद्धत्वाभीयासिद्धत्वाच्चालोपो न स्यादित्याशंक्य तथाभ-
त्वेनाभीयासिद्धत्वं परिहृत्य वहिरङ्गमन्तरङ्गमितिच प्रतिद्व-
द्वभाविनावेतावर्थौ कथं सत्यन्तरङ्गे वहिरङ्गं सति च वहिरङ्गे
अन्तरङ्गं . नचात्रान्तरङ्गवहिरङ्गयोर्युगपत्समवस्थानमस्ति
ानभिनिर्वृत्ते वहिरङ्गे अन्तरङ्गं प्राप्नोति तत्र निमि-
त्तमेव वहिरङ्गमन्तरङ्गस्येतिग्रन्थेन वहिरङ्गासिद्धत्वमपिभाष्ये-
परिहृतं, यथा स्योन इत्यादौ यण्गुणयोर्युगपत्प्राप्तिरस्ति
न तथा पपुष इत्यादौ, संप्रसारणप्रवृत्तिकाले आलोपादीनां-
निमित्ताभावादप्रसंगः आलोपप्रवृत्तिकाले च निर्वृत्तं संप्र-
सारणं ततश्चनिमित्तमेवालोपादीनां संप्रसारणमिति
नास्तिपरिभाषोपस्थानमित्यर्थः कैयटेनोक्तः तेनैवच पचावे-
दामित्यत्राप्येवं सति जातासिद्धत्वं न स्यादित्याशंक्य भाष्यम-
न्यथाव्याख्यातं तथाहि इयं परिभाषा वाहऊठइत्येतज्ज्ञापित-
त्वादाभीया आभीयेष्वालोपादिषु कर्त्तव्येषु असिद्धेति न प्रवर्तते
असिद्धत्वमभावप्रतियोगित्वम् नैवास्तिपरिभाषेत्यर्थः तदप्रवृत्तौ
चाऽऽलोपादीनिभवन्तीति भाष्यस्थपदान्यास्मिन्नर्थे एवं
योजितानि सत्यन्तरङ्ग इति विषय पेक्षित इत्यर्थः, तत्रनिमित्त
मेवेति परिभाषाया असिद्धत्वादप्रवृत्ताविति भावः वसुस-
म्प्रसारणञ्चैकं परिभाषाया आलोपादीनाञ्च आश्रय इति

समानाश्रयत्वाद्भवत्यसिद्धत्वम्परिभाषायाइति, स्वसा-
द्धत्वेऽप्यदृष्टपिशाचन्यायेनाऽसिद्धयाऽप्यनयाऽन्तरङ्ग
वहिरङ्गाऽसिद्धत्वप्रतिपादने वाधकाऽभावः समाना-
मप्यन्यूनाऽधिकनिमित्तकत्वमेवाऽन्यथाऽतिप्रसङ्गात्
कैयटोक्तं किन्तु अन्तरङ्गस्याभीयस्याभीयाम्परिभा-
सिद्धत्वात्परिभाषया प्रतिपाद्याभाव इव तस्याऽसिद्ध-
पादनाऽसम्भवः, अन्तरङ्गशास्त्रत्वस्य लिङ्गत्वेन परि-
अन्तरङ्गशास्त्रस्थत्वेन समानाश्रयत्वमिति परे, परन्तु
रङ्गे समानाश्रयत्वमाभीयत्वमितिविशेषणमनुपयुक्तमेवे-
वयन्तु "येननाप्राप्तिन्यायमूलकामिति" एतेन नाऽ-
रङ्गमस्तीति नाऽपूर्वामितिवोध्यम्। अथ जातवहिरङ्गेऽसि-
क्किम्फलमितिचेदत्रोच्यते पचावेदमित्यत्र लोड्उत्तमाद्वि-
स्येदम्शब्देन सहैकादेशे पूर्वान्तवद्भावेन लोडुत्तमम-
त्वस्य, स्वतएत्वस्यचसत्वेनएतऐरितिप्राप्तन्तद्रूपे ऽन्तर-
पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेनवाहिरङ्गस्य
सिद्धत्वादेतऐरित्यस्याप्रवृत्तिरिति फलम्०।
इतऐरितिन्यासेनापि पचावेदमित्यत्र वारणसम्भवः
त्यादावायादेशः स्यादिति तु न भ्रामितव्यम् त-
न्यादेशेनेतऐ रित्यस्य वाधसम्भवादित्युच्यते तदा पचा-
त्रआमेत इत्यामादेशवारणमेव फलमिति काश्चित् तदपि
प्रतिपदोक्तस्यैकारस्य ग्रहणेनादोषात्। एधस्वपच-
यत्राभिधीयत इत्यर्थे आख्यातमाख्यातेनोतिसमासे

चने बहुवचनेझल्येदित्येत्वे एधस्वपचस्वेभ्य इत्यत्र प्रतिपदोक्तस्यैकारस्यामादेशापत्तेस्तादवस्थ्यात् तद्वारणायैव परिभाषा मन्तव्येत्यपिन टितआत्मनेपदानामित्यतआत्मनेपदानुवृत्त्या प्रतिपदोक्तपरिभाषाश्चाश्रित्यात्मनेपदमुच्चार्य्यविहितस्य लोट एकारस्यामादेश इत्यर्थकरणेन पचावेदामित्यादावामादेशवारणासिद्धे रैविधायके आत्मनेपदसम्बन्धेनापि पचावेदमित्यत्रायादेशवारणं सम्यगेव। नच सवाभ्यां वामावित्यस्यात्मनेपदमुच्चार्य्य विहितैकारस्येत्यर्थोनकर्त्तव्यः एधस्वेत्यत्रादेशानापत्तेरेवञ्च एधस्वेदमित्यत्रामादेशाभावाय जातासिद्धत्वं वक्तव्यम्। नचैधस्वेत्यत्रापि सेघटकैकारस्य पर्य्यन्यन्यायेन टितआत्मनइत्यनेनैत्वे आत्मनेपदमुच्चार्य्यविहितैकारस्य सत्वेन प्रतिपदोक्तपरिभाषाप्रवृत्तौ बाधकाभावेनैधस्वेदामित्यादौ न दोष इतिवाच्यम् तङादेशानां टेरेत्वन्नेत्यस्य एकारोच्चारणसामर्थ्येन ज्ञापनात्सेघटकैकारस्यैत्वाप्रवृत्तेः सकारसाहचर्य्यात्सवाभ्यामित्येताद्विहितानवयववकारात्परस्यामादेश इत्यर्थकरणेनादोषाच्च। नचास्रूषुददित्यत्र क्षरणार्थकस्रूदधातोर्णिजन्ता ल्लुङि चङि द्वित्वे उपधाह्रस्वे सन्वद्भावेऽभ्यासस्य दीर्घे णिचि प्राप्तलघूपधगुणे बहिरङ्गस्योपधाह्रस्वस्यासिद्धत्वं मन्तव्यम् नाजानन्तर्य्य इत्यस्यतु न विषयः गुणस्याजानन्तर्य्यनिमित्तकत्वाभावात् एकवर्णव्यवधाने येननाव्यवधानन्यायेन गुणप्राप्तावपि नाजानन्तर्य्यप्रवृत्तौ मानाभावात् क्नोः क्ङित्वेनार्द्धधातुकविशिष्टस्यैवेकोगुणोविधीयते वै० स्वपूर्वत्व स्वो

पदेशकालिकलघुत्ववत्त्वोभयसम्बन्धेन एवंचैकोणिगुणकालिकलघुत्वाभावाद्गुणाप्रवृत्तेर्नेदं फलमिति तु न तोतोर्त्तीत्यादौ वलोपोत्तरजातलघुत्वकेऽपि गुणदर्शनेनस्यकल्पयितुमशक्यत्वात् । यदिच यङ्लुकश्छान्दसत्वेनदृष्टानुविधानस्यैवसत्वेन न तत्प्रकृतार्थप्रतिबन्धकम् तोर्वानिपि तोर्वेत्यत्र गुणानुपपत्तिरपि न प्रकृतार्थप्रतिनधात्विवतीनिषेधेन तत्र गुणस्यानिष्टत्वात् तत्प्रत्याख्यानफलैक्याय तदनभिधानस्यैवौचित्याच्चेत्युच्यते तदा नेदं यत्तु केनचित् अन्येतु पुगन्तसाहचर्यात्सार्वधातुकसादृश्याच्चार्द्धधातुकपरतोऽपि स्वोत्तरप्रत्ययानिमित्तकस्यैवैकग्रधानान्न दोष इति प्राहुरित्युक्तन्तन्न युक्तम् सादृश्ये प्रतियोगिवृत्त्येकधर्म्मस्यापेक्षिततया स्वत्वस्याननुगतत्वेटित्वैकधर्म्मस्योभयवृत्तित्वासम्भवात् पुगन्तप्रतियोगिसार्वधातुकप्रातियोगिकस्य वा सादृश्यस्योक्ति निर्णयप्रतिपादयितुमशक्यत्वाच्च ह्रीधातोः क्विन्तादाचष्टे णिचिततोहेतुमण्णिचि लुङि चङि णिचोर्लोपे ऽजिह्रिपदित्यत्रोत्तरप्रत्ययनिमित्तकस्यापीकः सत्वाच्च वेञ्धातोः क्विपि सम्प्रसारणे तुकि निष्पन्नादुत्प्रातिपदिकादाचरक्विपि त्यादौ स्वोत्तरप्रत्ययानिमित्तस्यैवेकः सत्वाच्च ॥ पुगन्तसँयोगपदेन प्रत्ययावयवानिमित्तकसयोगस्येव क्ङिति सामर्थ्यात्लाघवाद्ग्रहणेतु फलं सम्यगेव सार्वधातुकसांनिध्यलघुत्वानिमित्तस्यैवार्द्धधातुकस्य ग्रहणेतु न फलं सिद्धे

निमित्तत्वात् क्ङोः क्ङित्वेन भेत्त्यादिलक्ष्यानुरोधेनच घूपधविहितप्रत्ययाव्यवहितपूर्वस्येको गुणइत्यर्थेनासूषुददि- ादौ णिच्योलघूपधाविहितत्वाभावेन गुणाप्रवृत्त्या नेदं फलं स्यागित्यपि कश्चित् एतन्मते ऽस्तुस्तुवत्(रियतीत्यादौ गुण- प्राप्त्या तदपेक्षयान्तरङ्गत्वादुवङादिप्रतिपादकभाष्यविरो- न उपायस्योपायान्तरादूषकत्वात् ॥ नाप्यादिद्रपदित्यादौ धातोर्णिजन्तात्लुङि चङि पुकि द्वित्वे उपधाह्रस्वत्वे अदि- दितिनिष्पन्ने णिज्निमित्तकोपधावृद्धौ कर्त्तव्यायां वहिरङ्गो- ह्रस्वस्यासिद्धत्वसम्पादनेन सफला ऽसिद्धं वहिरङ्गमिति- रिभाषा, ञित्साहचर्येण अद्घटितप्रकृतिकस्यैव णितोग्रहणे- दोषात् रजयतिमृगानित्यादौ संज्ञापूर्वकोविधिरनित्य यनेन वृद्धेरनित्यत्वान्नदोषः। शासधातोर्णिजन्तात्लुङि शशासदित्यत्र णौचङीति ह्रस्वेऽपि वृद्ध्या लक्ष्येलक्षण- न्यायेन पुनर्ह्रस्वाप्रवृत्त्या च रूपसिद्धौ शासधातौ नाग्- लोपीतिनिषेधसामर्थ्येन ह्रस्वोत्तरं वृद्ध्यप्रवृत्तिज्ञापनान्नेदं- फलमितिकेचित् तन्न तेन शास्त्रवाधापेक्षया परिभाषाकल्पन लाघवात्। ग्रहधातोर्यङ्लुङन्तात्तासि सम्प्रसारणे जागृट ादौ ऋदुपधत्वसम्पादकस्यरुगादौ कर्त्तव्ये तन्निमित्तकस- सारणस्यासिद्धत्वायतु न परिभाषावश्यकता यङ्लुक्श्चा- सत्वादभ्यासे एव ऋदुपधत्वस्यान्वयाच्च॰ नाप्यतिखद्वघटक- न्द्राट्टापोऽभावोह्रस्वासिद्धत्वेन फलम् लक्ष्येलक्षणन्यायेन सिद्धेः अतिष्टिपदित्यत्रापीकारस्यासिद्धत्वेन गुणाभावोऽपि

न फल मौपदेशिकलघूपधस्यैव गुणविधानस्योक्तत्वादि
च्चारणसामर्थ्याच्च ॥ नच हेजगदम्बेत्यादौ टापो
बहिरङ्गह्रस्वासिद्धत्वार्थं सा तल्लक्ष्यत्वाट्टापवारण
प्रथमप्रवृत्त्युद्देश्यत्वेनाश्रीयमाणसमुदायविशिष्टं जगदि
टितस्यैव सत्वेन स्वाघटकत्व स्वघटकमात्रोद्देश्यकावि
रिक्तत्वोभयसम्बन्धेन स्वीयप्रथमप्रवृत्त्युद्देश्यत्वेनाश्री
समुदायविशिष्टाघटितत्वरूपतल्लक्ष्यत्वाविरहादितिवाच्य
ह्रस्वेनेष्टसिद्धेः । नव लक्ष्येलक्षणन्यायेन ह्रस्वा
समुदायोद्देश्यकटापा सहैकादेशस्य ह्रस्वशास्त्रीयप्रथ
द्देश्यसमुदायविशिष्टत्वेन तद्घटितस्य जगदम्बेत्यस्य
क्ष्यत्वाभावात् पुनष्टाप्तु न तल्लक्ष्यत्वात् तथाहि सं
प्रवृत्तिर्जगदम्बशब्दाट्टापः प्रवृत्तिस्तदुद्देश्यत्वेनाश्रीयमा
दम्बसमुदायस्तत्वं लिङ्गाविशिष्टपरिभाषयाजगदम्बा
तद्विशिष्टत्वमान्तिमह्रस्वस्य नास्ति यतस्तस्य तद्घटकमा
कत्वेन स्वघटकमात्रोद्देश्यकाविकारातिरिक्तत्वाभावात्
ष्टीनः कश्चित्तद्घटितत्वस्य जगदम्बशब्दे सत्वात्
ह्रस्वे कर्त्तव्ये जगदम्बाशब्दे यत्तल्लक्ष्यत्वन्तदेक
न्यायेन जगदम्बशब्दे आनीय पुनर्लिङ्गविशिष्ट
जगदम्बाशब्दे आनीयत इति तल्लक्ष्यत्वाभाव
सिद्धिरितिवाच्यम् ह्रस्वस्य विभक्तिनिमित्तकत्वेन
लिङ्गविशिष्टाग्रहणमिति परिभाषया लिङ्गविशिष्ट
दम्बाशब्दे तल्लक्ष्यत्वाभावात् नच यासाशब्दे पुन

ल्लक्ष्यत्वं लिङ्गविशिष्टपरिभाषया विभक्तिनिमित्तककार्ये यानेतव्यमेवेतिवाच्यं नयामयोरितिनिर्देशेन पुनरत्वाप्रवृत्तेरेव ल्पनात् तत्रैवविभक्तौलिङ्गतिपरिभाषाया अप्रवृत्तिकल्पनाच्च जगदम्बेत्यादौ सम्बुद्ध्यव्यवहितपूर्वत्वं निमित्तीकृत्य जाग- ानोर्ह्रस्वस्तन्निमित्ताविनाशकटापं प्रत्यानिमित्तं स्यादितिरी- त्यापि टापोऽभावः परिभाषां विनासिद्धोऽतएवबुद्धावित्या- ावपि न टाप् इति न फलं जातासिद्धत्वस्य यासेत्यादौ नयासयोरितिनिर्देशाट्टाप् हेलक्ष्मीत्याद्यनुरोधेन सम्बुद्धौ स पातपरिभाषा न प्रवर्त्तत इति न भ्रमितव्यं नदीह्रस्व- स्यैव विशिष्य भाष्योक्तेः यत्तु अम्बात्रेत्यादौ ह्रस्वोत्तरैका- शिपूर्वान्तवद्भावेनैकादेशविशिष्टे अम्बार्थकत्वेऽपि न ह्रस्वः दद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्यैकादेशस्यासिद्धत्वा- दित्येव फलं तत्र उत्तराकारपूर्वभूतसम्बुद्ध्यपेक्षयाउत्तराका- पर्यन्तैकादेशविशिष्टस्य पूर्वत्वबुद्ध्यभावेन ह्रस्वत्वाप्राप्तेः, स्वयंभवतीति स्वयम्भूस्तस्मै स्वयम्भुवे इत्यत्र प्रत्ययलक्षणेन क्विप्परत्वमादाय प्राप्ते ऊठि विभक्तिनिमित्तकत्वेन बहिरङ्गस्या- ङ्गाऽसिद्धत्वंपरिभाषाफलमित्यपि न च्छकारसाहचर्येण विभक्त्यनिमित्तकस्यैव वस्य ग्रहणेनादोषात् नचोक्तस्वय- भूशब्दादाचारक्विबन्तात् घञर्थेकप्रत्यये स्वयम्भुव इत्यादौ कारस्योठोऽभावायासिद्धत्वन्तद्वकारस्य विभक्त्यनिमित्त- कत्वेनोक्तसाहचर्येणाशक्यवारणत्वादीतिवाच्यंसाहचर्येण यगि- तरप्रत्ययानिमित्तकस्यैव वस्य ग्रहणेनादोषात् यगितरत्व-

निवेशेन ब्राह्मणकण्डूतिरितिभाष्यप्रयोगे कण्डूयतेः क्तिचि अल्लोपयलोपयोः स्थानिवद्भावेन यणकारा कोबङ्व्ययवक्कारस्योव्यदोषात् नच इषधातोः कर्तृक्वि तिक्काचारक्विबन्तात् कर्तृक्विबन्तेषशब्दस्याशब्देन स आचारक्विबन्ताल्लटि तिपि शपि पररूपे छत्वे इच्छ छकारस्याक्विपमादाय शत्वप्रवृत्तेस्तादृशसाहचर्यस्य शक्यत्वात् पूर्वोक्तं फलमयुक्तमेवेति वाच्यम् स्तत्रापि च्छत्वस्यासिद्धत्वेन शत्वाप्रवृत्यर्थश्चान्तरङ्गा मन्तव्येति बोध्यम् कर्तृक्विबन्तप्रकृतिकाचारक्विबन्ता र्यति भव्यमित्यादावुठोऽभावाय सा दिवधातोः क्मत्यर्थे मन्धातोः क्विपि नलोपे तुकि मत् तयोस्समासे वा टिलोपे क्विपि दिवामितिमान्तस्य मशब्देन समासे टिलोपे देवयतीत्यादावुठोऽभावाय सा नौशब्दस्य समासे नावशब्दादाचारक्विबन्ताण्णावल्लोपे नाव ऊठोऽभावायापि सा अल्लोपस्य स्थानिवत्त्वन्तु न क्वौ प्रतिनिषेधात् दीङोघञर्थे कः दियशब्दादाचारक्विबन्ता ल्लोपे दिययतीत्यादौ क्विपोवकारमादाय यलो भावायापि सा बोध्या, समकालप्राप्तासिद्धत्वफलमथ रियति पियति असुस्रुवत अयज इन्द्रं मृद्ध्या पट्व्या एषु लघूपधगुणापेक्षया इयङुवङोः अयजइइन्द्रमित्य दीर्घापेक्षया गुणस्य मृदुईआ पटुईआ इत्यवस्थायां पेक्षया पूर्वयणश्च शीघ्रोपस्थितिनिमित्तकत्वरूपान्तरङ्गत्वे

वृत्तिस्समकालिकासिद्धत्वफलमन्यथाऽऽद्येषु गुणस्य चतुर्थे र्घस्य परत्वादापत्तिरन्त्ययोः शब्दपरविप्रातिषेधेन परयणश्च-वृत्तिस्स्यात् पूर्वस्य यण् न स्यादिति केचित् तन्न येनना-वधानन्यायेन पुगन्तसाहचर्येण चार्धमात्रिकवर्णव्यवधान-व सहनेन मात्रिकव्यवधाने प्रवृत्तौ मानाभावेन गुणस्याप्राप्तेः भिधातोर्घञर्थे कप्रत्यये तदन्तादाचारक्विबन्तात्कर्त्तरि क्विपि लोपयलोपयो राचारक्विबन्ताल्लटि भयति वनिपि भंत्रे-पादावल्लोपस्य स्थानिवद्भावात्सार्वधातुकार्धधातुकयोरिति णो न स्यान्ममतु अन्तरङ्गत्वादियङ्रियतीत्यादिभाष्यप्रामा-ान्मात्रिकवर्णव्यवधानेऽपि लघूपधगुणप्रवृत्त्या लघूपधत्वादेव णसिद्धिरित्यर्धमात्रिकव्यवधानमेव सह्यत इति न युक्तमिति च्यम् अर्धमात्राधिककालिकं यच्छ्रूयमाणं तदतिरिक्तव्यव-ानस्यैव सहनेनादोषात् यत्तु रियतीत्यादौ सत्यपि गुणे ातस्य वहिरङ्गस्यासिद्धत्वादियङादिस्स्यादितितन्न नाजानन्तर्य-ति निषेधात् अयजे इन्द्रमित्यत्र पदसंस्कारपक्षे गुणप्रवृत्ति-मेये दीर्घस्याप्राप्त्या गुणप्रवृत्तेरव्याहतत्वात् नित्यत्वाच्च पवादत्वाद्दीर्घस्तु नवाच्यः यण्गुणशास्त्रीयाच्पदप्रयोज्य-विषयतायास्सवर्णाच्त्वावच्छिन्नविषयतां प्रत्यव्यापकत्वात् त्र सवर्णाच्त्वावच्छिन्नविषयताश्रयाभिन्नवृत्तित्वं स्यादिति र्वेकारस्य तादृशविषयताश्रयाभिन्नत्वेनाचपदेन तस्य ग्रहणे ाधकाभावात् मृद्व्येत्यादावपि क्रामिकान्वाख्यानपक्षे पूर्वयण्-समये तृतीयाया अभावेन परयणोऽप्राप्तेः शब्दपराविप्रतिषेधेन

जातेऽपि परयणादेशे तस्य स्थानिवद्भावेन पूर्वयणः प्रवृत्तेः
नच इउआ एषां समासे परयणादेशे पदान्तविधित्वेन स्था-
निवद्भावाभावेन पूर्वयणादेशो न स्यादित्यन्तरङ्गत्वात्पूर्वं पूर्व-
यणादेश इतिफलमिति वाच्यं जातबहिरङ्गासिद्धत्वे
परयणादेशस्यासिद्धत्वेन पूर्वयणादेशप्राप्तेः न जानन्त
इति निषेधादसिद्धत्वाभावे तु फलं युक्तमेवान्तरङ्गत्वात्पूर्व-
एव पूर्वं प्रवृत्ते र्न्वा इति सिद्धेः यलोपस्तु न परयणो बहिर-
त्वेनासिद्धत्वात् स्थानिवद्भावाच्च यलोप निषेधस्तु न बा-
जादेशस्यैव निषेधविषयत्वात् रुयादित्यादौ प्रकृतिप्रत्यया-
क्षाभ्यामडाड्भ्यामन्तरङ्गत्वाद्यासुडिनितु न फलं परस्मैपदेऽपि
विषयसप्तम्यालावस्थायामेव यासुटः प्रवृत्ते स्तस्य नित्यत्वं
अभवकादित्यत्रानित्यमकच बाधित्वाऽन्तरङ्गत्वादितश्चेति
लोपः पूर्वमकाचि अभवतामितिस्यादितिबोध्यम् कश्च अ-
ईशश्च केशाइत्यत्र नित्यमपि गुणं बाधित्वाऽन्तरङ्गत्वा-
इत्यपिफलम् अपवादत्वाद्दीर्घ इति तु नयुक्तमकारद्वया-
त्तकगुर्णप्रत्यपवादत्वेऽप्यकारेकारानिमित्तकगुणं प्रति तद-
भावात् इच्छतीत्यादौ छत्वे कृतेऽन्तरङ्गत्वात्पूर्वं तुकि लघू-
त्वाभावान्नगुण इत्यपि फलं सम्यगेव, अविभयमित्यत्रभोऽ-
इतिस्थिते परमपि गुणंबाधित्वा श्लुनिमित्तके द्वित्वेऽन्तरङ्ग-
त्वात्पूर्वं कृतेऽभ्यासे इकारश्रवणम् जन् अतीतिस्थिते परम-
पधालोपं बाधित्वाऽन्तरङ्गत्वात् श्लाविति द्वित्वे जज्ञतीति लोप-
पूर्वमलोप द्वित्वानापत्तेरिति दिक् ॥ ५० ॥

नन्वेवमक्षद्यूरित्यादौ वहिरङ्गस्योठोऽसिद्धत्वादन्तरङ्गो यण् न स्यादत आह।

## नाजानन्तर्य्ये वहिष्ट्वप्रक्लृप्तिः॥ ५१॥

अत्र, षत्वतुको [६,१,८६] रिति सूत्रस्थंतुग्ग्रहणं ज्ञापकम्। अन्यथाधीत्य प्रेत्येत्यादौ समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं समासे जाते तत्र सांहिताया नित्यत्वाल्ल्यवुत्पत्तिपर्य्यन्तमप्यसांहितयावस्थानासम्भवेनैकादेशे ल्यापतुगपेक्षया पदद्वयसम्बान्धिवर्णद्वयापेक्षैकादेशस्य वहिरङ्गतया असिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव। पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य वहिरङ्गत्वमिति प्रेद्ध इत्यादौ गुणो वहिरङ्ग इति ग्रन्थेन न धातुलोप [१, १, ४] इति सूत्रे संयोगान्तस्य लोपः [८, २, २३] इति

---

नन्वेवमिति वहिरङ्गपरिभाषायाः स्वीकार इत्यर्थः। अन्तरङ्गोयण न स्यादिति वहिरङ्गत्वेन विवक्षितमुठशास्त्रं तद्घटकाङ्गपदप्रयोज्यविषयताश्रयोदिविति तद्घटकः स्थानिद्वारा उकारस्तन्निष्ठविषयताश्रयोजकमच्यदं तद्घटितत्वेन यणोऽन्तरङ्गत्वमितिभावः षत्वतुकोरासिद्धइत्यस्य षत्वे तुकि च कर्त्तव्ये एकादेशशास्त्रमसिद्धमित्यर्थः समासोत्तरमिति ल्यपस्तन्निमित्तकत्वादितिभावः आधिइत्वा इतिस्थिते समासे तत्र संहिताया

संहितैकपदेनित्येत्यभियुक्तोक्त्या नित्यत्वात् युगपदेकादेशत्वयो प्रवृत्तौ तुकि कर्त्तव्ये एकादेशस्यासिद्धत्वाच्चुग्भवति नाजान्तर्यपरिभाषाया अभावे वहिरङ्गत्वादेकादेशस्यासिद्धत्वेन तुक्सिद्धौ तुक्ग्रहण व्यर्थमदस्या ज्ञापकं ज्ञापितार्थान्तरस्य मञ्जिष्ठल्यवनिरूपितान्तर्यानिमित्तकतुगपक्षेयैकादेशस्य वहिर परिभाषयाऽसिद्धत्वाभावेन तुक्ग्रहणं चरितार्थम् प्रेद्ध इत्याद विति नधातुलोपआर्द्धधातुकइत्यस्य धात्वंशलोपनिमि आर्द्धधातुके सति गुणोनेत्यर्थे प्रेद्ध इत्यादौ धात्वंशनकारलो निमित्ते क्तप्रत्यय रूप आर्द्ध धातुके सति आद्गुणइति गुणो न स्यादित्याशंक्य गुणोवहिरङ्गोनिषेधोन्तरङ्ग इति निषेधस्य सिद्धत्वेनादर्शनान्निषेधोन स्यादिति समाहितं तत्र गुणस्य प द्वयसम्बन्धिवर्णद्वयापेक्षरूपमेववहिरङ्गत्वंभाष्याभिप्रेतामितिभाव तद्भाष्यस्यैकदेशयुक्तत्वेनाप्रामाण्यामीतिचेत्तदाह संयोगान्तलो इति तत्राहि यणः प्रतिषेधेवाच्योन वा वहिरङ्गलक्षणत्वादि त्युक्तम् सुद्ध्युपास्य इत्यादौ यणः पदद्वयसम्बन्धिवर्णद्वयापे त्वेनैव वहिरङ्गत्वं वाच्यामितिभावः ननु वृक्षेछत्रमित्यत्रपदा द्वेतितुकि कर्त्तव्ये एकादेशस्यासिद्धत्वार्थं तुक्चरितार्थन्त्वेक देशस्यान्तरङ्गत्वेन वहिरङ्गपरिभाषयाऽनिर्वाहात् नचासिद्धत्वे ऽपि छेचेति तुक्प्रवृत्त्या न विशेषः इति वाच्यं तथापि वै लिपकत्वासिद्धेरितिचेन्न पदान्तपदाद्योरितिवक्तव्यमितिवार्ति केन पदान्तपदाद्योरेकादेशस्यैव तुक्यासिद्धत्वात् नन्वेवमपि वृक्षस्य इः वृक्षेः तस्य च्छत्रं वृक्षेच्छत्रमित्यादावेकादेशस्य

सूत्रे च भाष्ये स्पष्टम्। यत्तु षत्वग्रहणमपि ज्ञापकम् अन्यथा कोऽसिचदित्यादौ पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्यैकादेशस्यासिद्धत्वेन षत्वाप्रवृत्तौ किं तेनेति तन्न। इणः पूर्वपदसम्बन्धित्वेन षत्वस्यापि पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन उभयोः समत्वात् एकादेशस्य परादिवत्त्वेनासिचदित्यस्य पदत्वेन सस्य पदादित्वाभावान्न सात्पदाद्योः [८, ३, १११] इत्यनेन निषेधः। त्रैपादिकेऽन्तरङ्गे कार्य्यकालपक्षेऽपि बहिरङ्गपरिभाषायाः अप्रवृत्तेः पूर्वमुपपादितत्वाच्च। परिभाषार्थस्तु अचोऽन्यानन्तर्य्यनिमित्तकेऽन्तरङ्गे कर्त्तव्ये जातस्य वहिरङ्गस्य वहिष्ट्वप्रक्लृप्तिर्न। वहिष्पदेन वहिरङ्गम्। तस्य भावो वहिरङ्गत्वं तत्प्रयुक्तासिद्धत्वस्य न प्रक्लृप्तिः, न प्राप्तिरिति। असिद्धं वहिरङ्गमित्युक्त्वा नाजानन्तर्य्ये इति वक्ष्यामीति भाष्योक्त्या तत्रत्यस्यान्तरङ्गे इत्यस्यानुवृत्तिसूचनात्। तेन पचावेदमित्यादौ न दोषः। अन्तरङ्गस्याचूस्थानिककार्यस्यैत्वस्यान्यानन्तर्यनिमित्तत्वाभावात्। जातस्य बहिरङ्गस्येत्युक्त्या अयजे इन्द्रं धियतीत्यादौ बहिरङ्गदीर्घगुणादेरसिद्धत्वम्। अत एव

णङिशीनामाद्गुणःसवर्णदीर्घत्वाच्छेचङन्तस्यान्तरङ्ग
क्षणत्वादित्यादि संगच्छते । अतएव ओमाङोश्च [६,१,
९५] इत्याङ्ग्रहणं चरितार्थम् । ताङ्कि शिव आ
इहीति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्ग

---

तथाभूतस्यासिद्धत्वार्थं तुग्ग्रहणमास्त्विति चेन्न संहि
त्या.दिवन्नचैडः पदान्तात्परोऽरस्तीतिभाष्यात ज्ञापकपरप्रका
भाष्याच्चतस्यानभिधानात् यत्तु षत्वसाहचर्याद्वैकल्पिकतुग्विष
एवासिद्धत्वप्रवृत्तिरित्युक्तन्तदतिरभसात् षत्वस्यवैकल्पि
कत्वायोगात् पदान्ताद्वेतितुकोवैकल्पिकत्वाच्च नित्यतुग्विष
इत्यपि न सम्यक् च्छेचेत्यस्य नित्यस्यापिविषयत्वा
ससत्वात् कोऽसिचादित्यादाविवाति कोइत्येकादेशविशिष्ट
पूर्वान्तवद्भावेन पदत्वमसिचादित्यस्य परादिवद्भावेन सि
दित्येतन्मात्रस्यैकदेशविकृतन्यायेन वा षदत्वादेकपदसम्बन्धि
मिणः द्वितीयपदसम्बन्धित्वं सकारस्येतिषत्वस्यापि पदद्व
सम्बन्धिवर्णद्वयापेक्षत्वमेकादेशस्य तत्वन्तु स्पष्टमेव नचान्त
दिवञ्चेत्यस्य शास्त्रीयकार्ये एव प्रवृत्त्या वहिरङ्गपरिभाषा
अप्रवृत्त्यर्थं कथन्तत्प्रवृत्तिरितिवाच्यं परिभाषाया अप्रवृत्ति
षत्वप्रवृत्त्यर्थत्वेन शास्त्रीयकार्यार्थत्वात् प्रसङ्गात् षत्वग्रहण
चारितार्थ्याय सात्यदाद्योरित्यस्याप्राप्तिरुच्यते असिचादि

स्य पदत्वेनेति तथाचौकारस्य पदादित्वं न तु सकारस्येति न सात्पदाद्योरित्यस्य प्रवृत्तिः नच तदप्रवृत्तेरशास्त्रीयत्वात् त्थं परादिवद्भावः, षत्वनिषेधाप्रवृत्तेः षत्वरूपत्वेन शास्त्रीयत्वात् यत्तु कोइत्यस्य पूर्वान्तवद्भावेन पदत्वेपि उभयतः आश्रयणेनान्तादिवद्भाव इति निषेधेनौसिचादित्यस्य पदत्वाभावात्पदादादिरितिपञ्चमीसमासेन सात्पदाद्योरितिषत्वं निषेधसिद्धिरित्युक्तं तन्न ओसिचादित्यस्य पदत्वेऽपि सकारस्य पदात्परत्वविशिष्टस्यादित्वस्याक्षतेः उभयतआश्रयणइत्यस्य स्वमते अभावाच्च, त्रैपादिकेऽन्तरङ्गइति तथाच न षत्वदृष्ट्यैकादेशस्यासिद्धत्वेनसिद्धिरितिभावः, अनुवृत्तिसूचनादिति. आसिद्धंवहिरङ्गमन्तरङ्गे नाजानन्तर्य्ये इति भाष्योक्तौ नाजानन्तर्य्ये इत्युत्तरार्द्धे पूर्व्वस्यान्तरङ्गइत्यस्यानुवृत्तिरितिभावः तेन, अज्निष्ठान्यानन्तर्य्यं निमित्तकृत्वस्यान्तरङ्गविशेषणत्वेनेत्यर्थः अन्तरङ्गवहिरङ्गयोर्मध्ये कस्याप्यज्निष्ठान्यानन्तर्यविशेषणत्वेतु प्रकृते वाहिरङ्गगुणस्य तथात्वेनासिद्धत्वानापत्तिः, जातस्य वाहिरङ्गस्येति० नन्वेवमधीत्येत्यादावन्तरङ्गानपि विधीन्वहिरङ्गोल्यप् बाधत इति परिभाषयैकादेशात्पूर्वमाधिइत्वेतिस्थिते ल्यपि आधिइयेत्यत्र समकालमेवैकादेशतुकोर्वहिरङ्गान्तरङ्गयोः प्राप्तौ जातवाहिरङ्गाभावेन परिभाषाया अप्राप्तौ तुकः स्वांशे चारितार्थ्याभाव इति चेन्न अन्तरङ्गनिमित्तविनाशकस्यैव ल्यपः प्राबल्यस्य तया बोधनेन प्रकृते ल्यवुत्तरमपि दीर्घप्रवृत्त्या ल्यपस्तन्निमित्तविनाशकत्वाभावेन प्राबल्याबोधनात् अतएव निरेष्य

कार्य्यत्वेनान्तरङ्गत्वाद्गुणे वृद्धिबाधनार्थम् । न चाक्षद्यू त्यत्र याणि कृते ऊठोऽसिद्धत्वाद्वालि लोपापत्तिरिति वाच्यम् अचोऽन्यानन्तर्य्यनिमित्तकेऽन्तरङ्गे कर्त्तव्ये कृते ऽस्मिन् यदन्तरङ्गं प्राप्नोति तत्र कर्त्तव्ये नासिद्धत्वमित्येतदर्थात् असिद्धपरि षाया अनित्यत्वेन तद्वारणे त्वस्या वैयर्थ्यं तेनैव सिद्धे अत एव नलोपः सुप [ ८, २, २ ] इति सूत्रे कृ तुग्ग्रहणं चारितार्थम् । अन्यथा वृत्रहभ्यामित्यादौ

दुरेष्येत्यादौ निर्पूर्वकात् ण्यन्तादिषेः क्त्वाप्रत्यये अनन्त नपीतिन्यायेन ल्यप्प्रयोजकसमासे ल्यपि च गुणात् कृते प्रतिपदोक्तत्वेन गुणात् पूर्वं ल्यपिलघुपूर्वादित्ये णरयादेशे गुणे निरेषय्य दुरेषय्य इति न, ल्यबुत्तरमपि गुणादेशप्रवृत्त्या ल्यपोगुणनिमित्तविनाशक भावेन भावल्याभावादन्तरङ्गत्वाद्गुणे ल्यपि लघुपूर्वकत्वा वेनायादेशाप्राप्तौ णिलोपे निरेष्य दुरेष्येत्यस्यासिद्धिः पराजग्ध्येत्यादौ परा अद्क्त्वा इतिस्थिते ल्यप् देशनिमित्तविनाशकत्वाभावेनाप्राबल्यात् तत्पूर्वं समका वा दीर्घे परादिवद्भावेन जग्ध्यादेशे पर्जग्ध्येतिस्यादिति जग्ध्यादेश द्वारा परंपरया दीर्घनिमित्तविनाशकत्वस्य सत्त्वे दोषात् अतएवेति जातस्यैवासिद्धत्वाभावबोधनादेवैयर्थ्यं

भूतस्याम् निमित्तकपदत्वाश्रयत्वेन वाहिरङ्गतया नलोपस्या सिद्धत्वेन सिद्धे तद्वैयर्थ्यं स्पष्टमेव। मम तु तुक्यजानन्त र्यसत्त्वान्न दोषः। न चैवं सति ह्रस्वस्यपिति [ ६, १, १ ] इति सूत्रस्थभाष्यविरोधः। तत्र हि ग्रामणिपुत्र इत्यत्रेको ह्रस्वोऽङ्यः [ ६, ३, ६१ ] इति ह्रस्वे कृते तुकमाशङ्क्य ह्रस्वस्य बहिरङ्गासिद्धत्वेन समाहितम्। नाजानन्तर्य्यं इत्यस्य सत्त्वे तत्र तदप्राप्तेरसङ्गतिः स्पष्टैवेति वाच्यम्। तेन भाष्येणास्या अनावश्यकत्वबोधनात्। एतज्ज्ञापकेनान्तरङ्गपरिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात्। अत एवाचः परस्मिन् [ १, १, ५७ ] इति सूत्रे भाष्ये पटु ई आ इत्यत्र परयणादेशस्यानयाऽसिद्धत्वात्पूर्वयणादेशः साधितः। अत एवैषा परिभाषा भाष्ये पुनः क्वापि नोल्लिखिता। अत एवान्तरङ्ग परिभाषामुपक्रम्य विप्रतिषेधसूत्रे ऽस्या बहूनि प्रयोजनानि सन्ति तदर्थमेषा परिभाषा कर्त्तव्या प्रतिविधेयं दोषेषु इत्युक्तं सम्प्रसारणाच्च [ ६, १, १०८ ] इति सूत्रे भाष्ये मति विधानं च परिभाषाविषयेऽनित्यत्वाश्रयणमेवेति ध्वनितमित्यलम्॥ ५१॥

सवर्णदीर्घमिति समकालस्थले ऽपि प्रवृत्तावन्तरङ्गपरिभाषा निषेधे परत्वाद्दीर्घे गुणे शिवेहीतिसिद्धौ तद्वैयर्थ्यं स्पष्टमेव ऊठोऽसिद्धत्वादिति वालि लोपापेक्षया बहिरङ्गत्वेनोठोऽसिद्धत्वादितिभावः अस्यावैयर्थ्यमिति, नाजानन्तर्ये परिभाषाया वैयर्थ्यमित्यर्थः, तेनैव अन्तरङ्गपरिभाषा अनित्यत्वेनैवेत्यर्थः अत एव नलोपइति नाजानन्तर्ये परिभाषायास्सत्वादेवेत्यर्थः अन्यथा, अनित्यत्वे प्रवृत्त्यैवेष्टसिद्धौ तद्वैयर्थ्यं स्यादितिभावः ममतु नाजानन्तर्यपरिभाषावादिनस्तु अतएवेति नाजानन्तर्यपरिभाषाया अभावादेवेत्यर्थः नन्वत्र तस्यासत्वे न दोषस्समकालप्राप्तत्वादितिचेन्न परिभाषास्वीकारे जातत्वनिवेशस्तदपेक्षया बहिरङ्गपरिभाषाया अनित्यत्वं सकलातिप्रसङ्गभङ्ग इत्येव युक्तमितिभावः ॥ अत्रेदं बोध्यं ग्रामणिपुत्रइत्यत्र बहिरङ्गपरिभाषया तुग्वारणपरभाष्यं नाजानन्तर्यइतिनास्तीतिकल्प्यते ऽन्यथाऽनया बहिरङ्गपरिभाषया अप्रवृत्त्यापत्या भाष्यासंगतिः तुग्ग्रहणेनच बहिरङ्ग परिभाषाया अनित्यत्वमेवं ज्ञाप्यते तेनैवाक्षद्युरित्यादौ यणवलिलोपाभावौ सिद्धौ रामयोरित्यादावयादेशापेक्षया सिचेत्यस्यासिद्धत्वाभावः रामेणेत्यादौ गुणापेक्षयेनादेशस्या सिद्धत्वाभावश्चसिद्धः शयाते इत्यत्रायादेशापेक्षया बाहिरङ्गस्यापि गुणस्यासिद्धत्वाभावः एषु प्रयोगेषु नाजानन्तर्यपरिभाषया वारणसम्भवेऽपि अयजेइन्द्रमित्यादौ मृद्व्यापद्व्येत्यादावैतरे

अप्रवृत्तये जातबहिरङ्गत्वविषयकत्वमपि वक्तव्यं तदपि गौरवमेव अक्षद्यूरित्यत्र वलिलोपवारणायाजानन्तर्ये अन्तरङ्गे कृते चेत्यर्थान्तरकरणापत्तिश्चस्यात् तथापि दीङ्धातोर्णिचि मीनातीत्यात्वे त्रिचोलोपे शासि आतोधातो रित्याकारलोपे दः अस्य अः आः शासि आलोपे अः पशुं सनोतीतिपशुसाः षनधातोर्विटि विड्वनोरनुनासिकस्या दिति नकारस्यात्वे शसि आलोपे पशुसः यायावरः यातिः इत्याद्यर्थमन्तरङ्गपरिभाषाया अनित्यत्वमपि वक्तव्यमेवान्य- थाऽनैमित्तिकत्वेनान्तरङ्गस्यालोपस्य वलमात्रनिमित्तकत्वेना- न्तरङ्गस्य यलोपस्य च कर्त्तव्ये बहिरङ्गस्यात्वस्याकारलोपस्य चासिद्धत्वेनातोलोपस्य यलोपस्य चाभावापत्तिः नाजानन्तर्य्ये परिभाषया तु न निर्वाहः अन्तरङ्गस्याज्निष्ठान्यानन्तर्य्यनि- मित्तकत्वाभावात् इत्थञ्चावश्याश्रयणीयेनानित्यत्वेनैव सर्वत्र निर्वाहे नाजानन्तर्य्यपरिभाषा नाश्रयणीयेत्येव युक्तमिति तत्त्वम् अनित्यत्वेन बहिरङ्गपरिभाषाया अप्रवृत्तियोग्यानां केषाञ्चित्स्थलानामनुगमरूपैव नाजानन्तर्य्यपरिभाषा ग्रामणि पुत्र इत्यत्र सन्निपातपरिभाषयापि तुग्वारणस्य भाष्ये सत्त्वेन बहिरङ्गपरिभाषया वारणस्य भाष्य कारेणावहेलनात् पशुस इत्यादावननुगतानित्यत्वस्वीकारेऽपि बहुषु स्थलेषु अनुगतानित्यत्वस्वीकारे बाधकाभावात् नासूया तत्र कर्त्तव्या- नवानुगमः क्रियत इत्युक्ते रिति परे ॥ ५१ ॥

नन्वेवं गोमत्प्रिय इत्यादौ पदद्वयनिमित्तकसमा श्रितत्वेन वहिरङ्गं लुकं बाधित्वाऽन्तरङ्गत्वाद्धल्ङ्यादि पे नुमादयः स्युरत आह।

## अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते ५

---

नन्वेवमिति अन्तरङ्गपरिभाषायास्स्वीकार इत्यर्थः बहि लुकमिति ननु गोमत्सु प्रियसु इति दशायां हल्ङ्यादि समये लुकोऽप्राप्त्या वहिरङ्गं लुकं वाधित्वा अन्तरङ्गत्वादि क्तिरसंगता जातस्य समकालप्राप्तस्य वा वहिरङ्गस्यै वासिद्ध बोधनात् नच लुक्पदं तत्प्रयोजकसमासस्योपलक्षक लोपसमकालप्राप्तत्वादिति वाच्यं तस्याप्यन्यपदार्थान्तर्भा वृत्तिकल्पनोत्तरमेव प्रवृत्तेरिति चेन्न प्राप्तिमत्वरूपवहिरङ्गत्व सत्वेनादोषात्, हल्ङ्यादिलोप इति नन्वेतदपेक्षया नुमः पर दिदमयुक्तमितिचेन्न अपरनिमित्तकत्वेन लोपस्यान्त ङ्गत्वात्पूर्वं नुम्यापि दोषस्यैव सत्वेनापाद्यमानेऽर्थे न्याय नादराच्च, नुमादयः स्युरिति ननु पूर्वं नुम्यच उपधात्वाभावे निरवकाशत्वात्पूर्वं दीर्घएव स्यादिति नुमादय इत्ययुक्ता चेन्न उपधापदस्य पूर्वमात्रोपलक्षकत्वेन नुमुत्तरं दीर्घ सावकाशत्वेन परत्वान्नित्यत्वाच्च नुम एव पूर्वप्रवृत्तिरित्याश आपाद्यमाने अर्थे न्यायानादरणाच्च अन्तरङ्गान अपिशब्देन अन्तरङ्गत्वाश्रकस्यान्तरङ्गापेक्षया दुर्बल

नित्ययोर्बाधकत्वं लोकासिद्धं संगृह्यते नत्वपवादबाधकत्वं तस्य निरवकाशत्वेन प्राबल्यात् तेन ह्रः श्वः आदितःमध्यत इत्यादौ परमप्यत्वसन्तस्येतिदीर्घं बाधित्वाऽव्ययादिति लुक्, ब्रह्मिष्ठा- इत्यादौ ब्रह्मन् अस् इष्ठ इति दशायां परमपि टिलोपं बाधित्वा सुपोलुकि अनूरूपटेर्लोपे ब्रह्मिष्ठा इति सिध्यति परस्य लुकाऽबाधे असूरूपटेः परत्वाल्लोपेतस्याभीयासिद्धत्वेन अनूरूपटेः पुनर्लोपाभावे असिद्ध्यापत्तेः सोभना आपोऽस्मिन् तत् स्वप्- कुलमित्यादौ सुपथिवनमित्यादौच प्रतिपदोक्तरूपान्तरङ्गमपि अप्तृन्निति दीर्घं पथिमथीत्यात्वं च बाधित्वा लुक् नन्वपिघटि तपाठे तत् कुलमित्यादौ लुगर्थं कृतस्य त्यदादिभ्यश्चवक्तव्य इतिवार्त्तिकस्य वैयर्थ्यमनेनैव न्यायेन परमपित्यदाद्यत्वं बाधित्वा स्वमोर्नपुंसकादित्यनेन लुकासिद्धेः आपिघाटितपाठा- भावेतु अत्वस्यान्तरङ्गत्वाभावेन न्यायेन तद्बाधासिद्धे- र्वार्त्तिकं सार्थकम् एवं लुकः परबाधकत्वे भवतादित्यादौ- परमपितातङादेशं बाधित्वा अतोहेरितिलुक् स्यादिति चेन्न तत् कुलमित्यादौ उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनामयोऽप्यापवा दशास्त्रप्रवृत्तिसंभावनायां पूर्वमुत्सर्गशास्त्रं न प्रवर्त्तत इत्य- र्थकोपसंजनिष्यमाणनिमित्तन्यायेन लुकोऽप्रवृत्त्या वार्त्तिक- स्यावश्यकत्वात् यदि पूर्वं लुक् न स्यात्तर्हि त्यदाद्यत्वे अतोऽ मिति स्यादितिसंभावनायाः प्रकृते सत्वात् भवतादित्यादौ लुकोऽअन्तरङ्गमात्रबाधकत्वेऽप्यनिमित्तकत्वेनतातङोऽन्तरङ्ग त्वात् मकारान्तरेणैवोभयोस्समाधेत्वेनादोषात् कोऽसौ प्रकार

अत्र च प्रत्ययोत्तरपदयोश्च [ ७; २, ९८ ] इति सूत्रं ज्ञापकम् । त्वत्कृतमित्यादौ लुगपेक्षयान्तरङ्गत्वाद्विभक्तिनिमित्तकेन त्वमावेकवचने ( ७, २, ९७ ) इत्यनेन सिद्धे इदं व्यर्थं सदेतज्ज्ञापकम् । ननु तव पुत्रस्त्वत्पुत्र इत्यादौ तवममादिबाधनार्थं तदावश्यकमिति चेत् । एवं तर्ह्यन्त्यमपर्य्यन्तग्रहणानुवृत्तिरेवैतज्ज्ञापिकेति भाष्यकृतः । युष्मदादिभ्य आचार्य...

---

इतिचेत् ज्ञापकासिद्धन्न सर्वत्रेतिगृहाण अत्रचेति प्रकृतपरिभाषायामित्यर्थः ( लुगपेक्षयाऽन्तरङ्गत्वादिति ) लुकः प्रत्ययापेक्षसमाससापेक्षत्वात् त्वमयोः पूर्वपदमात्रापेक्षत्वादितिभावः तवममादिबाधनार्थमिति त्वत्पुत्रइत्यादौ तवममौ, त्वदि... मित्यादौ तुभ्यमह्यौ च त्वमावेकबचनइत्यस्यानिरवकाशत्वात् बाधकौ प्राप्तौ तेषां बाधनार्थं प्रत्ययोत्तरपदयोश्चे... चरितार्थमित्यर्थः ननु समासात्प्रागेवालौकिकप्रक्रियावाक्ये युष्मद् अस् अस्मद् असित्यादौ बाधकस्यापि प्रत्ययो... त्तरपदयोश्चेतिसूत्रस्य विभक्त्या व्यवधानेनाप्राप्त्या तवमा... दिप्रवृत्तिरव्याहतैव ननु विभक्तेरपि प्रत्ययत्वात्तामादाय प्रत्ययोत्तरपदयोरितिसूत्रं प्रवर्त्ततेति वाच्यमुत्तरपदसाहचर्याद् वृत्तिचरमावयवप्रत्ययस्यैव ग्रहणेन विभक्तिमादाय प्र... सम्भवात् अन्यथा त्वया मयेत्यादावप्यनेनैवात्वसिद्धे...

त्वमावेकवचनमित्यस्य वैयर्थ्यापत्ते रिति चेन्न उपसंजनिष्यमाणनिमित्तोऽप्यपवादउपसंजातनिमित्तमप्युत्सर्गंबाधत इति न्यायेन प्रक्रियादशायामपि प्रत्ययोत्तरपदयोश्चेत्यस्य त्वमादिबाधकत्वसम्भवात् अस्तिहि यदि त्वमादिशास्त्रं न प्रवर्तेत तर्हि समासे सुब्लुकि प्रत्ययोत्तरपदयोश्चेतिसूत्रं प्रवर्त्तेतेतिसम्भावना नच सामर्थ्यादेव तन्न्यायमाश्रित्य त्वमादिबाधकत्वं वक्तव्यं ततोवरं परिभाषाकल्पनं तथा सतिहि न साक्षाच्छास्त्रबाध इति वाच्यम् दधतीत्यादौ अदभ्यस्तादित्यादिना तथाबाधस्य क्लृप्ततया तदाश्रयणेनैव चारितार्थ्यसम्भवे अक्लृप्तपरिभाषाकल्पनाया अन्याय्यत्वात् नच त्वममादिबाधमात्रप्रयोजनकत्वे त्वममौङस्यवृत्तावित्येव वक्तव्यं तावतैव त्वत्पुत्रइत्यादौ त्वादीनामप्राप्त्या त्वमावेकवचन इत्यनेनैव सिद्धेरिदं सूत्रं व्यर्थं सदस्या ज्ञापकमिति वाच्य माक्रोशविवक्षायां षष्ठ्याआक्रोश इत्यलुकि त्वपुत्र इतिवृत्तौ त्वादेशानापत्तेः सूत्रसत्वे विभक्त्या व्यवधानेन त्वादेशस्य सुलभत्वाच्च नच त्वममौङस्यलुकीत्येवास्तु लुक्विषयेनेत्यर्थेनोक्तदोषाभावादितिवाच्यं त्वसुन्दरः पुत्रोयस्येति त्रिपदबहुव्रीहौ मध्यमपदेन व्यवधानादुत्तरपदपरत्वाभावेन सूत्राप्राप्त्या परिभाषाया इदानीमभावेन ङस्परे त्वादेशप्रवृत्त रलुक्यप्रवृत्त्या फलभेदात् नच ज्ञापकसाजात्येन सप्तम्य न्तस्यैव व्यधिकरणबहुव्रीहिर्न षष्ठ्यन्तस्येति वाच्य मसतिबाधके

प्रमाणानां सामान्ये पक्षपात इतिन्यायाद्बाधकबाधनार्थत्व-कथनपरभाष्याच्च व्यधिकरणबहुव्रीहिसामान्यस्य कल्पनाच्च नच सूत्रं मपर्यन्तानुवृत्तिर्वा न ज्ञापिते चारितार्थं त्वमावे-कवचनइत्यत्र विभक्तेरननुवृत्त्यैव त्वत्कृतमित्यादौ, परिभाषया पूर्वमेव ङसोलुकि बाधकस्यापि त्वममादेशशास्त्रस्याप्रवृत्त्या त्वत्पुत्रइत्यादौच त्वमादेशसिद्धेरिति वाच्यम् त्वं सुन्दरः पुत्रो-यस्येतित्रिपदबहुव्रीहौयुष्मत्सुन्दरपुत्रइत्यादौ त्वमादेशापत्ते-स्सिद्धान्तेतु विभक्तिपरत्वाभावेन त्वमावेकवचनइत्यस्य मध्यमपदेन व्यवधानादुत्तरपदपरत्वाभावेन प्रत्ययोत्तरपद-योश्चेतिसूत्रस्य चाप्रवृत्त्या दोषाभावात् मपर्यन्तानुवृत्ति-स्तज्ज्ञापिकेति युष्मदस्मद्भ्यामाचाराक्किपि आचक्षाणणिचि विभक्तिपरत्वाभावेन त्वमावेकवचनइत्यस्याप्रवृत्त्या प्रत्यय-निमित्तकत्वमादेशाय प्रत्ययांशे चारितार्थ्येन तदंशे अ-वादत्वाभावेन हृदयस्थोत्सर्गसमानदेशा इतिन्यायस्याभावेन तत्रसर्वादेशवारणाय मपर्यन्तानुवृत्तेश्चारितार्थ्यान्न ज्ञापकत्व-मित्यतआह युष्मदादिभ्यइत्यादि संपूर्णसूत्रज्ञापकतापरभाष्यप्रा-माण्यादिति नन्विदं नयुक्तं संपूर्णसूत्रज्ञापकताया बाधक-बाधनार्थत्वव्यवस्थापनेन खण्डितत्वात् तत्खण्डनेऽत्रचारिता-र्थ्यमपि हेतुरिति चेन्न तद्भाष्यघटितघटकमपर्यन्तानुवृत्ति-ज्ञापकतापरभाष्यप्रामाण्यादित्यर्थे ग्रन्थकर्तुस्तात्पर्यात्

तु न सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्यात् ह्रस्वना द्याप [७, १, ५४ इति नुड्विधायकसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचाराक्विबभावाच्च। एवमेवैकार्थकाभ्यां प्रातिपदिकप्रकृतिकणिचोऽपि अनभिधानं बोध्यम्। एतेन तत्रादेशार्थं प्रत्ययग्रहणं चरितार्थमित्यपास्तम्। ननु मपर्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरितार्था। न चोत्सर्गसमानदेशा अपवादा इति न्यायेनासिद्धवत्सूत्रस्थभाष्यसम्मतेन

---

नुड्विधायकसूत्रस्थेति तत्रहि काश्प्रत्ययादितिविहितस्यामोनुट्कस्मान्नेत्याशंक्याकारानुबन्धेन सानुबन्धकत्वान्निरनुबन्धकग्रहणे न सानुबन्धकस्येति समाधायोक्तं तह्यकारानुबन्धः कर्त्तव्योऽवश्यंकर्त्तव्योन्यथा मकारस्येत्संज्ञापत्तिर्बेत्संज्ञकत्वे मकारोच्चारणं व्यर्थं नच मिदचोऽन्त्यात्पर इत्यस्य प्रवृत्त्यर्थं, काश्धातोर्विधीयमानस्यामोन्त्यादचः परत्वे फलाभावात्प्रत्ययान्ताद्विधीयमानस्यान्त्यादचः परत्वे परश्चेत्यनेन प्रत्ययपरत्वे वा विशेषाभावादितिमकारोच्चारणसामर्थ्यान्नेत्संज्ञेत्यर्थकं भाष्यमुक्तं हलन्तेभ्योयुष्मदादिशब्देभ्य आचाराक्विबन्तेभ्यआमि प्रत्ययपरत्वे ऽन्त्यादचः परत्वे विशेषसम्भवेन भाष्यासङ्गत्या हलन्तेभ्य आचारक्विपोऽन-

भिधानमितिबोध्यम् एवमेकार्थकाभ्यां प्रातिपदिकप्रकृतिक-णिचाऽप्यनभिधानमिति, ज्ञापकतापरभाष्यप्रामाण्यादिति शेषः, नच मपर्यन्तस्येतिसूत्रे परिग्रहणाभावे यत्रैव मान्ते युष्मदस्मदी तत्रैव स्यात् क्वच मान्ते युष्मयतेरस्मयतेरप्रत्यय इति भाष्ये युष्मदस्मच्छब्दाभ्यां णिच उक्तत्वादिदम-सङ्गतमितिवाच्यम् तद्भाष्यस्य बहुत्वार्थकयुष्मदस्म-च्छब्दाविषयकत्वेन तद्विरोधाभावात् वस्तुतस्तु प्रत्ययोत्तरपदयोश्चेत्यत्र विभक्तावित्यनुवर्त्य प्रत्ययोत्तर-पदयोर्याविभक्तिस्तदव्यवहितपूर्वयोर्युष्मदस्मदोस्त्वमावित्यर्थः कर्त्तव्य स्त्वत्पुत्रः त्वदीय इत्यत्रालौकिकप्रक्रियावाक्ये लुक् प्रागेव सामर्थ्यात् प्रवर्त्तते नच आक्रोशे विवक्षिते षष्ठ्याआक्रोशे इत्यलुकि तवपुत्र इत्यादौ चारितार्थ्ये त्वत्पुत्रइत्यादौ पूर्वं लुकि नलुमताङ्गस्येतिनिषेधेन प्रत्यय-लक्षणाप्रवृत्तौ विभक्तिपरत्वाभावेनादेशो न स्यादिति वाच्यम् एकत्रद्वयमितिरीत्या युष्मदस्मदोरेव प्रत्ययोत्तरपदयोर्ये सम्बन्धेन विभक्त्यव्यवहितपूर्वयो स्सतोःप्रत्ययाव्यवहितपूर्वयो रुत्तरपदाव्यवहितपूर्वयोर्युष्मदस्मदोस्त्वमावित्यर्थे आक्रोशे अलुकि विभक्त्या व्यवधानादप्राप्त्या सामर्थ्यात् नलुमताङ्ग-निषेधाप्रवृत्त्या प्रत्ययलक्षणेन त्वत्पुत्रइत्यादौ दोषाभावात् नच विभक्त्या व्यवधानादुत्तरपदपरत्वासम्भवः शास्त्रा-प्रवृत्तये प्रत्ययलक्षणाप्रवृत्तेः, युष्मदस्मदोराचारक्विबन्ते णिचि वा प्रत्ययाव्यवहितपूर्वत्वे पि विभक्त्यव्यवहि-

मपर्यन्तस्यैवादेशेसिद्धे तदनुवृत्तिर्व्यर्थेति वाच्यम् । तस्य श्नमकृजा शौ व्यभिचारादिति चेत् न । श्नमि त्वेन श्रहुचि पुरस्ताद्ग्रहणेनाकचि प्राक्टेर्ग्रहणेन तस्य बाधेऽपि अत्रोत्सर्गस्य त्यागे मानाभावात् । अत एव तस्मिन्नणि च [४,३,२] इत्यनेन युष्माकाद्यादेश-विधानं चरितार्थम् । अन्यथा आकङादेशमेव विदध्यात । आकङि तवकाद्यादेशयोरेतदपवादयोरुक्तन्यायेनान्त्यादे-शत्वापत्ति रतस्तद्विधानमिदमेव च तज्ज्ञापकम् । यद्यपि विरोधे बाधकत्वमिति वार्त्तिकमतेऽयं न्यायो

---

पूर्वत्वाभावेनादेशाप्राप्त्या ऽनभिधाने प्रमाणाभाव इति बोध्यम् विभक्तावित्यस्याननुवृत्तौ तु प्रत्ययपदेनप्रत्ययमात्रस्य ग्रहणेन त्वमावेकवचने प्रत्ययोत्तरपदयोरित्येकवाक्यकरणे-नैवसिद्धेवाक्यभेदोव्यर्थस्स्यादितिबोध्यम् नचास्तु एकवाक्यता मांस्तु विभक्तावित्यस्यानुवृत्तिः प्रत्य यपदञ्च प्रत्ययत्वावच्छिन्नबोधकमस्त्विति वाच्यम् आचारक्विबादावा-देशापत्ते राचारक्विपो ऽनभिधाने ऽपि णिचोऽनभिधाने मानाभावात् युष्मयते रितिभाष्यमपि स्वरसत एव तथा सति मगच्छेत इतिपरं, तदनुवृत्तावीति मपर्यन्तानुवृत्तिरित्यर्थः श्नम श्मादाविति. श्नम् शपोऽपवादोऽपि अन्त्याचः परा-

भवति शप् तु धातोः परः अकच् तु प्राग्भवति कस्तु प्रातिपदिकात् पर इति समानदेशत्वस्य व्यभिचारः मानाभावादिति मित्वादिरूपविशेषकारणवलाच्च तत्रोत्सर्गसमानदेशा इति न्यायस्य बाधेऽपि ततोऽन्यत्राप्रवृत्तौ मानाभावादित्यर्थः नचास्ति बाधके प्रमाणानां सामान्ये पक्षपात इति न्यायेनात्र शास्त्रे उत्सर्गसमानदेशा इति न्यायाभाव एव मित्वादिनाकिञ्च कल्प्यत इति वाच्यं सपर्यन्तानुवृत्तिज्ञापकतापरभाष्यस्यैव बाधकत्वात् । युष्माकास्माकादेशौ तन्न्यायसत्त्वे एव चारितार्थौ सामान्यतः तदभावकल्पने बाधकावित्याह अत एवेति उत्सर्गसमानदेशा इति न्यायसत्त्वादेवेत्यर्थः तस्मिन्नणि च युष्माकास्माकाविति युवयोर्युष्माकं वा अयं यौष्माक यौष्माकीण इत्यादावणि खञि च युष्मदस्मदोः युष्माकास्माकावादेशौ भवतः तवकीनः तावकः मामकीनः मामकः इत्यत्र तवकममकावेकवचन इतिसूत्रेण युष्माकास्माकयोर्द्वित्वबहुत्वविवक्षायां सावकाशयोरेकत्वविवक्षायां बाधकौ तवकममकौ भवतः यदि चाकङादेशमेव विदध्यात् तर्हि डित्त्वादन्त्यदकारस्यादेशे यौष्माक इत्यादेस्सिद्धावपि उत्सर्गसमानदेशा अपवादा इति न्यायेनाकङादेशस्यापवादभूतौ तवकममकादेशावप्यन्तस्यैव स्यातामिति तावक इत्यादेरसिद्ध्यापत्तेरतो युष्माकास्माकावादेशौ कृतौ तन्न्यायाभावे तु तवकादेः सर्वादेशत्वे दोषाभावात्तौ व्यर्थावित्युक्तम्

ज्ञापकाधिति भावः ननु उत्सर्गसमानेति न्यायज्ञापनात्पूर्वं पर्यन्तानुवृत्तिवैयर्थ्याभावेनान्तरङ्गानपीतिन्यायाभावेन युव-योरयमितिविग्रहे युष्मद्‌ओसीन इतिस्थिते विभक्ति-व्यवधानेन युष्माकादेशाप्रवृत्त्या ऽन्तरङ्गत्वाद्विभक्तिनिमित्तक-युवादेशे विभक्तिलुकि स्थानिवद्भावेन युष्माकादेशे यौष्मा-कीणः आकङित्तु यौवाकीन इति फलभेदात्कथं ज्ञापकमेवं फलभेदाभावे युष्माकादेशस्य वैयर्थ्यं वैयर्थ्ये न्यायः न्याये पर्यन्तानुवृत्तिवैयर्थ्यं वैयर्थ्येचान्तरङ्गानपीतिन्यायः न्याये च विभक्तिलुक्युवादेशाभावे आकङादेशेन सिद्धे फल-भेदाभावाद्वैयर्थ्यमितिचक्रकापत्तिरिति चेदत्रोच्यते स्वार्थे परिपूर्णं पदमर्थान्तरेऽभिसम्बध्यत इति न्यायेन स्वार्थोपस्थित्युत्तरमेव वहिर्भूतापत्याद्यर्थसम्बन्धेनान्तरङ्ग-त्वात्स्वार्थनिमित्तकविभक्तेरेवपूर्वमुत्पत्ति स्ततश्च विभक्त्याव्यवधाना त्प्रातिपदिकाव्यवहितोत्तरत्व विशिष्ट तद्धितो ऽनुपपन्न स्तथाच पूर्वाह्णेत्तर इत्यादौ तरव्यवहितपूर्वत्वविशिष्टसप्तम्यभावेन घसंज्ञकनिमित्तक सप्तम्यलुग्विधायककालतने त्यस्य वैयर्थ्यात् तद्धितनिष्ठ-विधेयतानिरूपितोद्देश्यतावच्छेदक धर्मावच्छिन्नोद्देश्यताक-कार्यैकत्वे विभक्ते रविद्यमानवद्भावः कल्प्यते साच विभक्ति स्तद्धितपरकत्वेन सम्भाविता गृह्यते धर्मिग्रा-हकमानात् तथाच तद्धितनिष्ठविधेयतानिरूपितोद्देश्यतावच्छे-दकं प्रातिपदिकत्वं तदवच्छिन्नोद्देश्यताक तद्धितप्रत्ययरूप

कार्य तत्र कर्त्तव्ये विभक्तेः रविद्यमानत्वा द्विभक्तिव्यव
धाने पि तद्धितोत्पत्त्या औपगवादिसिद्धिः लुग्विधाव
श्च चरित र्थमेवच्च तद्धितनिष्ठविधेयतानिरूपितोद्देश्यता
च्छेदकं युष्मच्छब्दत्व मस्मच्छब्दत्वं तदवच्छिन्नोद्देश
ताकं युवावौद्विवचन मितिसूत्र तस्मिन कर्त्तव्ये अन्तर्वि
भक्तेः रविद्यमानवद्भावान्नयौष्माकीण इत्यादौ युवावा
स्तद्धितपरत्वेन सम्भावितत्वस्य दानीं नयुवयो रित्यादे
रविद्यमानवद्भाव स्तथाच नफलभेद इतिबोध्यम् ननं
मकाचि युष्मकादिति स्थिते अकज्विषये नायंन्या
इत्युक्ते स्साकचोयुष्माकादेशे यौष्माकीणः दकारा
काङि यौष्मकाकीणः इति फलभेद इति
अनाप्यक इति धर्मिग्राहकमानेन साकचकानपहारके नि
श्यमानपरिभाषा नप्रवर्तते इत्येवकल्प्यते युष्माकादेशश्च
स्थेति तत्र न्यायप्रवृत्त्या न साकचो युष्माकादेश इति त
न तावतापि युष्माकादेशाप्रवृत्ते रकङादेशस्य साकचो
हारकत्वेन प्रवृत्त्या फलभेदस्य तदवस्थत्वात् अत्र
धर्मिग्राहकमानादिदमूशब्द एवाकज्विषये नायं
इतिकल्पनेन युष्माकादेशस्या कङादेशस्य चा निर्दिश्य
साकाचि प्रवृत्त्यभावेन फलभेदाभावो त एव भिन्नर्कति
काचि धित्वं नप्राप्नोतीति भाष्य मुपपन्नं सा
निर्दिश्यमानत्वाभावात् किमः क इत्यस्या
काकाः साकचः कादेश इत्यर्थकशब्देन्दुशेखरो

त्याहु स्तद्विन परमयुवकाभ्यामित्यादौ कृताकचा समासे त्वादेशानापत्तेः सामान्यतो ऽकाज्विषये निर्दिश्यमानपरिभाषाया अप्रवृत्तेरेव कल्पनात् भिन्धकीत्यत्रेतिभाष्यादिविरोधस्तु परिहृतः पूर्वम्, अत्र गुरुचरणाः युष्मदस्मदवयव ककारात्परस्यौकआदेश इत्यर्थक मादाक इति न्यासेनैव सिद्धौ युष्माकास्माकादेशयो र्वैयर्थ्येन ज्ञापकत्वं बोध्यं साकचो ऽपि पक्षद्वयेपि यौष्माक इत्यादिसिद्धे रित्याहुः नन्वजादेर्द्वितीयस्येत्यस्यैकाचोद्वे प्रथमस्येत्येतदपवादत्वेऽपि तत्समान देशत्वाभावेन नात्र शास्त्रे उत्सर्गसमानदेशा इति न्यायाश्रयणमितिचेन्न मपर्यन्तानुवृत्तिज्ञापकतापरभाष्यप्रामाण्येन तन्न्यायस्यावश्याश्रयणीयत्वात् उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकाधिकरणपर्याप्तोद्देश्यत्तावच्छेदककत्वं यत्रापवादशास्त्रे तद्विषयकत्वस्य धर्म्मिग्राहकमानेन न्याये कल्पनेनादोषात् उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकप्रथमैकाच्त्वाधिकरणपर्याप्तत्वस्य द्वितीयैकाच्त्वेऽभावात्, इदमेव च तज्ज्ञापकमिति युष्माकास्माकादेशविधानमेवोत्सर्गसमानदेशा अपवादा इत्ये तज्ज्ञापकमित्यर्थः। विरोधे बाधकत्वमिति एकस्य द्विकार्ययोगरूपविरोध इत्यर्थः। अयन्न्याय इति उत्सर्गसमानदेशा अपवादाइत्यर्थः। विनापिविरोधमिति एकस्यद्विकार्ययुक्तत्वरूपविरोधम्विनापीत्यर्थः सत्यपि सम्भव इति उक्तविरोधाभावेऽपीत्यर्थः। अतएव भवेदित्यादावियादेशस्य परदीर्घबाधकत्वं द्वितियैकाचोद्विर्व-

भाष्यकारस्तु विनापि विरोधं सत्यपि सम्भवे बाधकत्वमि-च्छतीत्यनभिहितसूत्रस्थकैयटरीत्या नायं नियमस्तथा युष्माकाद्यादेशविधानज्ञापित उत्सर्गः स्वीक्रियत एवे प्रकृते न दोषः । एतद्भाष्यमपि तत्स्वीकारे मानम् एवं च मपर्यन्तानुवृत्तिस्त्वत्कृतमित्यादौ मपर्यन्तस्यादे विधानार्था । तत्र चान्तरङ्गत्वात्त्वमौ [७,२,९७] इत्ये सिद्धे व्यर्था सैतज्ज्ञापिका । ज्ञापिते त्वस्मिन्नेतदि-तवादीनामप्राप्त्या तदपवादत्वाभावेन मपर्य्यन्तस्यै देशार्थं सा चरितार्थेति तदाशयः यत्तु हरदत्तेनान्त प्रवृत्तौ प्रत्यय उत्तरपदे च मपर्य्यन्तासम्भवेन तद्

नं प्रथमैकाचोद्विर्वचनस्य बाधकं सर्वेषामित्यादौ सुटोनुड्बाध त्वम्, तायान्नियमइति फलितोनास्तीत्यर्थः तथाऽपीति फलि त्वाभावेऽपीत्यर्थः उत्सर्गइति उत्सर्गसमानदेशा अपवादाइत्ये स्वीक्रियतएवेति भवेदित्यादौ व्यभिचारवारणन्तूक्तरीत्यावे प्रकृते नदोषइति न मपर्यन्तानुवृत्तेर्ज्ञापकत्वासङ्गतिरित्यर्थः ए द्भाष्यमपीति मपर्यन्तानुवृत्तिज्ञापकतापरभाष्यमपीत्यर्थः अ शब्दाद्युष्माकाद्यादेशः एवञ्चेति उत्सर्गसमानदेशा इत्यस्य स्वी कारे चेत्यर्थः त्वत्कृतमित्यादाविति पूर्वं विभक्तिलुकि त्वमा स्यस्याप्रवृत्तेरितिभावः अन्तरङ्गप्रवृत्ताविति तवममयोः

त्र्यर्था सती ज्ञापिकेत्युक्तं तन्न अन्तरङ्गाणामप्यपवाद्बाध्यत्वेन तद्विषये तदप्रवृत्तेः वस्तुत इदं ज्ञापकं वार्त्तिकरीत्यैव भाष्यरीत्या तु वाचनिक एवायमर्थ इत्याहुः इयं सुपो धातु [२,४,७१] इति लुग्विषयैवेति केचित् एङ्ह्रस्वात्सम्बुद्धेः (६,१,६९) न यासयोः [७,३,४५]

---

चावित्यर्थः त्र्यर्थासतीति तवादेशे मपर्यन्तासम्भवात् ममादेशे व्यावर्त्याभावाच्चेतिभावः तद्विषये तदप्रवृत्तेरिति मत्पर्थोत्तरपदयोश्चेत्येतद्विषये तवममौङसीत्यस्याप्रवृत्तेरित्यर्थः, युष्माकास्माकादेशविधानं नज्ञापकं ज्ञापितेऽपिस्वांशेचारितार्थ्याभावात् तस्मिन्नाणिचाकङ्नेकवचन इति न्यासेनैव सिद्धेरिति न युक्तं, यथास्थितन्यासापेक्षयाऽस्यन्यासस्यालघुत्वात् वस्तुतइति वार्त्तिकमते एकस्यद्विकार्य योगरूपविरोध एव बाध्यबाधकभावादुत्सर्गसमानदेशा इत्यस्यफलितत्वेऽपि भाष्यमते तादृशविरोधाभावेऽपि बाध्यबाधकभावाभ्युपगमेन फलितत्वाभाव इति यदिचोक्तन्यासस्य गुरुत्वान्नतेन स्वांशे चारितार्थ्याभाव इति विभाव्यते तर्हि ज्ञापकसिद्धएवायमन्तरङ्गानपीति न्यायः अतएव भवतादित्यत्रानेन न्यायेन तातङादेशंबाधित्वा टिलोपमाशंक्य ज्ञापकासिद्धस्यासार्वत्रिकत्वेन समाहितं शब्देन्दुशेखरे अतएवारुचेराहुरित्युक्तम् इयं सुपोधात्विति । तत्संग्राहकमानादितितद्भावः आकरेति भाष्यकैयटस्वरसः तथाच ज्ञापकं सामान्यापेक्षमेवेति बोध्यम् अनेन

इति सूत्रस्थाकारप्रामाण्येन लुङ्मात्रविषया। आद्ये तु त्रपु इत्यादावनेन न्यायेन लोपं बाधित्वा लुग्भवतीति भाष्ये उक्तम् । अन्त्येऽन्तरङ्गांश्च विधीन् सर्वानपि लुग्बाधते न तु सुब्लुगेव । अत एव सनीस्रंस इत्यादौ न लोपो न भवति । पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादावेकादेशात् प्रागेव टापो लुक् । अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यादिति कैयट उक्तम्

---

न्यायेनेति अन्तरङ्गानपीतिन्यायेनेत्यर्थः एतद्भाष्यमप्यपिशब्दघटितपाठे मानम् अतएव सनीस्रंस इति, अन्तरङ्गमपि, नलोपमनेन न्यायेन बाधित्वाऽचियङोलुक् ततोनलुमतेति निषेधान्न लोपोनेत्यर्थः अन्यथेति सुब्लुकएवबलवत्त्वबोधने इत्यर्थः एकादेशस्येति अस्य अन्तरङ्गत्वादित्यादिः एतद्विरोधादिति प्रदर्शितेन टाब्लुकोबलवत्त्वबोधनतात्पर्यकेण कैयटेन विरोधादित्यर्थः, लुग्नस्यादिति अयम्भावः तद्राजस्यबहुषुतेनैवास्त्रियामितिसूत्रस्य बहुष्वर्थेषु विद्यमानस्य तद्राजसंज्ञकप्रत्ययस्य लुक् तदर्थकृतेबहुत्वे नतु स्त्रियामित्यर्थः तत्र बहुषु इत्यस्य बहुवचने परे इत्यर्थे भाष्यकारेणोक्तं अङ्गान् अतिक्रान्तोऽत्यङ्ग इत्यत्र पदावधिकान्वाख्याने अति सु अङ्ग अण् अस् इति स्थितौ तद्राजलुक एकपदापेक्षत्वेनान्तरङ्गत्वम् अपरानिमित्तकत्वेन सामासिकलुकोऽप्यन्तरङ्गत्वमित्यन्तरङ्गत्वे समाने परत्वात्सामा

एतद्विरोधात्तद्राजस्य [ २,४,६२ ] इति सूत्रे कैयटे- नोक्तमङ्गानतिक्रान्तोऽत्यङ्ग इत्यत्र सुपो लुकि बहुवचन- परत्वाभावात् तद्राजस्येति लुङ् न स्यादिति शङ्कापरभा- ष्यव्याख्यावसरेऽन्तरङ्गानपीति न्यायेनायं लुक् सुब्लुको बाधकः स्यादित्याशङ्क्य सुब्लुक एवानेन बलवत्त्वं बो- ध्यत इति तत् प्रौढ्येति द्रष्टव्यम् । लुगपेक्षया लुको बलवत्त्वस्य वक्तुमशक्यत्वादिति तदाशङ्कासमाधानं व क्तुं युक्तम् । अनेन न्यायेनान्तरङ्गनिमित्तविनाशकलु- कस्तत्प्रयोजकसमासादीनां च प्राबल्यं बोध्यत इति अ- न्यत्र विस्तरः ॥५२॥

---

सिक्लुकि नलुमतेतिनिषेधेन प्रत्ययलक्षणाभावेन बहुवचन- परत्वाभावात्तद्राजलुग्नस्यादिति तत्र कैयटेन इदमाशङ्कितम् अन्तरङ्गानपीत्यादि अयंलुगिति तद्राजलुगित्यर्थः तथाच बहुवचनेपरे इत्यर्थेऽपि नदोष इति भावः पुनस्तेनैवसमाहितं सुब्लुकएवेति, नतु लुग्मात्रस्येत्यर्थः धर्म्मिग्राहकमानादिति- तद्भावः, इयमुक्तिः पूर्वोक्तात् पञ्चखट्वइत्यत्रत्यकैयटाद्विरुद्धा अतएवायं प्रौढिवादः तदेतदुच्यते प्रौढ्येति अशुद्धमितियावत् नन्वेतत्समाधानस्यायुक्तत्वे शंका तिष्ठत्येव कैयटस्य, तस्याः किं समाधानमितिचेदाह नागेशः लुगपेक्षयेति, धर्म्मिग्राहक मानात् लुगितरकार्यापेक्षयैव लुकोबलवत्त्वमनय । बाध्यते नतुलुग

नन्वेवं सौमेन्द्रेऽन्तरङ्गत्वादाद्गुणे पूर्वपदात् परेन्द्रश-ब्दाभावेन नेन्द्रस्य [ ७,३,२२ ] इति वृद्धिनिषेधे व्यर्थः । अन्तादिवद्भावस्तूभयत आश्रयणे निषिद्धः । किञ्च वृद्धिरप्यत्र न प्राप्नोत्यन्तादिवत्त्वोभयाभावेऽपि पूर्वान्तवत्त्वेनैकादेशविशिष्टे पूर्वपदत्वेन न्द्रशब्दस्यैकदेश

---

पेक्षयापीति तद्भावः अन्तरङ्गनिमित्तविनाशकस्यैव लुकोबलवत्त्व-मित्यस्य वक्ष्यमाणत्वात् तद्राजलुकस्मामासिकलुग्निमित्तविनाश-कत्वाभावेन लुगपेक्षया सामासिकलुगपेक्षया लुक् तद्राजलुकः बलवत्त्वमशक्यं वक्तुमित्यर्थ इति परं, तदाशंका समाधानमिति तस्य कैयटस्य आशंकायाः समाधानमित्यर्थः अनेन न्यायेनेत्यादि तत् फलमणुहि इत्यत्र तानादिकात् धातोर्लोटस्सिपोह्यादेशे मध्ये उप्रत्यये तन्निमित्तकगुणात् श्रुतश्चश्नत्ययादसंयोगपूर्वादित्यनेन हेर्लुगनेनन्यायेन न तत्र लुको गुणनिमित्तविनाशकत्वाभावात् अन्तरङ्गत्वाद्गुणे कृते तु असंयोगपूर्वत्वाभावान्न हेर्लुगित्ति बोध्यम् ननु गोमतिप्रिय इत्यादौ समासोत्तरं लुकः प्रवृत्त्या समासात् प्रातिपदिकत्वाबै-कपदापेक्षत्वेनान्तरङ्गत्वाद्धल्ङ्यादिलोपः पूर्वं कस्मान्ने-त्यत आह तत्प्रयोजकसमासादीनाञ्चेति आदिना प्राति-पादिकत्वस्येति दिक् ॥ ५२ ॥

पूर्वपदात्परेन्द्रशब्दाभावेनेति सौमेन्द्रशब्दोयस्समासे गुणे

पूर्वपदस्य सोमशब्दस्येन्द्रशब्दस्य चाभावेन पूर्वपदात्परेन्द्र-
शब्दस्य वृद्धिर्नेत्यर्थकस्य नेन्द्रस्य परस्येत्यस्याप्राप्त्या वृद्धि-
निषेधोन स्यादितिभावः ननु एकादेशविशिष्टे सोमे शब्दे
पूर्वान्तवद्भावेन पूर्वपदत्वमुपपन्नमितिचेन्न तथापीन्द्रशब्दस्या-
भावेन पूर्वपदात्परेन्द्रशब्दस्याभावात् ननु परादिवद्भावेनैन्द्रश-
ब्दस्येन्द्रशब्दत्वमपि भविष्यतीतिचेदाह अन्तादिवद्भावास्त्विति
वस्तुतस्तु एकारान्ते पूर्वान्तवद्भावेन पूर्वपदत्वे तदेकारा-
दावेव परादिवद्भावेन इन्द्रशब्दत्वेऽपि पूर्वपदात्परेन्द्रशब्दाभाव
एवेति बोध्यम् अन्तादिवत्त्वोभयाभावेऽपीति अन्तादि-
वत्त्वोभयातिदेशे हि उभयतआश्रयणेनान्तादिवदिति निषेधः
प्रवर्त्तते प्रकृते अन्तादिवत्त्वोभयाभावेन तन्निषेध-
स्याप्रवृत्तावपि वृद्धिर्नप्राप्नोति निमित्तसम्वलनाभावादिति
हृदयस्थं हेतुं प्रकटयति एकादेशविशिष्टे सोमे शब्दे पूर्वान्तवत्त्वेन-
पूर्वपदत्वेन न्द्रशब्दस्यैकदेशविकृतन्यायेन तदाश्रयणे,
उत्तरपदत्वातिदेशाश्रयणे, उत्तरपदत्वेऽपि अनच्कत्वात्,
तदेवोपपादयति एकस्येति आद्यस्येत्यर्थः परस्य, उत्तरस्य
पस्येतिलोपेनापहारादित्यन्वयः देवताद्वन्द्वेचेत्यनेनाहि पूर्वो-
त्तरपदयोर्घटकस्याचोवृद्धिर्विधीयते, पुनः प्रकारान्तरेण
निमित्तसम्वलनमाशंक्य खण्डयति नच परादिवद्भावेनेति
एकादेशविशिष्टस्येति एन्द्रशब्दस्येत्यर्थः मान्तस्यैकदेशविकृत
न्यायेन पूर्वपदत्वमित्यपि योज्यम् तत्सम्भव इति वृद्धिप्राप्ति
सम्भवइत्यर्थः उत्तरपदाद्यचस्थानिकत्वादिति एतदुक्तम्भवति

केवलमुत्तरपदत्वन्तु अशास्त्रीयत्वान्नातिदेष्टुं योग्यं किन्तूत्तर पदाद्यच्त्वं परादिवद्भावेनानेयम् तस्यशास्त्रीयाच्त्वघटितत्वे शास्त्रीयत्वादिति प्रश्नाशयोवाच्यस्तस्य च वर्णमात्रवृत्तित्वे नातिदेशासम्भव स्ताद्रूप्यानातिदेशादिति ननु किमिदं ताद्रूप्यं न तावद्वर्णमात्रवृत्तित्वं तत्, खट्वाभिरित्यत्र टापासहैकादेशविशिष्टे खट्वाशब्दे पूर्वान्तवद्भावेनादन्तत्वमादाय ततः परस्य भिस ऐसापत्तेरदन्तत्वस्य वर्णमात्रवृत्तित्वाभावेनाताद्रूप्यत्वात् ना वर्णमात्रवृत्तिधर्म्मघटितत्वं तत् अदन्तत्वे स्वतः अत्वे व्यपदेशिवद्भावेन वर्णमात्रवृत्तिधर्म्मघटितत्वं बोध्यमिति पुनः क्षीरपेणे त्यादावेकादेशविशिष्टे पेशब्दे णत्वायैकाजुत्तरप त्वस्यातिदेशानापत्ते स्तस्यापि तथाभूताच्त्व घटितत्वात् न तत्रैकाच्त्वस्य स्वतः सिद्धत्वादुत्तरपदत्वं पूर्वान्तवद्भावेनानी तस्याताद्रूप्यत्वादितिवाच्यं तस्याशास्त्रीयत्वेनातिदेशासम्भ वात् नाप्येकादेशस्थानिविशिष्टवर्णमात्रवृत्तिधर्म्मघटितत्वं तत् वै, स्ववृत्तित्वस्वस्थानिकादेशवृत्तित्वोभयसम्बन्धेन अच्त्वस्य स्वस्थानिकादेशवृत्तित्वेनादोषा दित्यपि साधु उत्तरप दाद्यच्त्वस्यवर्णमात्रवृत्त्यच्त्वघटितत्वेऽपि अच्त्वस्यैकादेशस्था नीभूतेन्द्रशब्दघटकेकारविशिष्टत्वाभावात् उत्तरपदाद्यच्त्वं विशिष्टधर्म्मघटितत्वस्याभावेन ताद्रूप्यत्वानापत्तेरितिचेदु च्यते अच्त्वमादाय ताद्रूप्यत्वाभावेऽपि एकादेशस्थानी इकारस्तद्विशिष्टं निरुक्तोभयसम्बन्धेनोत्तरपदाद्यच्त्वमेव तद वर्णमात्रवृत्त्यपि तद्घटितमपि व्यपदेशिवद्भावेन तदंशे

विकृतन्यायेनोभयत आश्रयणे नान्तादिवदित्यस्या-
भावेन तदाश्रयणे चोत्तरपदत्वेऽपि तस्यानच्क-
त्वादेकस्यैकादेशेन परस्य नित्येन यस्येति लोपे-
नापहारात्। न च परादिवद्भावेनैकादेशविशिष्ट-
स्योत्तरपदत्वमेवास्त्विति तत् सम्भव इति वाच्यम्।

---

तदपि ताद्रूप्यमेवेति दिक्॥ अन्यथेति ताद्रूप्यस्याप्यति-
देशइत्यर्थः भाष्यइति अन्तादिवत्सूत्रस्थेभाष्ये इत्यर्थः
तत्रहि वर्णाश्रय अन्तादिवद्भावप्रतिषेधोवक्तव्यो नवा
अताद्रूप्यातिदेशादित्युक्तम् अत्र ज्ञापकं षत्वतुकोरसि-
द्धइतिसूत्रे तुग्ग्रहणमन्यथा अधीत्येत्यादावेकादेशस्य
परादिवद्भावेन ह्रस्वत्वात्तुक्सिद्धेस्तद्वैयर्थ्यमेवेति। अत-
एवेति ताद्रूप्यानतिदेशादेवेत्यर्थः, पूर्वेषुकामशम्याम्भव
इत्यर्थे ऽणि पूर्वमन्तरङ्गत्वादाद्गुणे एकारस्योत्तरपदा-
द्यच्त्वाभावेन प्राचांग्रामनगराणामित्यनेन दिशःप-
रेषां नगरवाचिनां ग्रामवाचिनाञ्चाद्यचोऽणि परेवृद्धिरि-
त्यर्थकेन वृद्धिर्नस्यादित्याशंक्यानेन न्यायेन गुणात्पूर्वमे-
ववृद्धिःसाधितेतिभावः ननुसोमशब्दस्यैकदेशविकृत-
न्यायेनपूर्वपदत्व मेन्द्रशब्दस्य तेनैवोत्तरपदत्वमानी-
योत्तरपदाद्यच्त्वस्यार्थसमाजग्रस्तत्वाद्वृद्धिः प्राप्तेत्यत
आह तदेकदेशेति एकाररूपविकारस्य पूर्वपरोभयैक-
देशविकारत्वात् तदेकदेशमात्रविकारविशिष्टं तद-
न्यवन्नेतिन्यायाकार इतिभावः अत्रैवप्रमाणमाह तदु-
क्तमित्यादिना निषेधस्य चारितार्थ्यमाशंक्य निराक-
रोति मरुदादीति पूर्वनिपातइति अजाद्यदन्तं पूर्व-

उत्तरपदाद्यच्स्थानिकत्वाद् वृद्धेस्तदभावेनाप्राप्ते-
स्तादृप्यातिदेशात्। अन्यथा खट्वाभिरित्यादावपि
पूर्वान्तवत्त्वेनादन्तत्वे भिस ऐस्त्वापत्तिरिति
भाष्ये स्पष्टम्। अत एव पूर्वेषुकामशम इत्यादा-
वन्तरङ्गत्वादाद्गुणे वृद्धिर्न स्यादित्याशङ्कितम्।
तदेकदेशमात्रस्य विकाराभावाच्च। तदुक्तं भाष्ये
इन्द्रे द्वावचावेको यस्येति लोपेनापहृतोपर एका-
देशेन ततोऽनच्क इन्द्रशब्दः संपन्नस्तत्र कः प्रसङ्गो
वृद्धेरिति। मरुदादिभिरिन्द्रस्य द्वन्द्वे इन्द्रस्यैव
पूर्वनिपातेऽत आह॥

## पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्त-रङ्गोऽप्येकादेशो न॥ ५३॥

अत्र च नेन्द्रस्य इति निषेध एव ज्ञापक इत्य-

---

मभ्यर्हितञ्चेति सूत्रवार्त्तिकाभ्यामितिशेषः सोमस्य
सर्वोत्कृष्टशिवशिरसोवस्थानत्वादभ्यर्हितत्वेन पूर्वनि-
पातः विष्णुशब्दस्येन्द्रशब्देन द्वन्द्वेऽपीन्द्रशब्दस्यैव
पूर्वनिपातइन्द्रस्य सर्वदेवाधिष्ठातृत्वेनाभ्यर्हितत्वा-
दिति न तत्र निषेधस्य चारितार्थ्याशा इदमत्रबोध्यम्
परिभाषायां पूर्वपदमुत्तरपदञ्च वस्तुसन्निमित्तं यस्मिन्
कार्ये तत कार्यम् गृह्यते न तु पूर्वपदत्वोत्तरपदत्वाभ्यां
कार्यीयनिमित्ततायामाग्रहस्तेन परमाहमित्यादावन्त

त्वादिवच्च विप्रतिषेधे परम् इति सूत्रयोर्भाष्ये स्पष्टम् ॥ ५३ ॥

नन्वेवमपि प्रधाय प्रस्थायेत्यादावन्तरङ्गत्वाद्धित्वादिषु कृतेषु ल्यप् स्यादत आह ॥

## अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ॥ ५४ ॥

अदो जग्धिः इति सूत्रे ति कितीत्येव सिद्धे

---

रङ्गादप्येकादेशात्प्रागेवानया परिभाषया त्वाहौसावित्यनेनाहादेशः सिद्धः नहि तत्र पूर्वपदत्वादिना निमित्ततास्ति एकादेशपदेनापि सन्धिकार्यमात्रमुच्यत अतएव रात्रिमटइत्यादौ रात्रेःकृतिविभाषेति मुमः प्रागन्तरङ्गोऽपि यण् न नच नाजानन्तर्यनिषेधेन निर्वाहस्तस्य जातासिद्धत्वविषयकत्वात् प्रतिपदोक्तत्वान्मुम् इत्यस्यापि वक्तुं शक्यत्वाच्च ॥ ५३ ॥

अन्तरङ्गत्वादिति पदद्वयापेक्षसमासलापेक्षल्यवपेक्षयैकपदापेक्षस्य दधातेर्हिरित्यादेरन्तरङ्गत्वादित्यर्थः । नल्यपीति सूत्राकरणलाघवात् प्रकृतिप्रत्ययमात्रनिमित्तकं कार्यं ल्यब्विषये न प्रवर्त्तेत इत्येव ल्यब्ग्रहणेन ज्ञाप्यतामिति तु न वाच्यं अधीत्येत्यादौ तुकोऽप्यभावापत्तेः क्त्वाश्रयानुबन्धकार्याणां ल्यब्विषयेऽप्रवृत्तिज्ञापनेऽपि अनुभूयेत्यादौ गुणनिषेधः प्रोह्येत्यादौ संप्रसारणं प्रमथ्येत्यत्र नलोपश्च न स्यात्, तत्त्वं तु ल्यब्ग्रहणं, व्यर्थं

ल्यब्ग्रहणमस्या ज्ञापकमित्यदोजग्धिरित्यत्र भाष्ये स्पष्टम् ॥ ५४ ॥

नन्वेवमियायेत्यादौ द्वित्वे कृतेऽन्तरङ्गत्वात्सवर्णदीर्घत्वे तदसिद्धिरत आह ॥

## वार्णादाङ्गं बलीयो भवति ॥ ५५ ॥

तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः । अभ्यासस्यासवर्णे इतीयङ्विधायक

---

अत स्वप्रवृत्तिविरोधिप्राप्तेर्बाधेन चारितार्थ्यै स्वप्रवृत्तरप्राप्तिबाधे न समर्थमिति स्थानिवद्भावेनल्यवुत्तरप्राप्तेस्त्ववारणाय न ल्यपीत्यस्यावश्यकत्वमिति, अन्तरनिमित्तविनाशकस्यैव ल्यपः प्राबल्यं, तेन प्रपूर्वकादिङ्धातोर्ण्यन्तात् क्त्वाप्रत्यये प्रेध्यगत इत्यादौ न गुणात्पूर्वंल्यप् अन्यथा णेर्गुणात् पूर्वं, ल्यपि लघुपूर्वादित्यनेनायादेशापत्तेरित्यन्यत्रविस्तरः ॥ ५४ ॥

इयायेत्यादाविति आदिना इयेषेत्यादेस्संग्रहः द्वित्वे कृते इति, दीर्घे कर्तव्ये द्वित्वस्य न बहिरङ्गासिद्धत्वं नाजानन्तर्ये इतिनिषेधात् अत एव आदतुः आतुरित्यादिसिद्धम् अन्तरङ्गत्वादिति वृद्धिगुणापेक्षयेत्यादिः अत्रनाजानन्तर्येइति निषेधेन तस्य जातासिद्धत्वविषयकत्वात् वृद्धिगुणविधायकशास्त्रघटकाङ्गप्रयोज्यविषयताश्रयघटकः पर इकारस्तन्निष्ठविषयताप्रयोजकाच्पदघटितत्वं यथा दीर्घस्य तथा दीर्घविधायकशास्त्रघटकपूर्वपरयोरिति पदप्रयोज्यविषयता

ग्रहणमसवर्णग्रहणमस्यां ज्ञापकम्। तद्धीषतुरित्यादावियङ्गादिव्यावृत्त्यर्थम्। एतत्परिभाषाभावे त्वीषतुरित्यादावन्तरङ्गेण सवर्णदीर्घेण बाधात्तद् व्यर्थम्। इयङुवङौ ह्यभ्याससंबन्धिनिमित्तकत्वाद्बहिरङ्गौ। न चेयङ्पवादो येननाप्राप्तिन्यायेनेयर्तीत्यादिसकललक्ष्यप्राप्त्यणपवादत्वस्यैव निर्णयादितिप्राहुः परे त्वेतत्परिभाषाभावे ऽभ्यासस्येति

---

अपेकारद्वयसमुदायघटकपरेकारनिष्ठविषयताप्रयोजकाजादिपदघटितत्वेन वृद्धिगुणयोरप्यन्तरङ्गत्वं समानमिति तु न वाच्यं विषयताप्रयोजकपदस्य सप्तम्यन्तस्यैव ग्रहणेन वृद्धिगुणयोरन्तरङ्गत्वाभावात् वार्णादित्यस्य वर्णत्वव्याप्यधर्मावच्छिन्नोद्देश्यकादित्यर्थः आङ्गमित्यस्य अङ्गत्वावच्छिन्नोद्देश्यकमित्यर्थः तेनेति, वार्णादाङ्गमितिन्यायेनेत्यर्थः असवर्णग्रहणमिति, सूत्रमियर्तीत्यादौ चरितार्थमिति तद्भावः, तद्धीति, असवर्णग्रहणं हीत्यर्थः, दीर्घापेक्षया इयङुवङोर्बहिरङ्गत्वमुपपादयति इयङुवङौ हि अभ्याससम्बन्धिनिमित्तकत्वादिति। अभ्याससम्बन्धिभूतसमुदायाङ्गनिमित्तकत्वादित्यर्थः एतदुक्तं भवति इयङ्शास्त्रघटकाङ्गपदप्रयोज्यविषयताश्रय इइषितिसमुदायस्तद्घटकपरेकारवृत्तिविषयताप्रयोजकसप्तम्यन्ताच्पदघटितत्वेन दीर्घस्यान्तरङ्गत्वमिति, नचेयङुवङोरपिदीर्घशास्त्रघटकपूर्वपरयोरित्येतत्पदप्रयोज्यविषयताश्रय इइइति समुदायस्तद्घटकपरेकारवृत्तिविषयताप्रयोजकसप्तम्यन्ताच्पदघटितत्व-

सूत्रमेव व्यर्थम् । न चेयायेयेषेत्यादौ चरितार्थम् तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तवृद्धेश्च द्विर्वचनेचीति रूपातिदेशेनापहारे द्वित्वे कृते पुनः प्राप्ते गुणवृद्धी बाधित्वा ऽन्तरङ्गत्वात्सवर्णदीर्घापत्तेः न चेयर्तीत्यादौ तच्चरितार्थम् । तावन्मात्रप्रयोजनकत्वे उरित्येव ब्रूयात् । य्वोरित्यनुवर्तते इणो यणिति साहचर्याद् व्याख्यानाच्च ऋधातो

---

रूपान्तरङ्गत्वाविशेषइतिवाच्यम् स्वप्रयोज्यविषयताश्रयघटकत्वस्वघटकपदप्रयोज्यविषयतापर्याप्त्यनधिकरणत्वोभयसम्बन्धेन बहिरङ्गशास्त्रघटकपदविशिष्टप्रवृत्तिविषयताप्रयोजकसप्तम्यन्तपदघटितत्वस्यैवान्तरङ्गपदार्थत्वेनादोषात् यत्तु प्राचीनमतेनैतद्ग्रन्थस्य सत्त्वे तन्मतेसंज्ञाकृतबहिरङ्गत्वस्यापि सत्त्वेनाभ्याससंज्ञासापेक्षत्वेनेयङुवङोर्बहिरङ्गत्वमित्यभिप्राय इति तन्न दीर्घस्याप्यगादिसंज्ञापेक्षकत्वाविशेषात् केचित्तु अभ्यासनिमित्तकत्वेनाभ्याससंज्ञोत्तरप्राप्तिमदियङाद्यपेक्षया अभ्याससंज्ञानपेक्षस्य दीर्घस्य पूर्वप्रवृत्तिकत्वेनान्तरङ्गत्वमित्याहु स्तन्न हलादिःशेषोत्तरमेवोभयोः प्राप्तत्वेन द्वयोरप्यभ्याससंज्ञोत्तरप्राप्तिकत्वाविशेषात् केचित्तु द्वित्वप्रयोज्यसंज्ञानिमित्तककार्याणां द्वित्वनिमित्तप्रत्ययाव्यवहितपूर्वत्वनिमित्तकत्वमिति हः संप्रसारणमितिसूत्रारम्भसामर्थ्यात् कल्प्यते तद्धि अजूहवदित्यत्र चङ्परणौ हः संप्रसारणंविदधदपि निरुक्तकल्पनाऽभावे ऽभ्यस्तस्यचेत्यनेनैव तत्र संप्रसारणसिद्धौ

वि ग्रहणम् । अर्तेरिवर्णास्येयङ्कित्यर्थः । अभ्यास-स्यार्ताविव्यभ्यासस्यार्तेरिति वा गुरुत्वान्न युक्तम् ।

---

र्थं स्यात् कल्पिते च तस्मिन् अभ्यस्तस्यचेत्यस्य द्वि-त्वप्रयोज्याऽभ्यस्तसंज्ञानिमित्तकत्वेन द्वित्वनिमित्तभूत-प्रत्ययाव्यवहितपूर्वत्वनिमित्तकत्वेन णिचा व्यवधाने-ऽप्राप्तेः सूत्रं सार्थकम् अतएव ण्वुलन्तह्वायकशब्दप्रकृ-तिकक्यजन्तात्सनि जिह्वायकीयियिषतीत्यादावभ्यस्त-स्यचेति संप्रसारणन्न तथाचेयङादेरपि अतुस्निमित्त-कत्वेनप्रकृतिप्रत्ययोभयापेक्षत्वेन बहिरङ्गत्वमित्याहुः तथासवर्णग्रहणमीयतुरित्यादौ इइअतुसितिस्थिते यण्-दीर्घैकादेशौ प्रतिपद्विधित्वात्प्रबाध्य दीर्घइणःकिती-त्यभ्यासस्य दीर्घे उत्तरखण्डस्येणोयणिच कृते स्थानिव-द्भावेन प्राप्तस्येङो निवृत्त्यर्थमस्त्विवति वाच्य न्तक्रन्या-येनेयङं बाधित्वाजाते दीर्घेइयङप्रवृत्तेः(यणपवादत्वस्यै-वेति यथा कुपो २ क २ पौचेतिसूत्रं विसर्जनीयस्य-सइत्यस्यैव सकललक्ष्यप्राप्तस्यबाधकं नतु शर्प्परेवि-सर्जनीयइत्यस्येतिभावः नतु यण्गुणयोरन्यतरत्वेन व्यापकत्वात्तयोर्यथा अकःसवर्णइतिबाधकं तथा यण्-दीर्घयोरुभयोर्बाधकमियङ् तत्रान्यतरस्य सकललक्ष्य-प्राप्तत्वाभावेन विशेषात् । अत्रत्यं तत्वमग्रे वक्ष्यते नतु इयर्त्तीत्यादौ ऋऋति इतिस्थिते यणं तक्रन्यायेन बाधित्वाऽर्तिपिपर्त्योश्चेतीत्वे इऋति इतिस्थिते यणः पुनस्प्राप्त्या न तस्यापि सकललक्ष्यप्राप्तत्वमितिवा-च्यम् । यणं बाधित्वा ऽपवादत्वाद्दीर्घः प्राप्तस्तंबा-

न च ए ऐ ओ औ शब्देभ्य आचारक्किबन्तेभ्यो लिटी ख्ङाद्यर्थं तत्सूत्रमावश्यकं तथा ओणृधातोरप्येवं न्तादिच्छाक्यजन्तात्सन्युओणकीयिषतीत्याद्यर्थमा- वश्यकमिति वाच्यम् । षाष्ठप्रथमाह्निकान्तस्थभा ष्यप्रामाण्येन तेषामनभिधानात् । अन्त्ये द्वितीय द्विर्वचनस्यैव सत्त्वेन त्वदुक्तप्रयोगस्यैव दुर्लभ त्वात् । एवं च संपूर्णसूत्रस्य ज्ञापकता युक्ता

---

धित्वाप्रतिपद्विधित्वादित्वं प्राप्तं तदप्यभ्यासविकारे षुवाध्याः पूर्वं प्रवर्तन्त इतिन्यायेन बाधित्वात्सर्गभ मुरदत्वन्तत इत्वे निष्प्रत्यूहं यणः प्राप्त्या सकलल क्ष्यप्राप्तत्वोपपत्तेः यत्तु ऋच्छति इतिस्थिते सार्वधातुके तिगुणः प्राप्तस्तं बाधित्वा परत्वाल्लघूपधगुणस्तं बा धित्वा ऽन्तरङ्गत्वाद्यण् तं बाधित्वा ऽपवादत्वाद्दीर्घ तं बाधित्वा परत्वात्प्रतिपद्विधित्वाच्चार्तिपिपर्त्योरिति त्वं तदप्यभ्यासविकारन्यायेनोरदत्वं तदपि बाधित्वा परत्वाद्भ्रस्वस्तमपि बाधित्वा पूर्वोपस्थितनिमित्त कत्वेन सार्वधातुकगुणस्तमपि तमपीतिचक्रकापत्ति रितितन्न प्रतिपद्विधित्वाद्गुणात्पूर्वं जुहोत्यादिभ्य इति श्लुस्ततः प्रतिपद्विधित्वादेवश्लाविति द्वित्वं ततोऽन्तर्नि तिकत्वेन सर्वापेक्षयान्तरङ्गत्वादभ्यासविकारे बाध्याः पूर्वमितिन्यायेनेत्वापेक्षया च पूर्वमुरदत्वे प्रतिपद्विधि त्वेनेत्वे यण्प्राप्त्या चक्रकस्यासम्भवात्, ननु ईयर्ति रित्यादौ इकारांशे यणएवसकललक्ष्यप्राप्तत्वेन तदपवा दत्वेऽपिदीर्घस्य तत्वाभावेन तदपवादत्वाभावेनान्

त्वेन दीर्घस्यैव प्रवृत्त्याऽसवर्णग्रहणस्य वैयर्थ्ये ऽपि
क्लवतुरित्यादावुकारांशे सकललक्ष्यप्राप्तदीर्घस्याप्यप-
वादत्वेन प्राप्तस्यावङोऽप्रवृत्तये आवश्यकत्वा दसवर्णग्र-
हणस्य ज्ञापकमिति चेन्नोकारांशमात्रव्यावृत्यर्थत्वे ऽभ्या-
सस्यानावितिन्यासेनैव सिद्धे ऽसवर्णग्रहस्य वैयर्थ्येन
ज्ञापकत्वमित्याशयात्, रूपातिदेशेनापहारे इति, नन्व-
तिदेशेन अतिदिष्टधर्म्मज्ञानमेवाहार्यात्मकं भवति नतु
तद्धर्म्मविरुद्धस्थितधर्म्मस्यापहारो भवत्यत एवातिदि-
श्यमानधर्म्मविरुद्धधर्म्मप्रयुक्तकार्याभावइत्येवोक्तन्नतु
तद्विरुद्धधर्म्माभावइति प्रकृते पूर्वस्थितधर्म्मापहारोक्तिः
पुनर्गुणवृद्धिप्राप्तिश्चासङ्गतेति चेन्न रूपातिदेशस्थलेवास्त-
विकमेव रूपन्तत्रोत्पद्यते तदुत्पत्तिश्च पूर्वरूपसद्भावे
नसम्भवति विभिन्नयोरानुपूर्व्योरेकशब्दवृत्तित्वायोगा-
दनुपलब्धेश्च, तस्मात् पूर्वरूपापहारं विना गत्य-
भावाऽतएव तृज्वत्क्रोष्टुरित्यतिदेशे क्रोष्टुशब्दस्यक्रोष्टा
क्रोष्टारावित्यादिरूपाणि भवन्ति वस्तुतोरूपातिदे-
शस्थले तद्रूपविशिष्टादेशएव तात्पर्यमित्यस्यैव वक्त-
व्यत्वाच्च चरितार्थमिति, सर्वणाच्परत्वाभावात्
दीर्घस्यानवकाशत्वेन बाधाद्यणश्च तत्राप्राप्तेरिति-
भावः उरित्येव ब्रूयादिति, नच उरितिन्यासे अङ्गस्य-
स्यस्याचीत्यस्य च सम्बन्धे ऋवर्णान्ताङ्गस्याचि परे
इयङित्यर्थे कर्त्तारावित्यादावियङापत्त्या फलभेद
इत्यत आह रवोरिति तथापि ऋकारस्य य इकार
स्तस्येयङित्यर्थे ऋकारेकारयोः स्थान्यादेशभावस-
म्बन्धस्यैव सम्भवेन इयर्तीत्यत्रोरदत्वे एवोक्तरीत्या

अर्त्तिपिपर्त्यौ इश्चेत्यस्य प्रवृत्त्या ऋकारस्थानिकेकारस्या-
भावादियङ् न स्यादरियर्त्तीत्यादेरसिद्ध्यापत्तेश्चेत्य-
आह इणोयणिति सूत्रान्तरसाहचर्यस्यादर्शनादाह
व्याख्यानादिति नह्येकमुदाहरणन्यायेन सूत्रस्य ज्ञाप-
कत्वप्रदर्शकभाष्यमूलकादच्चिष्णुधात्वित्यतोधातुग्रहणा-
नुवृत्तिमूलका द्वा व्याख्यानादित्यर्थः षाष्ठेति दाश्वानि-
सूत्रस्येत्यर्थः तत्र हि निरुक्तपरिभाषाज्ञापनसमये अभ्या-
सस्यासवर्णे इत्यस्येयर्त्तीत्यत्र चारितार्थ्यमाशंक्य
नह्येकमुदाहरणमित्यादिना समाहित मुक्तस्थले चा-
रितार्थ्यसम्भवे तदसङ्गतिः स्पष्टैवेति भावः प्र-
त्ययग्रहणमपनीय तत्स्थाने ऽनेकाच् इति वक्तव्य-
मित्यारम्भप्रत्याख्यानपक्षयोः फलैक्यायापि ए-
ओऔएतेभ्य आचारक्विपोऽनभिधानं बोध्यम् । इत्या-
देश्चगुरुमतोऽनृच्छइत्याम् तु न अनृच्छइतिपर्युदा-
सेनानतिदिष्टगुरुमत्त्वस्यैव तत्र ग्रहणादिति केचित्
कटीत्यत्र प्रश्लिष्टस्य ईधातोरयाञ्चकारेत्युदाहरण-
स्तादृशसाहचर्यानाश्रयणमित्यन्ये द्वित्वे एऐइत्यादि
स्थिते इदानीं परिभाषाया अभावेनान्तरङ्गत्वाद्ध्रस्वं
बाधित्वा ऽयादेशादेरेव प्रवृत्त्या तेषु चारितार्थ्यासम्भव
इतिपरे अत एव इणधातोर्लिटि द्वित्वात्पूर्वमपरनिमि-
त्तकत्वेनान्तरङ्गत्वाद्द्विर्वचनेऽचीत्यस्यारम्भाच्च धा-
परत्वाद्गुणे द्वित्वे ह्रस्वेस्थानिभूतादचः पूर्वत्वेन दृष्टत्वा-
भावेन स्थानिवत्त्वाप्रवृत्तौ इएथेति स्थिते सूत्रं चरितार्थ-
मित्यपास्तन्तत्रापि ह्रस्वं बाधित्वान्तरङ्गत्वादयादेश-
स्यैव प्रवृत्तेः । अन्ते द्वितीयद्विर्वचनस्यैवेति नाम्नवाते-

वपि अजादेस्तु आद्येतरस्येत्युक्तत्वेनाद्येतरस्यैवैकाचो-
द्वित्वमितिभावः आद्यैकाचोर्द्वित्वे तु ओणओणइति-
स्थिते ह्रस्वः हलादिः शेष इत्यनयोः प्राप्तौ परमपि
हलादिःशेषम् अभ्यासविकारे बाध्यबाधकभावोनेत्यनेन
बाध्याः पूर्वं प्रवर्तन्त इत्यर्थकेन बाधित्वा ह्रस्वे हलादिः
शेषे इयङर्थं चरितार्थं स्यादितिभावः अत्रेदं बोध्यम्,
हलादिः शेषइत्यस्य यदि अभ्यासस्य आदिभूतं हलमु-
द्दिश्य शेषविधायकत्वमादीतरहलोनिवृत्तिश्च फलिता
तर्हि आटतुरित्यादौ उद्देश्याभावेनाप्रवृत्तौ टकार-
निवृत्तिर्नस्यात्, इतरनिवृत्तिपूर्वकस्वस्थितिरूपशेष-
विधाने गौरवञ्च तस्मादभ्यासावयवस्यादीतरस्यहलो-
निवृत्तिरेवविधीयते तावतैवादिहल्स्थितिस्सिद्धव
बोधिता स्यात् सति सम्भवे, आटतुरित्या-
दौतु अन्त्यहलोनिवृत्तिमात्रमादिहलस्थिते रभा-
वात् पपाचेत्यादौ तु पचोद्वित्वे चकारस्यानेन निवृ-
त्त्यपेक्षया लाघवाद्धलादेरजन्तस्यैवैकाचो द्वित्वतात्पर्य-
बोधनद्वारैव चकारनिवृत्तिबोधनम् तथाचाजाद्यनेका-
ज्धातौ आदिभूतादचः परस्य द्वितीयस्येति नामधाता-
वजादेस्तु आद्येतरस्येति चैतत्फलितमेव तेन नामधातौ
मध्यस्थस्याप्येकाचोहलादेरजन्तस्यैव द्वित्वमितिस्थित-
त्वेन ओणकोयियिषतीत्यादौ मनश्शब्देन समासे मन-
ओणकोयियिषतीत्यादौच णशब्दस्यैव द्वित्वेन चारिता-
र्थ्यशंकापि न एतेन मनःशब्देन समासे ओणित्यस्याद्ये-
तरत्वाद्दोषोदुर्वार इत्यपास्तम् इयेषिथेत्यादाविषधातो
र्लिटि थलोडागमे कृते गुणस्याप्यपर्याप्तनिमित्तताक-

यद्यपि भाष्ये यदयमभ्यासस्याऽसवर्णे इत्यसवर्णग्रहणं करोतीति ग्रन्थेनाऽसवर्णग्रहणस्यैव ज्ञापकता लभ्यते तथापि न ह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवतीति तदुपपादनग्रन्थेन संपूर्णसूत्रस्यैव ज्ञापकता लभ्यते। अग्रेऽपि नैतदस्ति ज्ञापकमर्थवत्तत्स्यादित्यनेन सूत्रस्यार्थक्यमेव दर्शितमसवर्णग्रहणस्यैव ज्ञापकत्वे तु तद्वैयर्थ्यप्रदर्शनेन तत्सार्थक्यमेव दर्शितं स्यात्। नचाकृतव्यूहपरिभाषयेयेष्टीत्यादौ सवर्णदीर्घाप्राप्तिर्यदि दीर्घो न स्यात्तर्हि गुणः स्यादिति संभावनायाः सत्त्वेन परिभाषाप्रवृ

---

त्त्वाभावेन द्विर्वचनेऽचीत्यस्याप्रवृत्त्या परत्वाद्गुणे कृते हलादिःशेषे ह्रस्वे सूत्रं चरितार्थमित्यपि न, ह्रस्वापेक्षयाऽन्तरङ्गत्वादयादेशस्यैव पूर्वं प्रवृत्ते हलादिःशेषात् पूर्वमेवाभ्यासविकारे बाध्यबाधकभावो नेत्यनेन अस्य प्रवृत्तौ ततो हलादिःशेषे सूत्रं चरितार्थमेवेति चेदुक्तरीत्यैवाऽत्रस्य द्वित्वेनायादेशस्यैव प्रवृत्तिरितिबोध्यम्।

एवञ्चेति इरितिकरणेनैवेयर्तीत्यस्य सिद्धौ चेत्यर्थः (इयेषेत्यादाविति) आदिना इयायेत्यस्य संग्रहः इयायेत्यत्र गुणदीर्घयोः परस्परं निमित्तविनाशकत्वेनाकृतव्यूहेत्यस्याप्रवृत्तावपीयायेत्यत्र दीर्घस्य वृद्धिनिमित्तविनाशकत्वाभावेन दीर्घे परिभाषाप्रवृत्तेर्बाधकाभाव इति बोध्यम् (एतद्भाष्येति) ज्ञापकपरभाष्येत्यर्थः यत्रान्तरं

पपादत्वादिति कथं संपूर्णसूत्रस्य ज्ञापकतेति वाच्यम्। तस्या असत्त्वात्। सत्त्वे वैतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्तविनाशकबहिरङ्गविधेः प्राप्तिस्तत्रैव तत्परिभाषाप्रवृत्तिस्वीकाराच्च। नचान्तरङ्गत्वाद्दीर्घे ऽपीपायेत्यादौ पूर्वान्तवत्त्वेनाभ्यासत्वादिवर्णत्वाच्च ल्यसवर्णे इयङ् विधानेनेदं सूत्रं चरितार्थं न चाचि नुइत्यनेन सिद्धिर्वृद्धिबाधनार्थत्वादिति वाच्यम्। प्रत्यासत्त्या सवर्णपदेनाभ्यासोत्तरखण्डसंबन्ध्यसवर्णोच एव ग्रहणाच्छास्त्रबाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवौचित्याच्चेत्याहुः। सा चेयं धर्मिग्राहकमानादाङ्गवार्णयोः समानकार्यित्व एव। यत्तु समाननिमित्तकत्वरूपसमानाश्रयत्व एवैषेति तन्न ज्ञापितेऽपीपायेयेत्याद्यसिद्धेः सूत्रवैयर्थ्यस्य तदवस्थत्वाच्च। स्योन इत्यत्र तु वद्याणारीत्याऽस्या अनित्यत्वादप्रवृत्तौ गुणादन्तरङ्गत्वाद्यणादेशः। न

---

कार्येति प्रकृते न तथा द्वित्वात्पूर्वमपि गुणस्य प्राप्तेः (प्रत्यासत्त्येति) उत्तरखण्डपूर्वस्यैवाभ्यासत्वेनाभ्यासकार्यसान्निध्यस्योत्तरखण्डे सत्वादितिभावः (धर्म्मिग्राहकमानादिति समानकार्यित्वं धर्म्मः परिभाषाधर्म्मी तद्ग्राहकं बोधकं मानं प्रमाणम् अभ्यासा-

चैव मपीयायेत्यादावियङ् दुर्लभस्तत्र कर्त्त
वृद्ध्यादेः स्थानिवत्त्वेनासवर्ण इति प्रतिषेधादि
वाच्यम् । सूत्रारम्भसामर्थ्यादेव स्थानिवत्वाप्रवृत्तेः

---

सवर्ण इति सूत्रं तस्मादित्यर्थः तद्विषये तयो
सत्वादिति भावः समानकार्यिण्व एवेति समानस्थानि
ताकत्व एवेत्यर्थः तत्त्वञ्च वार्णशास्त्रीयस्थानितासमा
नाधिकरणस्थानिताकत्वमाङ्गशास्त्रे यथेयायेत्यादावि
धातोर्लिटि तस्य णलादेशे द्वित्वे इइअइतिस्थिते दीर्घ
शास्त्रीयस्थानितापरेकारनिष्ठा तत्समानाधिकरणस्था
निता वृद्धिनिरूपिता तन्निरूपकत्वं वृद्धिशास्त्रस्येति
मन्वयः पर्याप्त्यनिवेशाद्दीर्घीयस्थानितासमुदायनिष्ठा
वृद्धिशास्त्रीयस्थानिता परेकारनिष्ठेति समानस्थानि
कत्वाभाव इत्यपास्तम् ननु त्वं स्त्रीत्यत्र त्व अद् अमिति
स्थिते अन्तरङ्गत्वादतोगुणे कृते टिलोपेनादन्तत्वाभा
वान्न टाविति कौमुदीग्रन्थासङ्गति लोपीयस्थानितापर
रूपीयस्थानितयोरपर्याप्त्या ऽकारनिष्ठत्वेन समानस्था
निताकत्वेनानया परिभाषया पूर्वं टिलोपे टापोदुर्वार
त्वादिति चेन्न वार्णशास्त्रीयस्थानितावच्छेदकपर्याप्त्य
धिकरणपर्याप्तस्थानिताकत्वस्यैव समानस्थानिताकत्वश
दार्थतयाऽदोषात् इयायेत्यादौ दीर्घीयस्थानितावच्छे
कपरत्वपर्याप्तिः परेकारे तत्रैव वृद्धिस्थानितापर्याप्तिस
त्वात् त्वमित्यादौ पररूपीयस्थानितावच्छेदकपरत्वप
र्याप्त्यधिकरणे परेऽकारे लोपस्थानितापर्याप्त्यभावाच्च
हलन्तादेशस्यैव भाष्यसम्मतत्वाच्च शेषेलोपइतिसूत्र

शेषग्रहणेन परिभाषाया अप्रवृत्तिज्ञापनाच्च, स्थानिताया निवेशाद्गुच्छति युच्छतीत्यादावन्तरङ्गत्वात्पूर्वं तुकि लघूपधत्वाभावेन गुणाभावः कार्यित्वनिवेशेतु तुग्गुणयोस्समानकार्यित्वेन तुकः पूर्वमनयागुणापत्तेः गानइत्यत्र गाअआनेतिस्थिते अन्तरङ्गत्वाद्दीर्घे मुकोप्राप्त्या गानइतिरूपस्यैवसत्वेनादादिकादविशेषः कौमुदुक्त उपपद्यते कार्यित्वनिवेशे दीर्घेण मुकस्समानकार्यित्वादनया मुगागमे विशेषापत्तेः चच्छाविन्यादौ छाछाअ इतिस्थिते ऽन्तरङ्गत्वादभ्यासाऽऽकारस्य तुक्यजन्ताभ्यासत्वाभावेन ह्रस्वोन स्यादित्याशंक्याभ्यासावयवस्याचो ह्रस्व इतिवैयधिकरण्यान्वयंकरणपरभाष्यमुपयत एव सङ्गच्छते ऽन्यथाऽनया पूर्वंह्रस्वस्यैव प्रवृत्या तद्विरोधापत्तिः । समानकार्यित्वविषयकत्वादेव गातेइत्यादौ गाअआते इतिस्थिते आङ्गादप्यातोङितइतिसूत्रात्पूर्वमन्तरङ्गत्वात्सवर्णदीर्घसिद्धिः, वारिणी इत्यादौ नुमः पूर्वमन्तरङ्गत्वाद्दीर्घापत्तिस्समानस्थानिकत्वाभावेन प्रकृतपरिभाषाया अप्रवृत्तेः, येननाप्राप्तन्यायेन नुमो बाधकत्वन्तु न वारिणोरित्यादिसकललक्ष्यमाप्रयणुबाधकत्वस्यैव सम्भवादिति तु न युक्तं लक्ष्यानुरोधेन बाध्यसामान्यचिन्ताश्रयणेनोभयबाधकत्वात् स्योन इत्यादौ सिउ न इति स्थिते गुणं बाधित्वाऽन्तरङ्गत्वाद्यणिष्यते तन्न स्यादनया गुणस्यैव प्रवृत्तेरिति तु नाशंक्यं वक्ष्यमाणरीत्या अस्या अनित्यत्वात् ननु प्रष्ट्रत्यादौ ह्रस्वस्य तुक् छकारस्य शकार इत्यनयोस्समानकार्यित्वाभावेन प्रकृतपरिभाषाया अप्रवृत्या

अन्तरङ्गत्वात् पूर्वं तुकि तस्य निवृत्तये सतुग्ग्रहणस्या-
वश्यकत्वे नानित्यत्वे न ज्ञापकमिति चेन्न अन्तरङ्गत्वात्
णोगुणबाधकत्वमिष्यत इति भाष्यादस्या अनित्यत्वात्,
नन्वनित्यत्वाश्रयणस्यावश्यकत्वेन तेनैवातिप्रसङ्गभ-
ङ्गात्समानस्थानिकत्वविषयकत्वकल्पनानवकाश इति
चेन्न असमानस्थानिकत्वेनाप्रवृत्तिस्थलानामनुगमेऽपि
लाघवस्य सत्वात् ॥ ( ज्ञापिते ऽपोप्यायेत्याद्यसिद्धि-
रिति ) इयायेत्यादौ परेकारनिमित्तकत्वं दीर्घस्य
प्रत्ययनिमित्तकत्वं वृद्धेरिति तयोस्समाननिमित्तकत्वा-
भावइतिभावः परेतु आङ्गशास्त्रविशिष्टत्वं वार्णशास्त्रे
समाननिमित्तकत्वं वै० स्वीयस्थानितापर्याप्त्यधिकरण-
वृत्तित्व स्वघटकसप्तम्यन्तपदप्रयोज्यविषयताश्रयघट-
वृत्तित्वान्यतरसम्बन्धेन स्वविशिष्ट विषयताप्रयोजक-
सप्तम्यन्तपदघटितत्व सम्बन्धेन इयायेत्यादौ वृद्धिशास्त्र-
वैशिष्ट्यं दीर्घस्य यत स्तद्घटकाचपदप्रयोज्यविष-
ताया वृद्धिनिरूपितस्थानितापर्याप्त्यधिकरणपरेकार-
वृत्तित्वम्, कारकेत्यादौ यण्शास्त्रीयाच्पदप्रयोज्यवि-
षयताया वृद्धिशास्त्रीयसप्तम्यन्तपदप्रयोज्यविषयता श्रया-
कघटकाकारवृत्तित्वेनोभयोस्समाननिमित्तकत्वाद्वृद्धि-
यणभ्वान्तरङ्गमपि बाधित्वाऽऽङ्गवृद्धिकार्यं सिद्धम् श्योः
इत्यत्र यण्शास्त्रघटकसप्तम्यन्ताच्पदप्रयोज्योकारनि-
विषयताया गुणशास्त्रवैशिष्ट्याभावेन समाननिमित्त-
कत्वाभावेनाङ्गमपि गुणमन्तरङ्गत्वाद्बाधित्वा यणादे-
शः, ननु जखतुरित्यत्राङ्गत्वाद्ध्रस्वे कृते दीर्घे पूर्वान्तत्व-
त्वेनाभ्यासत्वे ऽपि लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाभावो

भवति तत्र दीर्घशास्त्रघटकसप्तम्यन्तपदप्रयोज्यविषय-
तायां ह्रस्वशास्त्रवैशिष्ट्याभावेन, समाननिमित्तकत्वा
भावेन परिभाषाया अप्रवृत्तावाङ्गमपि ह्रस्वमन्तरङ्ग-
त्वाद्बाधित्वा दीर्घे ह्रस्वापत्तिरितिचेन्न सप्तम्यन्तपञ्च-
म्यन्तान्यतरपदस्य निवेशेन पञ्चम्यन्तात्पदप्रयोज्या-
व्यासवृत्तिविषयतायां ह्रस्वशास्त्रवैशिष्ट्यसत्वेनादो-
षात् नन्वेवमपि यण्शास्त्रस्य समाननिमित्तकत्वाभावेन
तस्य ह्रस्वेनाबाधात् चक्रकापत्तिस्तथाहि उउखअतुसिति
स्थिते यणमपवादत्वात्प्रबाध्य दीर्घः प्राप्तस्तमाङ्गत्वाद्बा
धित्वा ह्रस्वः प्राप्तस्तमप्यन्तरङ्गत्वाद्बाधित्वा यण्प्राप्त
स्तं दीर्घइत्यावर्त्तनात्तदर्थं षष्ठ्यन्तपदस्यान्यतमत्वेन
प्रवेशे स्योनइत्यत्रापि यणोगुणेन बाधापत्तिरितिचेदेत-
दाशयेनैव तत्पक्षस्य दूषितत्वात् वस्तुत ऊखतुरित्यत्र-
उखउखअतुसितिस्थिते अभ्यासविकारेबाध्यबाधकभा-
वाभावेन हलादिश्शेषह्रस्वयोस्समकाले प्रवृत्तेस्तस्मिन्
काले न दीर्घप्राप्तिः खकारेण व्यवधानात्तदुत्तरं दीर्घे
पुनर्लक्ष्ये लक्षणन्यायेन ह्रस्वाप्रवृत्त्या न दोष एतदाश-
येनैव कौमुद्यां परत्वादित्युक्तिः, दीर्घस्य परकालिकप्रवृ-
त्तिमत्वादितितस्यार्थ इति समाननिमित्तकत्वं निर्दुष्ट-
मेवेत्याहुः। सिवेर्नप्रत्यये नित्यत्वाद्गुणात्पूर्वमूठि सि-
ऊनइति स्थिते गुणमन्तरङ्गत्वाद्बाधित्वा यण्भवति स न
स्यादाङ्गत्वाद्गुणस्यैव प्राप्तेरित्यत आह स्योन इत्यत्रे-
त्यादि स्थानिवत्त्वेनेति ननु इयायेत्यत्र इए अइतिस्थिते
अन्तरङ्गत्वादायादेशे इ आयेतिस्थिते इयङ्भवति तत्र
स्थानिवद्भावेनायादेशो इवुद्धया सवर्णाचपरत्वेनेयङो-
ऽप्राप्ति स्तेऽभिमता सा न युक्ता आयादेशस्यानिमि

वृद्ध्यादेशे इत्वस्याभावात् नचैकारे प्रथमं स्थानिवद्भावेन सवर्णाच्त्वमानीय पुनरायादेशे स्थानिवद्भावेन सवर्णाच्त्वानयनमविवादमितिवाच्यं लक्ष्येलक्षणन्यायेन पुनः स्थानिवत्त्वाप्राप्तेरत एवैतिकेत्यादौ लक्ष्ये लक्षणन्यायेन स्थानिवद्भावद्वयाभावः स्त्रीप्रत्ययप्रकरणे शेखरोक्तस्संगच्छते आयादेशेनैकारस्यापहारेण तत्र प्रथमं स्थानिवद्भावाप्राप्तेश्चेतिचेदत्रोच्यते स्थानिवदित्यत्र स्थानिपदेन स्थानिस्थान्यपि गृह्यते तथाचादेश आयादेश स्तस्यस्थानिस्थानी इकारस्तद्वृत्तिसवर्णाच्त्ववान् स्यादितीयङादेशप्राप्तिरत एव सुनयिकेत्यादौ धात्वन्तत्वाद्यकारस्य धात्वन्तयकोस्तु नित्यमित्यस्य प्रवृत्तिरन्यथा नयरूपाणुमानिकादेशे नीरूपस्थानिस्थानिगतस्य धातुत्वस्यातिदेशाभावे नित्येत्त्वानापत्तिः नन्वैतिकेत्यादावेकस्थानिवद्भावेनैव टापासहैकादेशस्वस्थानीपररूपनिष्पन्नोऽकारस्तत्स्थानी वर्णद्वयात्मकत्वात्तस्यास्ततश्चेत्वं न स्यादिति चेन्न टापासहैकादेशस्थानी पररूपात्मकोऽकारष्टापाकारश्चेतिसमुदायस्तत्स्थानित्वस्य कुत्राप्यभावेनादोषादिति केचित्तु यूनस्तिरिति निर्देशादतिदेशविषये लक्ष्ये लक्षणन्यायेन प्रवर्तत इति ज्ञापनेनात्रस्थानिवद्भावद्वयप्राप्तिरन्यथा युवनतिस्थिते कृतस्य दीर्घैकादेशस्य स्थानिवद्भावेऽपि युवन् इति वुडौ पूर्वरूपस्योक्तन्यायेनपुनस्थानिवद्भावाप्राप्त्या संप्रसारणपरत्वाभावेन निषेधाप्राप्त्या संप्रसारणे विदेशासंगतिरेतिकेत्यादौ तु नयास्वयोरितिज्ञापकात् स्यदाद्यकारेण जातपररूपस्य स्थानिकत्वं नेतिकल्पनेनादोष इत्याहुस्तन्न संप्रसारणस्थानिकपूर्वरूपस्य हलइति

सूत्रारम्भसामर्थ्यात्सम्प्रसारणतुल्यत्वातिदेशेन पूर्वरूपेण पूर्वपरनिवृत्तिपूर्वकापूर्वस्यैकस्यबोधनापेक्षयालाघवेन परनिवृत्तिपूर्वकपूर्वस्थितेरेवाभ्यनुज्ञादानस्य युक्ततया च पुनःस्थानिवद्भावमन्तरेणैव निषेधप्रवृत्त्या निर्देशोपपत्तेः॥ सूत्रारम्भसामर्थ्यादिति ननु इयेथ इयर्त्तीदौ सूत्रस्य चारितार्थ्यम् । इणधातो लिटि सिपि थलि द्वित्वनिमित्ताचोऽभावेन द्विर्वचनेऽचीत्यस्याभावेन परत्वाद्गुणे एरूपस्य द्वित्वे ह्रस्वे तस्य स्थानिभूतादचः पूर्वत्वाभावेनोत्तरखण्डस्य स्थानिवद्भावाप्रवृत्तेरियर्त्तीत्यादौ गुणात्पूर्वमभ्यासस्येत्वे ऽपि उत्तरखण्डस्य स्थानिवद्भावेऽप्यसवर्णाच्चूत्वस्याक्षतत्वाच्च नचाभ्यासस्यानिकि अभ्यासस्यास्वोरितिन्यासेनैवोपपत्तावभ्यासस्यासवर्णे इत्यस्य वैयर्थ्येन युक्तमेव ज्ञापकत्वमिति वाच्यं तथासति ज्ञापितेऽपि चारितार्थ्याभावेन ज्ञापनासम्भवादिति चेन्न अभ्यासस्यानणि अभ्यासस्यानचीतिन्यासेनैव सिद्धावसवर्णग्रहणस्य ज्ञापकत्वसिद्धेरप्रत्यूहत्वात् । इयर्त्तीत्यादौ स्थानिवद्भावेन कुडावप्यनण्त्वस्य इयेथेत्यत्र स्थानिवद्भावाप्राप्त्या स्वत एवाणभिन्नत्वस्येकारभिन्नत्वस्य च सत्वेनेयङुपपत्तेः ज्ञापिते तु इयायेत्यादावणभिन्नत्वाभावादियङोऽभावापत्त्योरवतुरित्यत्रेकारभिन्नत्वेनोवङापत्त्या च चरितार्थमसवर्णग्रहणम् गुरुचरणास्तु इएथेत्यादौ प्रतिपदोक्तत्वात्पूर्वं द्वित्वमेवेत्याहुः अत एवेति इयङादेशे

तच्च सामान्यापेक्षमभ्यासकार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति । अत एवारतीत्यादौ यणादेशस्य स्थानिवत्त्वादभ्यासस्य ढ्रलोपइति दीर्घो दुर्लभ इत्यपास्तम् । दीर्घविधौ तन्निषेधाच्च । अरियृरियादित्यत्र तु स्थानिवत्त्वे

---

कर्तव्ये न स्थानिवदितिविशेषापेक्षं विहायाभ्यासकार्य इत्यादिसामान्यापेक्षज्ञापनादेवेत्यर्थः आरतीति ऋ धातोर्यङ्लुगन्ताल्लटोझेरदादेशे अभ्यासस्योरदत्वे रुगि च कृते उत्तरखण्डस्य यणि रोरीतिलोपे दीर्घे रूपसिद्धि स्तत्रोक्तज्ञापनाभावे यणस्थानिवत्त्वेन रेफलोपनिमि त्तरेफाभावेन ढ्रलोप इतिदीर्घो न स्यादितिभावः वहि रङ्गत्वेन यणोऽसिद्धत्वन्तु न नाजानन्तर्यइतिनिषेधात् रोरीत्येतदपेक्षया ऽपि यणो न बहिरङ्गासिद्धत्वं तस्य त्रिपादिस्थत्वेन परिभाषाया अप्रवृत्तेः । वस्तुतस्तु स्थानिवद्भावेऽपि न क्षतिर्दीर्घविधौहि रेफस्यरेफत्वेन निमित्तत्वमपि तु रेफलोपनिमित्तत्वेन तस्य च रेफा ज्ञाने ऽपि लोपदर्शनेन ऋकारे एव ज्ञानसम्भवेन दीर्घ प्रवृत्तेस्सूपपादत्वात् । दीर्घविधौ तन्निषेधाच्चेति पदान्तसूत्रेण स्थानिवत्त्वनिषेधादित्यर्थः नच तत्र दीर्घ पदेन त्रैपादिकस्यैव ग्रहणमत एव पूर्वत्रासिद्धे न स्थानिवदित्यवष्टभ्य वरेयलोपस्वरवर्ज्यं द्विर्वचनादीनां प्रत्याख्यानं सङ्गतमन्यथा फलभेदापत्तेरितिवाच्यम् चिण्णमुलोर्दीर्घोऽन्यतरस्यामितिसूत्रे मितांह्रस्वइत्यतो

ह्रस्वग्रहणमनुवर्त्त्य तद्विकल्पेनैव सिद्धे दीर्घग्रहणसामर्थ्येन तत्रैतस्यापि ग्रहणावश्यकत्वेन वर्यकोटौ दीर्घस्याप्युपलक्षणत्वेन दीर्घातिरिक्तानामेवद्विर्वचनादीनां प्रत्याख्यानात् स्पष्टञ्चेदं चिण्णमुलोरितिसूत्रे शब्देन्दुशेखरे तत्रत्यकौमुदीग्रन्थस्तु चिन्त्य एवेत्यपि तत्रैवस्पष्टम्। नच स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदित्युक्तत्वादिदं न युक्तमिति वाच्यम् तत्र दीर्घग्रहणस्य फलाभावात् विव्यतुरित्यादावुपधायाश्चेत्यनेन दीर्घे कर्त्तव्ये यणः स्थानिवत्त्वनिषेधेन दीर्घस्तु न प्रत्यासत्या धात्ववयवस्यैवेकोदीर्घविधानेनाभ्यासोत्तरखण्डस्यैव धातुत्वेनाभ्यासावयवेकोदीर्घाप्राप्तेरतएव क्विधौ सर्वत्र संप्रसारणिभ्योड वक्तव्य इत्यनेन परिपूर्वाद्व्येञोड प्रत्यये डलोपे परिव्य इत्यत्रोपसर्गावयवेकोन दीर्घः अरिर्यियादिति अर्त्तेर्यङ्लुगन्ताल्लिङि द्वित्वेअभ्यासस्य रिगागमे रिङियङोः प्राप्तौ परत्वादुत्तरखण्डस्यरिङादेशो तस्यस्थानिवद्भावेनाभ्यासस्येयङ्भवति स्थानिवद्भावस्यानेननिषेधस्तु नाभ्यासकार्यसाधकत्वात् यदित्वन्तरङ्गत्वात्पूर्वमेव रिङादेशादियङ् अतएव रिङादेशस्य स्थानिवद्भावाद्यलोपोन पूर्वं रिङादेशो यकारस्य स्थानिभूतादचः पूर्वत्वाभावेन स्थानिवद्भावाभावेन यलोपापत्तेर्दुर्वारत्वात् यलोपे बहिरङ्गासिद्धत्वन्तु नाचोऽन्यानन्तर्यनिमित्तके अन्तरङ्गे इयङि कृते निषेधादित्युच्यते तदा प्रतिबन्धकीभूतत्वं नदेयमत एव कटीचोत्पन्न प्रश्लिष्टादिधातोर्लिटि

द्वित्वे परखण्डस्य यणि तस्य स्थानिवद्भावेन न।भ्या- सेकारस्य यण्, इययेत्यादौ परखण्डस्य स्थानिवद्भा- वादभ्यासस्य न लघूपधगुणः अचकाणदित्यादौ भ्रा- ज्भासेत्यादीनाम्वेति ह्रस्वाभावे वृद्ध्यादेशस्य स्थानिवद्भावे लघुपरत्वमादाय दीर्घसन्वद्भावौ न स्थानिवद्भावस्या- नेन निषेधात्, प्रतिबन्धकीभूतत्वनिवेशे तु नैतत्सिद्धं स्थानिवद्भावस्याभ्यासकार्य्यसाधकत्वात् अभ्यासत्वाव- च्छिन्नोद्देश्यककार्याभावेनाद्ययोर्दोषाभावेऽपि तृ- तीयस्य वज्रलेपत्वादभ्यासत्वावच्छिन्नोद्देश्यताकत्व- निवेशेन दोषवारणापेक्षया निष्फलनिवेशाभावस्यैव युक्तत्वाच्च अभ्यासकार्येत्यनुक्तौ तु नीधातोर्लिटि निन्यतुरित्यादावनेन निषेधादुत्तरखण्डाजादेशस्थानि- वद्भावानापत्या ऽनिदितामिति नलोपापत्तिस्तदुक्तौ तु नलोपस्याभ्यासकार्यत्वाभावान्नदोषः उत्तरखण्ड- निवेशाद्धव्रश्चेत्यत्राभ्यासकार्य्ये संप्रसारणनिषेधे क- र्त्तव्ये ऽभ्यासावयवोरदत्वस्य स्थानिवद्भावः,एतद्वचन- फलन्तु अचीकमत अतूतवदित्यत्र दीर्घसन्वद्भावयोः कर्त्तव्यत्वे उत्तरखण्डाजादेशस्य ह्रस्वस्य स्थानिवद्भा- वाभावः ( अङ्गसम्बन्धिन्याङ्गइति अङ्गनिष्ठोद्देश्यताके अङ्गाधिकारस्थे कार्य्ये एवेयं परिभाषा प्रवर्तत इत्यर्थः धर्म्मिग्राहकमानादिति भावः कुमार्यै इत्यत्राङ्गत्वेऽप्य- ङ्गनिष्ठोद्देश्यताकत्वविरहान्न पूर्वमाडिति भावः) अनि- त्येत्यादि च्छ्वोश्शूडितिसूत्रे तकारोऽपि च्छकारात्पूर्वं प्रश्लिष्यते तेन तुग्विशिष्टस्यच्छकारस्य प्रष्टेत्यादौ शकारोऽन्यथाऽन्तरङ्गत्वाच्छेचेति तुकि छकारस्य शका- रेऽपि तकारश्रवणापत्तिः नचाकृतव्यूहपरिभाषया

भवत्येव तस्य स्थानिवत्त्वस्याभ्यासकार्यप्रतिबन्धकत्वाभावात्। इयं चाङ्गसंबन्धिन्याङ्गेति स्वरितो वा इति सूत्रे भाष्ये। तत्र हि कुमार्यै इत्यादौ यणुत्तरमाडुक्तः। इयं चानित्या श्चोरिति सतुङ्निर्देशात्। अन्यथाङ्गत्वात्पूर्वं तुकः शादेशे तुकोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः ॥ ५५ ॥

---

सतुगिति वाच्य न्तस्या असत्वात् अनित्यत्वाभावे तु वार्णपरिभाषयैवान्तरङ्गादपि तुकः पूर्वं शकारे सतुग्निर्देशस्य वैयर्थ्यं स्पष्टमेव ॥ नच समानस्थानिकत्वाभावात्परिभाषाया अप्रवृत्तेर्वैयर्थ्याभाव इति वाच्यम् समानस्थानिकत्वस्याप्यनित्यत्वमूलकत्वात् नच समानस्थानिकत्व एवेयमित्येव सतुग्निर्देशाज्ज्ञाप्यते इति युक्तम् स्योनइत्यादौ यणुगुणयोरसमानस्थानिकत्वेनानया पूर्वं गुणस्यैवापत्तेः वृश्चस्यत इत्यादावनया तुकः पूर्वं नुमः प्रवृत्तेरभावापत्तेश्च अङ्गसम्बन्धिन्याङ्ग एवेत्यसङ्गतमेव कुमार्यै इत्यादावस्या अनित्यत्वादेवाटः पूर्वमप्रवृत्तिसिद्धेरत एव ज्ञाने वारिणी इत्यादावाङ्गत्वादन्तरङ्गाभ्यामपि वृद्धिपूर्वसवर्णदीर्घाभ्यां पूर्वं श्यादेशोऽन्यथा श्यादेशस्याङ्गादेश्यकत्वाभावादेतस्या अप्रवृत्या पूर्वमप्रवृत्त्यापत्तेर्नैव तस्य वैयर्थ्यं हलन्ते चारितार्थ्यादिति दिक् ॥ ५५ ॥

नन्वेवं सेदुष इत्यादौ क्सोरन्तरङ्गत्वादि
ततः संप्रसारणेऽपीटः श्रवणापत्तिरिति चे
अत्र केचित् ॥

## अकृतव्यूहाः पाणिनीयाः ॥ ५६ ॥

न कृतो विशिष्ट ऊहो निश्चयः शास्त्र
प्रवृत्तिविषयो यैरित्यर्थः । भाविनिमित्तविनाशे
इत्यध्याहारः । बहिरङ्गेणान्तरङ्गस्य निमित्त

---

नन्वेवमिति पूर्वोपस्थितनिमित्तककार्य्यस्य मनु
ष्योयं प्रातरुत्थाय शरीरकार्य्याणि करोतीति लोकव
येन प्रथमं प्रवृत्तिवर्णने सतीत्यर्थः (क्सोरन्तरङ्गत्वादि
टीति) सदूधातोर्लिटः क्सौ धातोर्द्वित्वेत्वाभ्यासलो
पेषु सेदवस् इत्यवस्थायामेव वलादित्वरूपशीघ्रोप
स्थितनिमित्तकस्येटः शास्त्रप्रत्ययोत्पत्त्युत्तरप्रवर्त्तिष्य
माणसंप्रसारणात्पूर्वं प्राप्तेरिति भावः इटः श्रवणाप
त्तिरिति तत्स्थानिकयणः श्रवणापत्तिरित्यर्थः यणुच्चार
कमिट एवश्रवणं वा बोध्यम् । केचिदिति दोषितादृ
इत्यर्थः अध्याहार इति । अन्यथा यथाश्रुतपरिभाषा
शास्त्राणां वैयर्थ्यापत्तिरिति भावः बहिरङ्गेणेति फलि
मिदं नतु बहिरङ्गत्वान्तरङ्गत्वे परिभाषाप्रवृत्तौनिमित्त
पश्चादिति उत्तरकालिके इत्यर्थः अत्र चेति परिभाषा
यामित्यर्थः समर्थानामिति । कृतसन्धिकायादितितदर्थ
अन्यथेति परिभाषाया अभावइत्यर्थः अन्तरङ्गत्वादिति

विनाशे पश्चात्सम्भाविते ऽन्तरङ्गं नेति यावत् । अत्र च ज्ञापकं समर्थानां प्रथमाद् इति सूत्रे समर्थानामिति । तद्धि सूत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम् अन्यथान्तरङ्गत्वाद्दीर्घे कृत एव प्रत्ययप्राप्त्या तद्व्यर्थता स्पष्टैव । तत्र हि भाविन्यादिवृद्ध्या सवर्णाच्त्वविनाशः स्पष्ट एव । न चात्रैकादेशप्रवृत्तिसमये वृद्धप्राप्त्यैकादेशे कृते आदेशे वृद्धेः प्राप्तावपि तन्निमित्तविनाशाभाव इति वाच्यम् । तद्द्वारैव तन्निमित्तविनाशसत्त्वे-नाक्षतेः । न च सौत्थितौ बहिरङ्गतया वृद्धेर-

---

प्राप्तिमत्वन्तत्वमप्राप्तिकत्वञ्च वहिरङ्गत्वम् अच्त्ववि-नाशइति अल्पाच्तरमिति सौत्रप्रयोगाक्षिवतिभाष्य-प्रयोगाभ्यामच्पिपदत्वं वैकल्पिक मितिभावः तद्वा-रैवेति । एकादेशविनाशद्वारैवेत्यर्थः ओपायेत्यत्र दीर्घ-निमितस्यात्वस्यादेशोऽनुवर्तमानस्य धर्म्मिनाशान्नाशः सन्निपातपरिभाषा प्रवृत्तिप्रयोजकइवएकादेशेऽपिसतः सवर्णाच्त्वरूपनिमित्तस्य धर्म्मिनाशादेवनाश एतत्प-रिभाषाप्रवृत्ति प्रयोजकइतिभावः निमित्तविनाशइत्य-स्वनिमित्तविशिष्टाविनाशइत्यर्थोवा वै० स्वप्रतियोगि-कत्वस्वस्थानिकादेश प्रतियोगिकत्वैतदन्यतरसम्बन्धेन नचसूत्थिताविति । ननु ज्ञातस्य तत्कालप्राप्तस्य वा

सिद्धत्वान्न तन्निमित्तविनाश इति वाच्यम् । सम-र्थग्रहणेनैतद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात् यत्तु समर्थग्रहणेनान्तरङ्गपरिभाषाया अनित्यत्व-मेव ज्ञाप्यत इति तन्न । असिद्धपरिभाषया समका-लप्राप्तबहिरङ्गस्य पूर्वंजातबहिरङ्गस्य चान्तर

---

बहिरङ्गस्यैवासिद्धत्वं बहिरङ्गपरिभाषयाबोध्यते इ-ह्यभविष्यत्प्रासिकत्वात्कथं दीर्घापेक्षयाऽसिद्धत्वमिति चेदत्रोच्यते अन्तरङ्गप्रवृत्तिसमये उपस्थितस्य बहिर-स्यासिद्धत्वम्बोध्यते अनुपस्थितस्याप्यसिद्धत्वे मान-भावात् उपस्थितिश्चान्तरङ्गप्रापकतयातत्प्रतिबन्धक-तयाच तेन रूपेणोपस्थितिः प्रायस्तयोरेवेत्येतत्फलि-तैव जातस्येत्याद्युक्तिर्ग्रन्थकारस्य प्रकृतेच स्वप्रवृत्ति प्रति-बन्धकपरिभाषाप्रवृत्तिकारणीभूताया वृद्धेः परिभा-षाद्वारास्वप्रतिबन्धकतया दीर्घप्रवृत्तिसमये उपस्थितै-वृद्धिरिति तस्या असिद्धत्वं युक्तमेवेतिबोध्यम् किञ्चा-न्तरङ्गनिमित्तविनाशनिमित्तकत्वेनान्तरङ्गदेशस्थत्वेन प-परिभाषाप्यन्तरङ्गा तदृष्ट्यैव तत्समकालप्राप्ताया वृद्धे-रसिद्धत्वेन परिभाषाया अन्तरङ्गनिमित्त विनाशश-नाभावात् न प्रवर्त्तेतसेति बोध्यम् । समर्थग्रहणेनोति-यष्ठिनानचारितार्थ्यंतत्कल्पनीयमेवेति बोध्यम् एतद्वि-षये अकृतव्यूहपरिभाषारूपान्तरङ्गे कर्त्तव्ये इत्यर्थः अनित्यत्वमेवेति नतु परिभाषेतिबोध्यम् तथाच सुत्थि-थितशब्दे दीर्घस्य प्रथमप्रवृत्त्याऽकृतसन्धेरेव प्राप्त-

कर्तव्ये ऽसिद्धत्वं बोध्यते न तु जाते ऽन्तरङ्गे तस्य तत्त्वं बोध्यते मानाभावात् फलाभावाच्च। एवं च तूत्थितादावेकादेशस्य परिभाषासाध्यत्वाभावेन तदनित्यत्वज्ञापनासंभवात्। अन्तरङ्गानपि विधिनित्यादेरप्यस्यामेवान्तर्भावः। एतत्प्रवृत्तौ च निमित्तविनाशसम्भावनापि निमित्तम्। अत एव गोमद्भ्यडीत्यादौ हल्ङ्यादिलोपो न। अन्यथा

---

त्ययवारणार्थं समर्थग्रहणमितिभावः। तदनित्यत्व ज्ञापनासम्भवादिति सु उत्थितेति स्थिते वृद्धेरप्रवृत्त्या दीर्घस्य च प्रवृत्त्याऽन्तरङ्गपरिभाषां विनैव निराबाध दीर्घप्रवृत्त्या कृतसन्धिकार्य्यादेव प्रत्ययोत्पत्तिसम्भवेन समर्थग्रहणस्य चारितार्थ्याभावेन ज्ञापकत्वासङ्गत्यापत्तेः नहि परिभाषाधीनादीर्घप्रवृत्तिर्येनानित्यत्वात्तदप्रवृत्तावप्राप्तदीर्घप्रवृत्त्यर्थं चरितार्थं समर्थग्रहणं स्यादिति भावः अस्यामेवान्तर्भाव इति गोमत् प्रियत्यादौ गोमत्सुप्रियस्वित्यवस्थायां हल्ङ्यादिलोपनिमित्तं सुः कारणमात्रस्यनिमित्तत्वात् तस्यसामासिकलुकाविनाशस्य भावित्वात् पूर्वं हल्ङ्यादिलोपस्यानयैवाभावसम्भवात् प्रदायेत्यादौ जग्ध्यादेशनिमित्तस्य तादिकित्वस्य ल्यपाविनाशस्य भावित्वात् पूर्वं जग्ध्यादेशस्याप्राप्त्या एवपि जग्ध्यादेशार्थं ल्यब्ग्रहणमिति भावः कृतसन्धेरेवोत्पत्त्यर्थं च, एतत्प्रवृत्ताविति, अकृतव्यूहपरिभाषा प्रवृत्तावित्यर्थः निमित्तविनाश-

हलुङ्याादिलोपकाले सामासिकलुकोप्राप्त्या तदुत्त
चापहार्याभावादप्राप्त्या लोपस्यैवापत्तेः । अति
चात्रापि यदि लोपो न स्यात्तर्हि लुक् स्यादिति
सम्भावना । अल्लोपोन इति सूत्रस्थतपकरणं
परिभाषानित्यत्वज्ञापनेन चरितार्थम् । तथा
इत्यादौ लोपवारणाय । अन्यथा दीर्घाभावे लोप
सम्भावनयैतत्परिभाषाबलाद्दीर्घाप्राप्तौ तद्वैय

---

सम्भावनेति यद्यन्तरङ्गं पूर्वं न प्रवर्त्तेत तदा बहिरङ्ग
णान्तरङ्गनिमित्त विनाशस्स्यादिति सम्भावनेत्यर्थः ।
अतएवेति सम्भावनायानिमित्तत्वादेवेत्यर्थः । अन
थेति सम्भावनायानिमित्तत्वाभाव इत्यर्थः लोपस्यैवा
पत्तेरिति निमित्तविनाशस्य भावित्वाभावेन प्रकृत
परिभाषाया अप्राप्तेरितिभावः । ननु सम्भावनायानि
मित्तत्वेतपरकरणं व्यर्थमित्यत आह अल्लोपोन इ
त्वदीति तपरकरणंहीत्यर्थः । आन इति अनुधातो
क्विपि अनुनासिकस्येति दीर्घे शसि रूपम् लोपेति
आलोपेत्यर्थः अन्यथेति अनित्यत्वाभावइत्यर्थः दीर्घा
भाव इति यदि दीर्घोनस्यात् तर्हि लोपस्स्यादिति दीर्घ
निमित्तविनाश सम्भावनायास्सत्वेन दीर्घाप्राप्तौ स
त्यपि तपर करणे लोपप्राप्त्या तपरकरणं व्यर्थमिति
बोध्यम् अनित्यत्वफलन्त्वतिभवकानित्यादौ सर्व
नामसंज्ञायानिमित्तभूतानुपसर्जनत्वस्य भाविनासमा
सेन विनाश सम्भावनायाऽमनया वाक्येऽपि सर्वनाम

स्पष्टमेवेत्याहुः। समर्थानामिति सूत्रे कैयटस्तु समर्थवचनेनेयं परिभाषा ज्ञाप्यते अकृतव्यूहाः पाणिनीया इति। तेन पपुष इत्यादावन्तरङ्गत्वात् पूर्वं कृतोपीडागमो निवर्तत इति वदन् नकृतो व्यूहो विशिष्टस्तर्को निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैरित्यर्थमभिप्रैति। निमित्तापाये नैमित्तिकस्याप्यपाय इति यावत्। सूत्थितादिजि वृद्धौ दीर्घनिवृत्तौ सावुत्थितिर्माभूदिति समर्थाना-

---

त्वाप्राप्तावक चोऽप्रवृत्त्यापत्तिरनित्यत्वेऽकच्सिद्धिरिति दान् शान् भ्यां धातुभ्यां क्विपि शसि दानः शान इत्यादौलोपाभावस्तु न तपरकरणफलन्तयोर्नित्यण्यन्तत्वेन णिलोपस्य स्थानिवद्भावेन लोपाप्राप्तेः सावुत्थितिर्माभूदिति ननु कृतदीर्घात् सूत्थितशब्दादिञि दीर्घरूपादेशस्य वृद्धावपि न तयादीर्घनिमित्तविनाशो दीर्घेणैव स्वनिमित्तविनाशस्य कृतत्वात् किञ्च नैमित्तिकस्यदीर्घस्य वृद्धौवविनाशात् परिभाषया तद्विनाशस्याशक्यत्वाच्चेदमनुपन्नं किञ्च दीर्घविनाशेऽपि देवदत्तहन्तृहतन्यायेनोकारश्रवणमप्यनुपन्नमिति चेदत्रोच्यते। निमित्तस्य विनाशेतत्प्रयुक्तकार्यविशिष्टस्यस्थाने तत्कार्यरहित स्वरूपाति देशोऽनया बोध्यते तावतैवनैमित्तिकविनाशस्योपपत्तेरुकारश्रवणोपपत्तेश्च दीर्घनिमित्तसौत्वस्य सवर्णत्वस्यै कादेशेऽपिसत्वादूवृद्धौ व तस्य विनाशाचनकिमप्यनुपपन्नं किञ्चनमित्तं सवर्णात्वं नैमित्तिकश्चादेशस्थितिः स्थानिनोनिवृत्तिश्च तत्रदीर्घ-

मिति। लोकन्यायसिद्धञ्चायमर्थः। तथा हि लोके निमित्तं द्विविधं दृष्टम्। कार्यस्थिति नियामकं तदनियामकं च। आद्यं यथा न्यायनयेऽपेक्षाबुद्धि-स्तन्नाशे द्वित्वनाशाभ्युपगमात्। वेदान्तनये प्रार-

---

कादेशोऽप्यनुवर्त्तमान सवर्णात्तवस्य वृद्धाविनाशे उका-रूपस्यानिनोनिवृत्तिरूपनैमित्तिकस्याप्यपाये ऽभावा-भावस्यप्रतियोगिरूपतयोकारागमे आद्योकारस्यनिवृत्ति पूर्वकौकारेविहिते आवादेशोसावुत्थितिः प्राप्नोतीति बोध्यम्। समर्थानामितीति, कृतसन्धिकार्यादेवप्रत्य-यस्थितिरिति बोधनेन निमित्तापाय इत्यस्यात्राप्रवृत्ति-स्समर्थग्रहणेन बोध्यतइति सौत्थितिसिद्धिः। निमित्त-विनाशेभाविनि नैमित्तिकस्यानुत्पत्तिः, निमितविनाशे सति जातस्य नैमित्तिकस्यापाय इत्युभयोर्ज्ञापकसिद्ध-त्वाविशेषेऽपि कैयटमते लोकसम्मतत्वमपीति प्रदर्श-यति लोकन्यायेति। कार्यस्थिति नियामकमिति याव-न्निमित्तं तिष्ठति तावत्कार्यं तिष्ठतीत्यर्थः अपेक्षाबुद्धि-रिति अयमेकः अयमेक इत्याकारापेक्षाबुद्धिस्ततोद्वि-त्वसंख्योत्पत्तिस्ततोऽपेक्षाबुद्धिनाशस्ततोद्वित्वनाशइति लोकस्थितिस्तत्र निमित्तभूतापेक्षाबुद्धिनाशान्नैमित्तिक-स्यद्वित्वस्य नाशोदृष्टः प्रारब्धस्येति कर्म्मद्विविधं सञ्चितं प्रारब्धञ्च यत् फल प्रदानोन्मुखन्न तदाद्यं यदा तदुन्मुखं तद्द्वितीयं तत्राद्यस्य ब्रह्मसाक्षात्कारेणनाशः

स्य विक्षेपस्थितिनियामकत्वं च प्रसिद्धमेव। द्वितीयं यथा दण्डादि तन्नाशेऽपि घटनाशादर्शनात्। शास्त्रे लक्ष्यानुरोधाद्व्यवस्था। भाविनिमित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चित् न्यायो नापि संप्रतिपन्नो दृष्टान्तः। समर्थानामित्यस्यापि लोकसिद्धार्थज्ञापनेन चारितार्थ्यसम्भवे लोकासि-

---

क्षीयन्ते चास्यकर्म्माणि तस्मिन् दृष्टेपरावरइति श्रुतेः द्वितीयस्यतु भोगादेव क्षयः नाभुक्तं क्षीयते कर्म्मकल्पकोटिशतैरपीति वचनात् तत् यावदस्तितावत् भोगात्मकः संसारस्तस्य नाशो संसारनाश इति वेदान्तिमतम्, विक्षेपेति संसारेत्यर्थः वस्तुतस्तु अपेक्षाबुद्ध्यादिस्थले तथादर्शनेऽपि निमित्तनाशत्वेन नैमितिकनाशत्वेन कार्यकारणभावः दण्डनाशे घटनाशादर्शनेन व्यभिचारात् किन्त्वपेक्षाबुद्धिनाशत्वादिविशेषरूपेणैव कार्यकारणभावस्य वक्तव्यतया न प्रकृतोर्थोलोकन्यायसिद्धस्तथा च प्रक्षालनाद्धिपङ्कस्येतिन्यायात् लुकाऽनुत्पत्तेरिव नैमित्तिकानुत्पत्तिरेव युक्तेत्याहुस्तन्नायमर्थोलोकेऽपि क्वचिद्दृष्ट इत्येतावन्मात्रे ग्रन्थतात्पर्यात् लक्ष्यानुरोधाद्व्यवस्थेति अनेनास्यानित्यत्वं लब्धमिति बोध्यम् तेनातिभवकानित्यादावनयाऽकज्नयुक्त इत्यपास्तम्। सम्प्रतिपन्न इति वादिप्रतिवादिसम्मत इत्यर्थः ननु ज्ञापकसिद्धेऽर्थे नास्ति दृष्टान्ताद्यपेक्षेत्यत आह समर्थानामिति। परिभाषाभिर्नैव सर्वदोषपरिहारमाह परे-

द्धापूर्वताद्दृशार्थज्ञापकत्वे मानाभावश्च इति तदाश
इति बोध्यम् । परे तु सेदुष इत्यादौ पदावधिके
ऽन्वाख्याने सेद्वस् अस् इति स्थिते इट्संप्रसारणयोः
प्राप्तयोः प्रतिपदविधित्वात्पूर्वं संप्रसारणे तद
दित्वाभावादिटः प्राप्तिरेव नेति तत्सिद्धिरिति
समर्थानामिति सूत्रे कैयटेऽसिद्धवदत्रसूत्रे च कैय

---

त्वित्यादिना । पदावधिकेऽन्वाख्यान इति पदं विभ
ज्यसाधुत्वान्वाख्यान इत्यर्थः प्रतिपदविधित्वादिति प्र
पदोक्तत्वादित्यर्थः सम्प्रसारणसूत्रे वसोस्साक्षादुप
दानात्तत्वम् नन्विडागमविधायकेऽपि वस्वेकाजि
सूत्रेवसोस्तथैवोपादानादुभयोस्समत्वमेवेति चेन्न वस
काजिति सूत्रस्यनियमार्थत्वेनेतर व्यावृत्तिमात्रतात्प
कत्वेनार्द्धधातुकस्येड्वलादेरित्यस्यैव विधायकत्वेन
त्वाभावात् नच स्वमते नियमशास्त्रस्यविधिमुखेन
प्रवृत्तेस्तत्वमस्त्येवेति चेन्न प्राचीनाभिमतपरिभाषा
स्तन्मतेनैव खण्डनस्यौचित्यात् स्वमते सद् सद् व
असितिविभागेऽन्तरङ्गत्वात्सम्प्रसारणं पूर्वं बोध्य
उभयोः प्रतिपदविधित्वे नित्यत्वात् संप्रसारणस्य पू
प्रवृत्तेश्चवस्वन्तसमुदायस्यैवोभयत्राश्रयणेनमान्तरङ्ग
त्वमिटः ननु पूर्वमिडागमेऽपि सम्प्रसारणे यणि सम्प्र
सारणस्यासिद्धत्वाद्धलियलोपेरूपसिद्धिरिति वाच्य
नाजानन्तर्य इत्यस्यान्तरङ्गे कर्त्तव्येकृतेचेत्यर्थेनादुपूर्व
त्यत्रैव दोषाभावात् । बाधकत्वेबीजमिति अपवादस

स्पष्टमेतत् । यद्यपि प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे बीजं तथापि पूर्वप्रवृत्तौ सावकाशत्वेऽपि नियामकं भवत्येवेति तदाशयः । निरूपितं चैतद्बहुशः शब्देन्दुशेखरे । समर्थानामिति सूत्रस्यसमर्थग्रहणं तु विषुण इत्यादावकृतसन्धेः प्रत्ययदर्शनेन सर्वत्र तथाभ्रमवारणाय न्यायसिद्धार्थानुवाद एव । ध्वनितं चेदं विप्रतिषेधसूत्रे भाष्ये । तत्र हि वैक्षमाणिरित्यन्तरङ्गपरिभाषोदाहरण-

---

स्वप्रवृत्त्युत्तरोत्सर्गप्रवृत्तिप्रतिबन्धकत्वे बीजमित्यर्थः इदन्तुसावकाशमिति भावः ननु सेदुष इत्यस्यान्यथैवोपपत्तौ परिभाषाया अनभ्युपगमेन सौत्थितिरित्यादावन्तरङ्गत्वात् कृतदीर्घेभ्य एव प्रत्ययोत्पत्त्या समर्थानामिति व्यर्थमित्याह समर्थानामिति विषुणइत्यत्र विष्वगित्युत्तरपदलोपश्चाकृतसन्धेरिति वार्तिकात् विषु अच् इत्यवस्थायां न प्रत्ययः अचोलोपः न्यायसिद्धार्थानुवाद एवेति नतुदोषवारणायेत्यर्थः । ध्वनितञ्चेदमिति न्यायसिद्धार्थानुवादत्वं ध्वनितमित्यर्थः इदं हि तत्रभाष्यं वृद्धेरेकादेशः वैक्षमाणिः सौत्थितिः वृद्धिश्चप्राप्नोत्येकादेशश्च परत्वाद्वृद्धिस्स्यादेकादेशोभवत्यन्तरङ्गत इति कृतसन्धिकार्योत्प्रत्ययोत्पत्त्यर्थं चेत् समर्थग्रहणमन्तरङ्गत्वाभावेऽपि प्रत्ययोत्पत्तेःप्रागेवैकादेशस्यावश्यकत्वेनान्तरङ्गत्वाधीनत्वमेकादेशस्योच्यमानमसङ्गतं स्यादिति बोध्यम् ममतु समर्थग्रहणस्यान्तरङ्गत्वसिद्धा-

मुक्तम् । किञ्च विभज्यान्वाख्याने सु उत्थित प्रसङ्ग इति स्थिते वार्णादाङ्गं बलीय इति प्राप्तवृद्धिवारणाय समर्थग्रहणमित्यत्रैव कैयटे स्पष्टम् । अत एवासिद्धवत्सूत्रे वसुसंप्रसारणमज्विधौ सिद्धं वक्तव्यं पपुष इत्यादौ वसोः संप्रसारणे कृते आतो लोपो यथा स्यादिति भाष्ये उक्तम् । पदस्य विभज्यान्वाख्याने पूर्वोक्तकैयटरीत्या पूर्वं संप्रसारणे इटोऽप्रा-

थंबोधकत्वेन नदोषः । ननु समर्थग्रहणेनाकृतव्यूहपरिभाषाज्ञापिता सा तद्धितविधौ न प्रवर्त्तते इत्येव तत्र बोध्यते ततश्चान्तरङ्गत्वादेवैकादेशो वैक्षमाणिरित्यत्रेतियुक्तन्तदुदाहरणत्वमस्येत्यरुचेराह किञ्चेति । वृद्धिवारणायसमर्थग्रहणमिति तथाच पूर्वमेव दीर्घइति भावः एवं च समर्थग्रहणस्यसार्थकत्वाद् ज्ञापकत्वाभावइत्याशयः ननु समर्थग्रहणेनाकृतव्यूहेति ज्ञाप्यते तत्र प्राप्तवृद्धिवारणायसमर्थग्रहणं वार्णपरिभाषातु नातिरिच्यते अकृतव्यूहरूपैवसेत्यरुचेराह अत एवेति परिभाषाया अभावादेवेत्यर्थः ननु दीक्षित मते पपुष इत्यादौ सम्प्रसारणेन वलादित्वरूपनिमित्तविनाशे भाविनि पूर्वमिटोऽप्रवृत्तेः सम्प्रसारणेकृते तन्निमित्तक एवातोलोपोवाच्यस्सम्प्रसारणस्य सिद्धत्वे स नस्यादिति युक्त एव परिभाषायां सत्यां वार्तिकारम्भः कैयटमतेऽपि पूर्वमन्तरङ्गत्वादिटितन्निमित्तकालोपे च कृते सम्प्रसारणेऽटोनिमित्तस्य वलादित्वस्य विनाशे निमित्तापाय इति परिभाषयेटोऽपाये तयैवतन्निमित्तकातोलोपस्याप्यपाये

प्रावुस्निमित्तक एवातो लोप इति तदाशयः। अन्यथान्तरङ्गत्वादिटि तन्निमित्तक एवातो लोप इति तदसङ्गतिः। अत एव चौ प्रत्यङ्गस्य प्रतिषेध इति वचनं वार्त्तिककृतारब्धं भाष्यकृता च न प्रत्याख्यातम्। प्रत्यङ्गमन्तरङ्गम् अस्यां परिभाषायां सत्यां तु तद्वैयर्थ्यं स्पष्टमेव। अत एव च्छ्वोरिति सूत्रेऽवश्यमत्र तुगभावार्थो यत्नः कार्योऽन्तरङ्ग-

---

पुनस्सम्प्रसारणनिमित्तकएवालोपोवक्तव्यइति तस्या-सिद्धत्वाभावाय वार्त्तिकारम्भस्यावश्यकत्वान्नैतद्भाष्य-विरोधः परिभाषास्वीकर्त्तुरित्यत आह अत एवेति। प्रतीच इत्यादौ प्रति अच असितिस्थिते अन्तरङ्गत्वा-त्प्राप्तस्य यणः प्रतिषेधे अल्लोपे दीर्घे च प्रतीचइति-सिद्धम् ननु प्रतिषेधोनापूर्वः किन्त्वकृतव्यूहपरिभाषा-लभ्य एवात एव न प्रत्याख्यात इत्यत एवारुचेराह अत-एवेति वस्तुतस्तु चावितिदीर्घविधानसामर्थ्याद्यणाद्य-भावमुपपाद्यवार्त्तिकं प्रत्याख्यातमेव तथा च भाष्यम् इहान्ये आचार्य्याश्चौ प्रत्यङ्गस्य प्रतिषेधमाहुस्तदिहापि साध्यम् नैष दोषः एतदेवज्ञापयत्याचार्य्यो न चौप्रत्य-ङ्गम्भवतीति यदयं चौदीर्घत्वं शास्तीति ननु अस्मादपि परिभाषाया अभाव एवलभ्यते सत्यांहितस्यांदीर्घत्व-सामर्थ्यौक्तिरसङ्गतेति चेन्न दीर्घत्वसामर्थ्येन परिभा-षैवांशतोज्ञाप्यत इति तात्पर्य्यात् प्रच्छेत्यादौ छकारमा-त्रस्य शत्वे तन्निमित्तकतुकः श्रवणं स्यादित्यत उक्तमव-श्यमित्यादि। एतत्सत्वेऽनित्ति परिभाषायास्सत्वेऽपि-

त्वाद्धि तुक् प्राप्नोतीति भाष्ये उक्तम् । एतत्सत्त्वे तु तुको ऽप्राप्त्या यत्नावश्यकत्वकथनमसङ्गतमिति स्पष्टमेव । न चैतदनित्यत्वज्ञापनार्थमेव तदिति तदाश्रयोऽवश्यमत्रेत्यन्तरस्वारस्यभङ्गापत्तेः । किञ्चा- नयैव प्रत्ययोत्तरपदयोश्च श्रदो जग्धिर्ल्यप्तिकिति ल्य- योश्चारितार्थ्येन तज्ज्ञापकत्वग्राल्लुग्ल्यपोरन्तर- ङ्गबाधकता भाष्योक्ता भज्येत । किञ्चैषा भाष्ये

---

त्यर्थः यत्नश्च क्त्वोरितिसूत्रेसतुग्ग्रहणरूपोबोध्यः एतदनि- त्यत्वेति परिभाषाऽनित्यत्वेत्यर्थः । अवश्यमत्रेत्यन्त- रस्वारस्येति तुकोनिवर्त्तकोपायस्य सर्वथाऽभावेहि तत्- कथनौचित्यमितिभावः नच प्रकृतिप्रत्यापत्तिवचने- तस्या अनित्यत्वेन वांछधातोः क्विपि शादेशाभावाय यत्नावश्यकत्वं नतुपरिभाषाया अभावेनेति वाच्यं तावताप्यन्तरस्वारस्यभङ्गस्यैवापत्तेरत एवारुचेश्चाह किञ्चानयेति । त्यमादेशजग्ध्यादेशानां निमित्तभूतवि- भक्तितादित्वयोर्लुग्ल्यब्भ्यां विनाशसम्भावनयाऽनया पूर्वमप्रवृत्त्या प्रत्ययोत्तरपदयोश्चेति सूत्रस्य ल्यबग्रहणस्य चारितार्थ्यंबोध्यम् यदि चाकृतव्यूहपरिभाषाज्ञाप- कतयैवतज्ज्ञापकता भाष्याभिप्रेतेत्युच्यते तदानाय- दोषोऽत आह किञ्चेति । एषेति अकृतव्यूहपरिभाषे- त्यर्थः अकृतव्यूहेत्यानुपूर्व्या अदर्शनेऽपि अन्तरङ्गानपि विधीनित्यादिना तद्दर्शनमस्त्येवेति नकिञ्चिदेतदित्यत

दृश्यते। तदुक्तमसिद्धवत्सूत्रे कैयटेन। निमित्तापाये नैमित्तिकस्याप्यपाय इति परिभाषाया भाष्यकृताऽनाश्रयणादिति। पदसंस्कारपक्षे हरिरित्यादौ विसर्गे कृते ततो गच्छतीत्यादिसंबन्धे हरिः गच्छतीत्यादचैव साधु। तद्विषये पदसंस्कारपक्षानाश्रयणं वेति दिक्॥ ५६॥

---

आह तदुक्तमिति। स्वरूपतोऽनाश्रयणमात्रेण कैयटोक्तिसङ्गतिरिति चेत् परिभाषास्वीकार एवेयुक्त इत्यबेहि गच्छतीत्यादि सम्बन्धेनावसानभङ्गे भाविनि पूर्वं विसर्गप्रवृत्त्याऽवसाननिमित्तकजातस्य विसर्गस्य निवृत्त्यावा हरिर्गच्छतीति भवति परिभाषासत्वे, तस्या अभावे तु वाक्यसंस्कारपक्षे तत्सिद्धावपि पदसंस्कारपक्षेहरिः गच्छतीत्यस्याप्यापत्तिरिति दूषणमिष्टापत्यावारयति पदसंस्कारपक्षइत्यादिना। वस्तुत इदमयुक्तं विसर्जनीयस्यस इति सूत्रभाष्यविरोधात् तन्नहि विसर्जनीयस्य स इति सूत्रेखरीत्यस्यानुवृत्त्यभावेऽपि खरनिमित्तकस्यैवविसर्गस्य सत्वमुभयनिमित्तकविसर्गस्य सत्वे विसर्गविधानस्यवैयर्थ्यं खरवसानयोस्सत्वविधानेनैव सिद्धेरवसानमात्रनिमित्तकस्य सत्वे शर्परेविसर्गविधानस्य वैयर्थ्यं तत्र सत्वाप्राप्त्या विसर्गस्य सिद्धेर्नचवासः क्षौममद्भिः प्सातमित्यादौ ≍क≍पयोर्बाधनार्थं तत्सार्थकत्तावन्मात्रप्रयोजनकत्वे कुप्वोः ≍क≍पौचाशरीत्येव ब्रूयादितिरीत्या खरीत्यस्यानुवृत्तिस्तिरस्कृता

ग्यवसाननिमित्तकस्य विसर्गस्यावसानभङ्गे भाविन्यपि पूर्वं प्रवृत्तिरवसानभङ्गे वा जातस्य तस्य निवृत्यभाव स्तदा पदसंस्कारपक्षे कः, इत्यवसाने विसर्गे कृते स्सरुरितस्य सम्बन्धे सत्वाभावार्थं शर्परइत्यस्यावसानमात्रनिमित्तकविसर्गस्य सत्वविधानेऽपि चारितार्थ्यसम्भवेन भाष्योक्ता ज्ञापकताभज्येत तस्मात् परिभाषामन्तव्या पदसंस्कारपक्षस्यैतद्विषयेऽनाश्रयणं वेत्यरुचेराह तद्विषय इत्यादि परिभाषाया अभावेतु हरिओमित्यस्य वैदिकसम्प्रदायसिद्धशिक्षाकारवचनबलात् कथञ्चित्साधुत्वं वाक् शब्दे पूर्वजातस्य कुत्वस्यानिवृत्त्या वागाशीर्दत्तोवाचिक इति रूपस्य कथं सिद्धिरिति वाच्यम् पूर्वत्रेत्यत्र विषयसप्तम्या सपादसप्ताध्यायीकार्यप्रवृत्तिसम्भावनायां त्रैपादिकस्य पूर्वमप्रवृत्तिरित्यर्थात् तद्विषये वाक्यसंस्कारपक्षस्यैवाश्रयणाद्वा नाप्येतस्या अभावे वृक्णोवृक्णः स्त्र्यत इत्यादौ पूर्वत्रासिद्धीयमद्विर्वचन इत्यनेनासिद्धत्वनिषेधाद्विसर्गान्तेषु ... र्येषु कृतेषु सर्वस्यद्वे इति द्वित्वे पूर्वखण्डे रोरभावात्वानापत्या रूपासिद्धिरापाद्या तस्यानित्यत्वेनादोषा निमित्तापायइत्यस्याभावे छागतिनिवृत्ताविति पाठे षकारानिमित्तकष्टुत्वस्य धात्वादेरितिसत्वेन ... निवृत्तावपि निवृत्यभावे स्थाता स्थानमित्पाद्यसिद्धिः ष्टुत्वस्य लक्षणवशसंपन्नत्वेन बोधकत्वेन तात्पर्यविषयीभूतस्वरूपस्यैव त्रेस्त्रय इत्यत्रेव बोध्यतया लक्ष्ये नकारे जावनुस्वारेत्यभियुक्तोक्तया टवर्गश्रवणाप्रसक्तेः विभाजयितृशब्दाण्ण्यन्तात्तृजन्ताद् विभाजयितु

अन्तरङ्गादप्यपवादो बलीयान् ॥५७॥

तत्रापवादपदार्थमाह। येन नाप्राप्ते यो विधिरारभ्यते स, तस्य बाधको भवति। प्राप्तइति भावे क्तः। येन नाप्राप्तइत्यस्य यत्कर्तृकावश्यकप्राप्ता-

णिलोपश्चाङ्ग् च वाच्य इति वार्त्तिकादजि णिलोपेच विभाजिश्रमितिसिद्धाति परिभाषाया अभावेऽन्तरङ्ग-त्वाण्णेर्गुणायादेशयोस्सतोरलोन्त्यपरिभाषया यकार-मात्रस्य लोपापत्तिः परिभाषायान्तु गुणायादेशयो र्निमित्तभूतस्य णेर्लोपेन विनाशसम्भावनया पूर्वमप्र-वृत्त्या णेरिकारस्यैव लोपेनादोषः नच यलोप इतिव-क्तव्ये णिग्रहणसामर्थ्याद्गुणायादेशौ नेति वाच्यं वि-भाजीतिणिभिन्नेकारान्त प्रतिपादिकादाचारक्विवन्तात् तृचि विभाजयितृशब्दाद्यलोपप्रस्ययोरापत्तेरिति चे-दस्तु परिभाषा तथासत्यन्तरङ्गानपीतिपरिभाषाद्वयम-नेकत्रानेकक्लिष्टकल्पनञ्च नाश्रयणीय मिति लाघवमिति दिक् ॥ ५६ ॥ परनित्यान्तरङ्गेति संग्राहकवाक्याच्चर-मसमर्थं निष्कृष्य प्रमाणयति अन्तरङ्गादप्यपवादोवली-यानिति अत्रापवादः पक्षः परादीनां संग्राहकोऽपिः हेतुरप्यपवादस्वरूपोऽपवादशब्देनैवोक्तस्तथाचापवाद-पदार्थस्य सनिरूपकतया यन्निरूपितापवादभूतं यच्छा-स्त्रं तत् तस्मात् परान्नित्यादन्तरङ्गादपि बलवदपवाद-त्वादित्यनुमानाकारलाभः तत्रेति तच्छब्देन पूर्वोक्ता-नुमानप्रयोगः परामृश्यते घटकत्वं च सप्तम्यर्थोऽपवा-दपदार्थान्वयि आहेतयस्यापरं कर्म्म आरभ्यत इत्यन्त-

वित्यर्थो नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात्
एवं च विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृ
सामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्र
बाधः । तदप्राप्तियोग्ये ऽचारितार्थ्यं ह्येतस्य बाध
कत्वे बीजम् । अत एवायादय इति सूत्रे गोपायि
ष्यतीत्यादावायादीन्बाधित्वा परत्वात्स्यादे

---

मेवापवादत्वस्य बलवत्वप्रयोजकताबीजं लोकसि
माह सतस्य बाधकोभवतीति भावेक्तइति नपुंसके
क्तस्य योगे षष्ठ्या उपसङ्ख्यानमिति वार्त्तिकेन
त्र छात्त्रस्य हसितमित्यत्रेव कर्त्तरिषष्ठी न शेषषष्ठी
भाष्ये तस्य प्रत्याख्यानात् अत्र च शेषत्वस्यावि
वक्षणात नञोऽप्राप्तइत्यनेन समासे नलोपापत्
त्तिरसमासे प्रथमान्तप्रतियोगिवाचकपदाभावादत्य
न्ताभावबोधानापत्तिस्तस्मान्नैकधेतिवन्निषेधार्थक नञ
ब्दस्य सुप्सुपेतिसमासः पृषोदरादित्वान्न लोपाभावो
वा येनेति कर्त्तरि तृतीया नञ्द्वयस्येति निषेधार्थ
कनशब्दपक्षे नञर्थकद्वयस्येत्यर्थः प्रकृत्यर्थे प्राप्तौ दार्ढ्य
व्यापकत्वमेव तदेवावश्यकत्वमवश्यम्शब्दसमानार्थ
कोऽवश्यशब्दोप्यस्ति आवश्यकाधमर्ण्ययोरितिनिर्देशात्
फलित माह एवञ्चेत्यादि । ततोऽपोदंलब्धं शास्त्रस्यो
द्देश्यतावच्छेदकव्यापकधर्म्मावच्छिन्नोद्देश्यताकशा
स्त्रस्य बाधकं यथा वृद्धिरेचोतिशास्त्रस्योद्देश्यतावच्छेद
कमेजव्यवहितपूर्वत्वविशिष्टत्वं तद्व्यापकमजव्यवहित
पूर्वत्वविशिष्टत्वन्तदवच्छिन्नोद्देश्यताकस्याद्गुणइतिशा

अस्यवृद्धिरेचीति बाधकम् मूले विशेषपदेन बाधकत्वेनाभिमतस्य ग्रहणं द्वितीयविशेषपदं व्याप्यबोधकं सामान्यपदञ्च व्यापकपरं सामान्यधर्म्मे सामान्यविशेषपदार्थमहिम्नैव लब्धं विशेषधर्म्मावच्छिन्नवृत्तित्वं शब्दतस्तत् कथ्यमानं येन केनापि सम्बन्धेनव्याप्यव्यापकभावे हसितालाभार्थं नतूद्देश्यतावच्छेदकतावच्छेदकसम्बन्धेनैवेत्याग्रहस्तेनाजादेर्द्विर्तीयस्येत्यत्रैकाचोद्वे प्रथमस्येत्यस्य बाधस्तस्य ह्युद्देश्यतावच्छेदकं धात्ववयवादिभूताच्परत्वविशिष्टं द्वितीयैकाच्त्वं तच्च यद्यप्युद्देश्यतावच्छेदकतावच्छेदकस्वरूपसम्बन्धेनोर्णुनावेत्यत्र नुशब्देऽस्ति तत्र धात्ववयवप्रथमैकाच्त्वं स्वरूपसम्बन्धेननास्ति किन्तूर्णित्यत्रास्तीति तयोस्सामानाधिकरण्यस्याप्यभावेन व्याप्यव्यापकभावस्य सर्व्वथाऽभावेऽपि स्वघटकाच्त्ववदुत्तरत्वसम्बन्धेन प्रथमैकाच्त्वस्य द्वितीयैकाचि सत्वात्तस्य द्वितीयैकाच्त्व व्यापकत्वमुपपन्नं। नन्वत्र बाधः कः पदार्थः न तावत् व्यापकधर्म्मावच्छिन्ने व्याप्यधर्म्मावच्छिन्नभिन्नत्वबोधनन्तथासत्यजादेर्द्विर्तीयस्येत्येतदीयोद्देश्यतावच्छेदकमादिभूताच्त्वंव्याप्यंतद्धर्म्मावच्छिन्नातिरिक्तत्वस्य प्रथमैकाच्त्वघटकाच्त्वस्यव्यापकत्वात्तद्धर्म्मावच्छिन्ने बोधनं स्यात्तथासति धातोरादिभूतायेऽच् तद्भिन्नाज्घटितोयः प्रथमैकाच् तस्य द्वित्वमित्यर्थे आटतुरित्यादावडित्यस्य तदादिभूताद्भिन्नाज्घटितत्वाभावाद्द्वित्वानापत्तेः अणुपितंतद्धितत्वस्यादिवृद्ध्युद्देश्यतावच्छेदकस्य व्याप्यतया तद्धर्म्मावच्छिन्नातिरिक्तत्वस्योपधावृद्ध्यन्तवृद्ध्युद्देश्यता-

वच्छेदके व्यापकीभूते ञिण्णित्प्रत्ययत्वे बोधनेनो
पावृत्तेरन्तरङ्गेश्च ञिण्णित्सन्निहितभिन्ने एव प्रवृत्त्या ञि
ण्णित्सन्निहिते तयोरप्रवृत्तेर्न्यायेनैव सिद्धावनुशातिकादि
गणे पुष्करशब्दस्य पाठसामर्थ्याद्वादिवृद्धिरन्त्यो
पावृद्धीबाधतेइतिभाष्यविरोधापत्तेश्च सच पादोऽनु
शातिकादीनाञ्चेत्युभयपदवृद्ध्यर्थः नवा यैर्यैर्विशेषणै
र्यैर्यैर्विशेष्यभूतैः पदार्थैर्विशेषितोव्याप्योधर्म्मस्तैस्तै
र्विशेषितव्याप्यधर्म्मावच्छिन्नातिरिक्तत्वबोधनं व्या
पकीभूतधर्म्मावच्छिन्ने सः तथासति द्वितीयैकाजि
ष्ठपरत्वावधिभूतत्वविशिष्टं धात्ववयवादित्वविशि
ष्टयवृत्त्वं तदवच्छिन्नातिरिक्तत्वबोधनेनाऽऽदुरित्या
दावट्धातुघटकस्याचस्तदतिरिक्तत्वसत्त्वान्नदोषः ऊर्णु
नावेत्यादौ च द्वितीयैकाच्त्वं तु तन्निष्ठपरत्वावधित्वस्य
धात्ववयवाद्यच्त्वस्य चोकारे सत्वेन तदवच्छिन्नाति
रिक्तत्वविरहान्न तद्घटितस्य द्वित्वमेतदर्थं येन केनापि
सम्बन्धेनेत्यादिनिवेशस्यनोपयोग इत्यपियुक्तमुक्तभा
ष्यविरोधतादवस्थ्यात् नच ततएव भाष्याद्व्याप्य
भूतया शाब्दबोधीयविषयतया व्यापकीभूतायाश्शाब्द
बोधीयविषयताया बाधो नतु व्याप्यधर्म्मावच्छिन्नवि
षयतया व्यापकधर्म्मावच्छिन्नविषयतायाबाधः, शा
ब्दबोधीया च विषयता शाब्दबोधीयविशेष्यतया
प्रकारतया च संकुचिता भवति तत्रश्चोपधाभूताज्निष्ठ
विशेष्यतानिरूपिताव्यवहितपूर्वत्वसम्बन्धावच्छिन्नप्र
कारताकोपधावृद्धिसम्बन्धिनी ञिण्णित्प्रत्ययत्वाव
च्छिन्ना विषयताऽजन्ताङ्गनिष्ठविशेष्यतानिरूपिताव्य

हितपूर्वत्वसम्बन्धावच्छिन्नान्यवृत्तिसम्बन्धिनी या प्रणिणत्प्रत्ययत्वावच्छिन्ना प्रकारतारूपा विषयता प्रातिपदिकनिष्ठविशेष्यतानिरूपिताव्यवहितपूर्वत्वस- म्बन्धावच्छिन्नप्रणिशब्दितत्वावच्छिन्नप्रकारतारूप- विषयताया न व्यापिका तदभाववति मरुच्छब्दप्रकृति- कइंस प्रत्यये एतस्याः सत्त्वात् तथाच न्यायेन बाधा- प्राप्त्या ज्ञापकेन बाधस्साधितः अथ योद्देश्यदलप्रवि- ष्टैर्विशेष्यैर्विशेषणैश्च पदार्थैर्विशेषितायः उद्देश्यताव- च्छेदको धर्म्मस्स एव व्याप्यतया व्यापकतया च गृह्यते- तथापि न भाष्यविरोधः प्रातिपदिकोत्तरत्वविशिष्टणि- णिसञ्ज्ञितस्यापेक्षयाऽशुपधोत्तरत्वाजन्तोत्तरत्वविशि- ष्टणिणित्प्रत्ययत्वस्य मारुतिरित्यत्र व्यभिचारेणा- व्यापकत्वात् इदमेवाभिप्रेत्यानवकाशविषयत्वं विधेय- विषयत्वमेतस्योच्यते अनयोः पक्षयोर्बाधोऽपि विषय- तायां व्याप्यविषयताश्रयातिरिक्तवृत्तित्व बोधनेनता- दृशधर्म्मे तादृशधर्म्माश्रयातिरिक्तवृत्तित्वबोधनम् इको- यणचीत्यादौ इक्त्वावच्छिन्नकार्यिताऽचत्वावच्छिन्न- निमित्तताया बाधोत्प्रेक्षा कैयटस्य तु न युक्ता इग्निष्ठ- विशेष्यतानिरूपिताव्यवहितपूर्वत्व सम्बन्धावच्छिन्ना- च्त्वावच्छिन्नप्रकारतात्मकनिमित्तताना क्रान्ते सुधी- कारे कार्यिताया अज्निष्ठाव्यवहितपूर्वत्वसम्बन्धाव- च्छिन्नप्रकारतानिरूपितेक्त्वावच्छिन्नविशेष्यतारूपाया- स्सत्त्वेनाव्याप्यत्वात् नन्वेवमपि नेमौ रहौ कार्यिणौ निमित्तनिर्वचनस्येति ग्रन्थेन रत्वावच्छिन्ननिमित्ततया- पत्वावच्छिन्नकार्यिताया बाधे भाष्योक्तोऽसंगत-

स्थात् यणो मयो द्वे वाच्य इति शास्त्रीयाया मयः प
त्वविशिष्टयण्त्वावच्छिन्नकार्यितायाः अचोरहाभ्यामि
तिशास्त्रीयाया अजुत्तरत्वविशिष्टरेफहकारान्यतरोत्त
रत्वविशिष्टयत्वावच्छिन्नकार्यितायाश्चाजुत्तरत्वविशि
ष्टयपूर्वत्वविशिष्टरत्वावच्छिन्ननिमित्तत्ववति हर्यनु
भवइत्येतद्घटकरेफे अभावेनाव्यापकत्वात् केवल
मनचिचेतिशास्त्रीयाया अचःपरत्वविशिष्टाच्पूर्वत्वा
भावविशिष्टयत्वावच्छिन्नकार्यिताया एव व्याप
तया तस्यां स्वाश्रयातिरिक्तवृत्तित्वबोधने हर्यनुभ
वे रेफस्य द्वित्वाभावोपपादनेऽपि भद्रह्रदे पररेफस्या
चोरहाभ्यामित्यनेन धात्रंशे रेफस्य यणोमयइत्यनेना
ह्रेत्यादावनचिचेत्यनेन द्वित्वापत्तेर्वज्रलेपत्वात् न
बाध्यसामान्यचिन्तया सकलद्वित्वकार्यिताबाधक
मिति विवरणकारोक्तं युक्तमिति वाच्यम् एकस्यानेक
शास्त्रप्रयोज्यं यत्रानवकाशत्वं तत्रैव बाध्यसामान्यचि
न्ता विषयत्वेन विवरणस्य गुरुचरणैः खण्डितत्वादिति
चेदत्रोच्यते अन्योयं तक्रकौण्डिन्यन्यायात् माठरपा
वेषणन्यायो येन रत्वावच्छिन्ननिमित्ततया यर्यण्
त्वावच्छिन्नकार्यिताया बाधस्तेन च व्याप्यधर्मावच्छि
न्नविषयतया व्यापकधर्मावच्छिन्नविषयताया बाध
स्यावच्छेदकव्याप्यधर्मावच्छिन्नातिरिक्तवृत्तित्वस्य
व्यापकधर्मावच्छिन्नविषयतायां बोधनं बाधस्तथा च
रेफातिरिक्तस्यैव यरो द्वित्वम् एतन्न्यायमादायैवैकेषां
पचोत्यत्र कार्यितया निमित्तत्वबाधं युक्तमाशंक्य
तस्मादित्युत्तरस्येतिनिर्देशेन समाहितं कैयटेन परन्तु

बाध्यबाधकयोरेकप्रकरणस्थत्वं यत्र तत्रैवायं न्यायः प्रवर्त्तते तत्त्वञ्च यत्किञ्चिदनुगतरूपावच्छिन्नस्यप्रतिपाद्यत्वेन विषयत्वं यस्यामिच्छायां तत्प्रयोज्यकृतिविषयत्वं भवति च वर्णद्वित्वप्रतिपादनविषयकमहेच्छापूर्वकावान्तरेच्छाधीनकृतिगोचरत्व मचोरहा भ्यामित्यारभ्य दीर्घादाचार्य्याणामित्येतदन्तसूत्रवार्त्तिककदम्बस्य तद्घटकयर्णपदयोरेफेतरस्वार्थपरता सूपपादैव इदञ्च नैरजिकोयणचीत्यादीनां भिन्नप्रकरणस्थानामिति न तत्रास्य विषय इति दिक् नन्वादगुण इकोयणचीत्यनयोर्बाधकत्वमकस्सवर्णेदीर्घइत्यस्येष्यते तन्नोपपद्यते दीर्घशास्त्रीयसवर्णाजव्यवहितपूर्वत्वविशिष्टाक्त्वावच्छिन्नविषयतां प्रत्यादगुणइत्येतदीयाजव्यवहितपूर्वत्वविशिष्टात्त्वावच्छिन्नविषयतायाः श्रीशइत्यादौ व्यभिचारेणाव्यापकत्वादजव्यवहितपूर्वत्वविशिष्टेक्त्वावच्छिन्नविषयतायाश्च दैत्यारिरित्यादौ व्यभिचारेणाव्यापकत्वादितिचेन्न दीर्घीयविषयताधिकरणे तत्तद्विषयतात्वेन तयोरभावेऽप्यन्यतरविषयतानास्तीत्याकारकाभावस्यासत्त्वेन तदन्यतरत्वस्याभावप्रतियोगितानवच्छेदकत्वेन स्वाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वरूपव्यापकत्वस्योभयत्र सत्वात नन्वेवं प्रमेयत्वादिना दीर्घीयविषयताया अपि यणीयविषयतां प्रतिव्यापकत्वादव्यवस्थापत्तिरितिचेन्न दीर्घशास्त्रस्य वैयर्थ्यापत्त्या तेन रूपेणव्यापकतामादाय बाधायोगात् व्यापकतावच्छेदकोधर्म्मो विषयतागततद्व्यक्तिस्वरूपतद्घटितरूपस्सोऽपिव्याप्याघटितएवगृह्यतइतितत्त्वम्

नचैवमपि एरनेकाजितिशास्त्रीयविषयतागुणीयवि-
षयतायणीयविषयतान्यतमत्वेन व्यापकतया गुणा-
देरिवैरनेकाजितियणोऽपि बाधापत्त्या वातप्रम्यीतिव-
द्धीति न स्यादेवं विसर्जनीयस्यसः शर्परे विसर्जनीयः
इत्यनयोरप्यन्यतरत्वेन व्यापकतामादाय कुप्वोः ≍क≍
पौ चेत्यनेन बाधापत्त्या वासः क्षौममित्यादावपि जि-
ह्वामूलीयाद्यापत्तिरिति वाच्यम् स्वीयविषयताविशि-
ष्टधर्म्मावच्छिन्नविषयताकशास्त्रस्य स्वेन बाधइत्यर्थात् वै-
स्वव्यापकतावच्छेदकत्व स्वव्यापकतावच्छेदकधर्म-
विशिष्टभिन्नत्वोभयसम्बन्धेन पुनर्वै ० स्वव्यापकत्वस-
भिन्नत्वोभयसम्बन्धेनान्यतमत्वे आद्यसम्बन्धसत्वेऽपि
द्वितीयसम्बन्धाभावोयतः स्वव्यापकतावच्छेदकमन्य-
तरत्वं तद्व्यापकत्वतद्भिन्नत्वसम्बन्धाभ्यां तद्विशि-
ष्टस्यैव सत्त्व मन्यतरत्वं तु स्वविषयताविशिष्टं भवति
तत्राद्यसम्बन्धोऽस्ति द्वितीयोप्यस्ति यतोव्यापकता-
वच्छेदक मन्यतमत्वमन्यतरत्वञ्चाद्यस्यान्यतरत्वेव्या-
पकत्वन्नद्वितीयस्य तस्मिन् भेदोनेति अन्यतरत्ववद्विषय-
ताप्रयोजकयोरेव बाधो नत्वन्यतमत्ववद्विषयताप्रयोज-
कस्यैरनेकाजित्यस्येतिद्रष्टव्य मेवं विसर्जनीयस्यस इत्ये-
तदीयविषयतागततद्व्यक्तित्वस्य व्यापकतावच्छेदक-
त्वात्तद्विशिष्टत्वमेवान्यतरत्वस्येति न तदादायोभयो-
र्बाधोऽपि तु तद्व्यक्तित्वस्यैव स्वविशिष्टत्वात्तद्व-
द्विषयताप्रयोजकसत्वशास्त्रस्यैव बाध इति सर्व मव-
दातम् नन्वेवमुक्तदितिशास्त्रीयविषयताया व्यापकता-
वच्छेदकमुपधायाश्च मृजेर्वृद्धिः पुगन्तलघूपधस्येति

शास्त्रत्रयीयविषयताश्रयगतमन्यतमत्वं तत्र व्यापकता-
वच्छेदकं यत्पुगन्तेत्युपधायाश्चेतिशास्त्रत्रयीयविषयता-
श्रयगतमन्यतरत्वन्तद्विशिष्टत्वमेव स्वव्यापकत्व स्व-
भिन्नत्वोभयसम्बन्धेन नतु तद्विशिष्टभिन्नत्वमित्यन्य-
तमत्वविच्छिन्नविषयताश्रयप्रयोजकशास्त्रत्रयस्य बाधेन स्या-
दितीररारामपवादइत्यनुपपन्नमितिचेन्न स्वव्यापकता-
वच्छेदकविशिष्टभिन्नत्वमिति द्वितीयसम्बन्धस्थाने स्व-
व्यापकतावच्छेदकत्व, स्वव्यापकतावच्छेदकविशिष्ट-
भिन्नत्वोभयसम्बन्धेन स्वविशिष्टविशिष्टभिन्नत्व-
निवेशेनादोषात् उभयत्र सम्बन्धघटकवै० स्वव्यापकत्व
स्वभिन्नत्वोभयसम्बन्धेनैव तथाचान्यतरत्वं स्वविशिष्टं
न तस्य स्वव्यापकतावच्छेदकत्वेऽपि स्वव्यापकतावच्छे-
दकलघूपधीय विषयतागततद्व्यक्तित्वस्योक्तोभयस-
म्बन्धेनवैशिष्ट्यमेव नतु तद्विशिष्टभिन्नत्वमिति द्वितीय-
सम्बन्धाभावात् ततश्चान्यतमत्वे स्वविशिष्टविशिष्ट-
भिन्नत्वमक्षतमेव नन्वेवमपि स्वविशिष्टं पुगन्तेतिवि-
षयतागतं तद्व्यक्तित्वं तद्विशिष्टमेवोभयसम्बन्धेना-
न्यतमत्वमिति विफलस्तेप्रयास इति चेदत्रोच्यते
स्वविशिष्टवैशिष्ट्ये स्वव्यापकाव्यापकत्व रूपतृतीयो-
पि सम्बन्धोदीयते ततश्च तद्व्यक्तित्ववैशिष्ट्यमन्यत-
मत्वे नास्ति स्वव्यापकमन्यतरत्वन्तद्व्यापकत्वस्यैव-
सत्वात् परेतु अपवादशब्दोत्रबाधकपरः उऋदित्यत्र
ऋकारस्य चङो णेश्च प्रातिस्विकरूपेणोपादानादुप-
धायाश्च पुगन्तलघूपधस्यच मृजेर्वृद्धिरितिसूत्राणां प्रति-
पदविधित्वेनैव बाधक मुऋदितिसूत्र मित्याहुः

ननु गुणदीर्घोत्वानामपवाद इति ग्रन्थेनाचिक्रं तद्दृत्या गुणादिं प्रत्यपवादत्वमुच्यमानमसंगतं स्यात् तथा तदीयविषयतानां तिस्रस्तिष्ठन्तीत्यत्र दीर्घोत्वयोः प्रिय तिस्रःपुत्र इत्यत्र गुणदीर्घयोर्विषयताया व्यभिचारेण तत्तद्व्यक्तित्वेनाव्यापकत्वात् नापित्रितयमात्रवृत्त्यन्यतमत्वेन व्यापकता युक्ता प्रियतिस्रोरित्यादौ सर्वासामभावेन तेनाप्यव्यापकत्वात् नापीकोयण्चीतिविषयताघटितान्यतमत्वेन व्यापकत्वं तथा च न प्रियतिस्रोरित्यत्रव्यभिचारशंकेति युक्तम् स्वव्यापकतावच्छेदकयणीयविषयतागततद्व्यक्तित्व वैशिष्ट्यस्यैतादृशान्यतमत्वे सत्वादितिचेन्न प्रियतिस्रोरित्यादौ विकोयणचीत्यनेनैव रेफस्य सिद्धतयाऽचिक्रं देतदीय विषयताया अदग्धदहनन्यायेन तत्राभावात् त्रितयस्यैवान्यतमत्वेनैव व्यापकताया स्सुवचत्वात् । एवमप्येत्येधत्यूठ्स्वित्यस्येणेधविषये पररूपबाधने मात्रतात्पर्येणोपसर्ग एव प्रवृत्त्या तत्र सर्वत्र पररूपस्य प्राप्त्या व्यापकत्वरक्षुण्णाबाधस्तद्घटितयोरोमाङोश्चेङिपररूपयोरन्यतरत्वेनव्यापकता मादाय न बाधोऽन्यतरत्वे निरुक्त वैशिष्ट्य विरहात् ननु यचिभमित्यत्र स्वादिष्वितिसुप्तिङन्तमित्यनयोर्बाध इष्यते अतएव राजन्येत्यत्रान्तर्वर्तिविभक्त्या पदत्वमादायापि नलोप स्सच बाधो नस्यादन्यतरत्वे निरुक्त वैशिष्ट्यविरहादिति चेन्न द्वितीयसम्बन्धघटक वैशिष्ट्ये चतुर्थोपि स्वसमनियताभयावृत्तिधर्माश्रयविषयत्वाऽव्याप्यावृत्तित्वरुपः सम्बन्धो निवेश्यत इत्यदोषात्

सुप्तिङन्तमिति विषयतायाः स्वादिष्वितिविषयतां प्रत्यव्याप्यत्वात्, अतोगुणइत्यकस्सवर्णइत्यस्यैव बा-धकन्तु प्रथमयोः पूर्वसवर्णः अकस्सवर्णइत्यनयोः, श्रोष्ठादि ग्रहण मसंयोगोपधादित्यस्यैव बाधकम् नतु न क्रोड़ादिसहितासंयोगोपधादित्यस्य, नासिको-दरग्रहणं। नक्रोड़ादीत्यस्यैव बाधक न्नतुसहनयसहि-तस्य न क्रोडादीत्यस्य, नन्वेवमाम् याट्स्याटोर्बाधको न स्या दपि तु याट एवेति चेन्न याटोऽपवादत्वात् स्याटः परत्वाद्बाधइत्यदोषात्, यत्रान्यतरत्वादिना बाध स्तत्र बाध्यसामान्यचिन्ता यत्र तद्व्यक्तित्वेन बाध स्तत्र बाध्यविशेषचिन्ता मध्येऽपवादन्यायपुरस्ताद-पवादन्यायौ च पूर्वोक्तबाधबीजवर्णनेन गतार्थौ, व्या-पकत्वं बाध्यताबीज मुक्त्वा बाधकताबीजं व्याप्यत्व माह तदप्राप्तियोग्यइति अत्रेदं बोध्यम् तदप्राप्तियोग्ये-ऽचारितार्थ्येसति कृतेऽप्यचारितार्थ्यमेकं तदप्राप्तियोग्ये ऽचारितार्थ्येसतिकृतेचारितार्थ्य द्वितीयं सङ्कोचबी-जम् आद्यस्थले उत्सर्गोद्देश्ये अपवादेन स्वप्रवृत्तियो-ग्यातिरिक्तत्वं बोध्यते तत्रापवादे जाते प्राप्तौ सत्या मुत्सर्गः प्रवर्त्तते यथारमायामित्यत्रामि कृतेऽपियाट् प्रवर्त्तते द्वितीयस्थले उत्सर्गोद्देश्ये अपवादेन स्वप्रवृत्ति-योग्यातिरिक्तत्वं स्वविहितकार्य्याश्रयातिरिक्तत्वञ्च बोध्यते यथा सर्वेषामित्यदौ सुटिकृतेऽपि न नुट् ननु स्वमोर्नपुंसकादित्यस्याप्राप्तियोग्येऽचरितार्थत्वात् कृते ऽपिलुक्यचरितार्थत्वादतोऽमित्यनेन स्वप्रवृत्तियोग्यं ज्ञानंस्वति तद्भिन्नत्वेनैवलुक उद्देश्यतावच्छेदकावच्छि-

न्नै संकोचात् कृतेमि लुक्स्या न्नचाम्विँधानसामर्थ्याद स्वविहितकार्य्याश्रयातिरिक्तत्वेनापि सङ्कोचइतिवाच्य न्नियमभङ्गेनाव्यवस्थापत्तेस्तावतापि दुर्वारत्वादिति चेन्न स्वप्रवृत्त्युत्तरोत्सर्गश्चाऽप्रवृत्तिसम्भावनाप्रयोज्यवैयर्थ्यसम्भावनाविषयत्वाभावेसति तदप्राप्तियोग्येऽचरितार्थत्वेसति कृतेऽप्यचरितार्थत्वं यत्र तत्र स्वप्रवृत्तियोग्यातिरिक्तत्वेन संकोचोऽन्यत्र स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविहितकार्य्याश्रयातिरिक्तत्वेन संकोच इति नियमेऽदोषात् आमो धर्म्मत्रयसत्वादेकरूपेणैव सङ्कोचः अमादेशे सुडागमे च त्रितयाभावसत्वादुभयरूपेण सङ्कोचः। ननु तदप्राप्तियोग्येऽचारितार्थ्येसति कृतेऽप्यचारितार्थ्ये स्वप्रवृत्तियोग्यातिरिक्तत्वेन सङ्कोच इत्येवापवादस्थलेऽस्तु नतु कृतेचारितार्थे उभयरूपेण सङ्कोचः फलाभावात् सुट्शास्त्रे आम्याकारप्रश्लेषेणाकारादावामि सुटो विधानेन नुटि आमादित्वाभावेन सुटोप्रवृत्ते रजादेर्द्वितीयस्ये त्यस्य कृते प्रथमैकाचोद्वित्वे चारितार्थ्येन परत्वादेव बाधकत्वं सर्वत्र इतिन्यायेन प्रथमस्याप्रवृत्तिरुभयरूपेण सङ्कोचे ईघ्राध्योरित्यस्य द्वित्वे कृते चरितार्थस्य प्रवृत्तौ द्वित्वानापत्तेः पचाव इति कृते पक्व इत्यत्र कुत्वानापत्ते श्च तदोसः स्सावितिसूत्रानाप्यक इतिसूत्राभ्यान्त्यदाद्यत्वबाधापत्ते श्चातएवेदमोम इति सूत्रं चरितार्थं तत्रान्यस्याश्रयणेतु यस्सावेदोयः पुंसीति सूत्राभ्यां त्यदाद्यत्वबाधेनैव मकारोपपत्तौ तस्य वैयर्थ्यापत्तेः सामर्थ्याद नित्यत्वकल्पनापेक्षया तस्यानाश्रयणकल्पनस्यैवयु-

प्राप्नुवन्तीत्याशङ्क्यानवकाशा आयादयः गोपायतीत्यादावपि शबादिःप्राप्नोति। नच सति शप्यसति वा न विशेषः। अन्यदिदानीमिदमुच्यते

कत्वाद्द्विर्येङ्कृत्यादौ परत्वादिग्यादेशो सकृद्गतिन्यायेन द्वित्वाभावः पिप्ये इत्यादौ कृते द्वित्वे चरितार्थत्वात् परत्वात् प्यादेशे पुनः प्रसङ्गविज्ञानात् द्वित्वमिति चेदस्तु तथैवेति केचित्, बाधकताबीजन्तु। तदप्राप्तियोग्ये-अचारितार्थ्यमेकमेव तद्व्याप्यत्वमितियावत् ननु तत्कृतवैयर्थ्यं न घा तदुघटकोत्सर्गप्राप्तिस्सफलैवेत्याग्रहः तेन लुटि कृते चारितार्थ्येऽपि सुट् बाधकः एङ्ह्रस्वादित्यस्य हेत्रपो इत्यत्र लुका बाधेऽपि तत्र नलुमतेतिनिषेधानित्यत्वेन चरितार्थोऽपि ह्रस्वस्य गुण एङ्ह्रस्वादित्यस्य बाधकस्तेनहेहरे इत्यत्र गुणे कृते सुलोपायैङ्ग्रहणं चरितार्थम्। अत्रैव प्रमाणमुपन्यस्यति अतएव आयादयइत्यादिना अतएवेत्यस्य तद्व्याप्यत्वमात्रस्य बीजत्वादेवेत्यर्थः आयादयो वा सार्वधातुके नित्यमिति न्यासमुपक्रम्येदं भाष्यं प्रवृत्तम् गोपायिष्यतीत्यादावायादीन् बाधित्वा परत्वात् स्यादयस्स्युः तत्र कृते सार्वधातुकेनित्यमित्यस्याप्राप्त्या आद्ययोगेन वैकल्पिके आयप्रत्यये गोपायिष्यति गोपिष्यतीत्यस्य सिद्धिस्स्यादिति भावः ननु आयादीनां कथमनवकाशत्वं गोपायतीत्यादौ स्वप्रत्ययाप्राप्तियोग्ये चारितार्थ्यादित्यत आह गोपायतीत्यादावपोति स्यतासिशपामन्यतमत्वेन बाध इति भावः ननु शपिकृतेऽपि गोपायति

नास्तिविशेष इति यदुक्तमायादीनां स्यादिभि
व्याप्तोऽवकाश इति स नास्त्यवकाशइति भा

अकृतेऽपि गोपायतीति फलाभावाच्छप्स्यादिति
अनवकाशत्वमायादीनामित्यत आह अन्यदिदानीमि
शपः प्राप्तिः फलवती माभूदायादीनां व्याप्यत्वन्त्वस्त
येति भावः एतद्भाष्याद् व्याप्यत्वमात्रस्यबाधकता
बीजत्वंलभ्यते एवमत्रेति· यथा शपः फलाभावे
प्राप्तिमात्रेण व्याप्यत्वमेवम् अत्र, बाध्यबाधकभा
कृते चारितार्थ्येऽपि व्याप्यत्वं बाधकताबीजमस्त्येवे
भावः । पूर्वग्रन्थेन कृते चारितार्थ्येऽपि बाधोभवती
त्यर्थस्य लाभेऽपि तत्र प्रमाणान्तरदानाय स्पष्टार्थमुच्य
किञ्चानेनन्यायेनेति, अन्यथेति व्याप्यत्वमात्र
बाधकताबीजत्वाभावे इत्यर्थः अनवकाशत्वेनेति वै
र्थ्येनेत्यर्थः तस्य किञ्चिदर्थज्ञापकत्वन्तु ज्ञापकस
सुप्रसिद्धमिति भावः एतत्कथनेत्ति येननाप्राप्ति
न्यायकथनेत्यर्थः, कृते चारितार्थ्येऽपि बाधे फल
यथेति। अनभ्यासग्रहणं प्रत्याचक्षाणस्य भाष्यकार
मतेनेदम्बोध्यम् अत्र परत्वाद्बाधेनाप्यदोष इत्यरुचेरा
यथेति अलोन्त्यस्येत्यनेनैकवाक्यतयाविधाने पुनरा
परस्येत्यनेनैकवाक्यत्वे प्रमाणाभावेनादेः परस्येत्य
न कृतेचारितार्थ्यमित्यरुचेराह तदुक्तमिति, सत्य
सम्भव इति, समावेशसम्भवेऽपीत्यर्थः अन्यथेति
चारितार्थ्याभाव एव बाधकत्वाङ्गीकारइत्यर्थः अत
एवेति व्याप्यत्व मात्रस्य बाधकत्वबीजत्वादेवेत्यर्थः
विषयभेद इत्यस्य विभिन्नकार्यित्वमित्यर्थः अविरा

उक्तम्। एवमत्रैतत्प्रवृत्त्युत्तरं चारितार्थ्येपि तद-
प्राप्तावकाशो नास्तीति सममेव किन्त्वनेन न्यायेन
तत्प्रवृत्त्युत्तरमपि चरितार्थ्ये तद्बाधबोधनम्।
अन्यथाऽनवकाशत्वेनैव बाधे सिद्ध एतत्कथनस्यैव
वैयर्थ्यापत्तेरुक्तकौण्डिन्यन्यायप्रदर्शनस्यापि वैय-
र्थ्यापत्तेश्च। यथा प्रथमद्विर्वचनस्य तदुत्तरं साव-
काशेनापि द्वितीयद्विर्वचनेन बाधः। यथा चादेरपि
प्रवृत्त्या चरितार्थेनादेः परस्येत्यनेनालोऽन्त्यस्ये-

---

शेनेति प्रकृते रेफादेशः, प्रत्ययस्य नुडिति विषयभेदः
स्पष्टः विषयभेदे अपवादत्वाभावे शंकासमाधाने निर्द
ले स्यातामिति भावः। तेनेति। नतिक्षिति ज्ञापकेने-
त्यर्थः, ननु विषयभेदेऽपि बाधे ब्राह्मणेभ्योदधि दीयतां
कम्बलः कौण्डिन्यायेत्यादावपि कम्बलदानेन दधिदा-
नस्य बाधापत्तिः सुटा यासुट् नवाध्यते लिङो यासुट्
तकारथकारयोस्सुडिति विषयभेदादिति फक्किकाप्य-
नुपपन्नेति चेन्न सजातीययोरेव बाध्यबाधकभावो
भवति दधितक्रयोर्भोजने रुच्युत्पादकत्वेनास्ति सा-
जात्यं न दधिकम्बलयोरेवमेककालिकयोरेव बाध्यबा-
धकभावोतएवाद्य ब्राह्मणाय दधि दीयतां श्वः कौण्डि-
न्याय तक्रमित्यादौ न बाध्यबाधकभावस्तथाच परस्मै-
पदेष्वित्यत्र विषयसप्तम्या लिङ एव यासुट् आदेशा-
नन्तरकाले तकारथकारयोः सुडिति कालभेदान्न बाध्य-
बाधकभावः विषयभेदादित्यस्य कालभेदादित्यर्थः।

त्यस्य बाधः । तदुक्तं मिदचोऽन्त्यात् इति सू
भाष्ये सत्यऽपि सम्भवेबाधनं भवतीति । अन्य
ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत
तक्रदानेनदधिदानस्य बाधो न स्यात्तद्दाने
तत्पूर्वं वा तद्दानस्य चारितार्थ्यसम्भवात् ।
एव विषयभेदे ऽप्यपवादत्वम् । अत एवाचि
---
अतएव प्यायः पीत्यनेन लिड्यङोश्चेति विषयस
लिटः पूर्वमेव प्यादेशेन न पिप्ये इत्यादौ द्वित्व
इत्यदोषात्, विन्मतोर्लुगिति प्रकृत्यैकाजित्यस्य प्र
ख्याने स्रजिष्ठ इत्यादाविष्ठनि विनो लुकि स्रजि
टे लोपः कस्मान्नेत्याशंक्य लुका स्रग्विणश्रेविनो लु
रम् प्राप्तस्य स्रजष्टेश्च जातिपक्षाश्रयणेनेष्ठन्निमित्त
टिलोपत्वावच्छिन्नस्य बाधेनोभयोर्लोपस्य बाध
भाष्यकारेण सोऽसङ्गतस्स्यात् स्रजेत्यस्य टेर्लोपः
लुगिति विषयभेदादित्यर्थः तस्माद्विषयभेदेऽप
इति सिद्धम् यत्तु दषतेर्दिगिति; द्वित्वोत्तरं दिग्या
स्य चारितार्थ्येन नानवकाशत्वाद्द्वित्वस्य दिग्या
नबाध इति कैयटेन यदुक्तन्ततोविरोधस्त्वया चारि
र्थ्येऽपि बाधाङ्गीकारादित्याह तत्प्रौढ्येति तत् कैयट
प्रौढ्येति अशुद्धमित्यर्थः तेनापीति कैयटेनापि
तस्येति, पूर्वकैयटग्रन्थस्येत्यर्थः तथात्वमिति अशु
मित्यर्थः तदुत्तरग्रन्थेनेति तत्र हि दिग्यादेशस्य
नैवमनवकाशः कृते द्विर्वचने प्रवृत्त्यविघातात् अथ
रेवमप्यनवकाशं मन्यसे तदा ज्ञदयदोषप्रसङ्ग इत्यु

न नुटोप्यपवादत्वाद्बाधमाशङ्क्य न तिस्त्रिति-
ज्ञापकेन समाहितं तृज्वत्सूत्रे भाष्ये। तेन विषय-
भेदेऽपवादत्वाभाव एव बोध्यत इति कश्चित्तन्न,
विन्मतोर्लुक्' टिलोपमात्रस्य बाधानापत्तेः। यत्तु
द्युपतेर्दिगीति सूत्रे द्वित्वोत्तरं दिग्यादेशस्य चारि-
तार्थ्यं कैयटेनोक्तं तन्मौढ्या। ध्वनितं च तेनापि

---

तत्राथ पुनरित्याद्युक्तग्रन्थेन चारितार्थ्यप्रतिपादनपर-
स्य पूर्वग्रन्थस्याशांचग्रस्तत्वमुपाध्यायोमन्यतेइतिध्वन्यते
असम्भवेइति समावेशासम्भव इत्यर्थः दूषित-
त्वादिति सत्यपिसम्भवेबाधनम्भवतीति मिदचो-
न्त्यादितिसूत्रस्थभाष्येण दूषितत्वादित्यर्थः न
ह्यस्यसिद्धुपयोगीति यथोत्तरं मुनीनां प्रामाण्यमि-
तिभावः, तक्रकौण्डिन्यन्यायेन बाधः निरवकाशत्वेन
बाधश्च येननाप्राप्तन्याय एवान्तर्भूत इति सर्वेषां समा-
नविषयत्वप्रतिपादनायाह तक्रकौण्डिन्यायोऽपीति-
तदप्राप्तोति विषयतयोर्व्याप्यव्यापकभावविषय इत्यर्थः
विधेर्विषयइति एककार्यविधायकशास्त्रेणापरकार्य-
विधायकशास्त्रस्य बाधो नत्वेककार्यविधायकशास्त्र
एव व्याप्यधर्म्मावच्छिन्नविषयतया व्यापकधर्म्माव-
च्छिन्नविषयताया बाध इत्यर्थः। इदञ्चाचारितार्थ्यवि-
षयत्वकथनेनैव गतार्थमेकशास्त्रीयविषयतयोर्व्याप्य-
व्यापकभावविरहादितिबोध्यम् रत्वावच्छिन्ननिमित्त-
तया यत्वावच्छिन्नकार्यिताया बाधस्तु माठरपरिवेष-
न्यायादित्युक्तं प्राक् माठरन्यायेनैवच बावस्थान

तस्य तथात्वं तदुत्तरग्रन्थेन । असंभवे एव बाध्यकत्वं विरोधस्य तद्बीजत्वादिति वार्त्तिकमतं भाष्यकृता दूषितत्वान्न लक्ष्यसिद्ध्युपयोगि । तक्रकौण्डिन्यन्यायोऽपि तदप्राप्तियोग्येऽचरितार्थविधेयविषय एव चेति तद्धितेष्वचामादेः धातोरेकाचः इत्यादिसूत्रेषु भाष्ये स्पष्टम् ॥ ५७ ॥

---

इत्यत्र चर्त्वावच्छिन्नविधेयतयाझल्त्वावच्छिन्नकार्यितायाबाधात् चर्भिन्नझलएवचर्त्वविधानाद्रत्नमुषितन्तशब्देऽपवादेनापिवावसान इत्यनेन जस्त्वेन डकारे कृते चर्त्वेन टकारे रत्नमुट् इति तदभावे रत्नमुडिति सिद्ध्यति चरतिरिक्तत्वेन संकोचाभावेतु तक्रन्यायेन जस्त्वं बाधित्वाऽनेन षकारस्यैव चर्त्वेनान्तरतम्यात् षकारे रत्नमुष् तदभावे जस्त्वे रत्नमुडिति स्यात्तु टकारान्तो रत्नमुट् इति बोध्यम् । एतन्न्यायस्य चासार्वत्रिकत्वात् घिशब्दभिन्नत्वेनेदन्ते न संकोचोयकारातिरिक्तत्वेन च वलि न संकोचः । तद्धिते ष्वचामादेरिति तत्र ह्यादिवृद्धौ अन्त्योपधालक्षणवृद्धेः प्रतिषेधो वक्तव्यः कौष्टुः आगत इत्युपक्रम्य मध्ये तक्रकौण्डिन्यन्यायेन बाधमाशंक्य नाप्राप्ते दधिदाने तक्रदानमारभ्यते इह पुनरप्राप्तापामन्त्योपधालक्षणायां वृद्धावचामादिवृद्धिरारभ्यते सुश्रुत् सौश्रुतइति वैषम्यमुद्भावितमनेनाचारितार्थ्यविषयत्वं स्पष्टमेवोक्तम् । धातोरेकाच इत्यादीति अतद्गुणसंविज्ञानबहुव्रीहिणा नित्यंकौटि लुप्सदचरेत्यनयोर्ग्रहस्तत्रहि उत्तरयोर्

क्वचित्तु सर्वथानवकाशत्वादेव बाधकत्वं यथा ङीरामो याडादिबाधकत्वम्। न हि याडादिषु कृतेषु ङीराम् प्राप्नोति निर्दिश्यमानस्य व्यवधानात्। तत्र स्वस्य पूर्वं प्रवृत्तिरित्येव तेषां बाधः। तत्र बाधके प्रवृत्ते यद्युत्सर्गप्राप्तिर्भवति तदा भव-

ग्रहेणविशेषासंप्रत्ययान्नित्यग्रहणानर्थक्यमित्युक्तम् कुटिलगमनतात्पर्यकं व्रजतीति माभूदित्यर्थं नित्यग्रहणं नाभिधानस्वाभाव्याद्व्रजतीत्यनेन कौटिल्यरूप विशेषस्याप्रतीत्या तत्प्रयोगाभावसिद्धेरिति भाष्यार्थः कौटिल्य एव इत्यर्थबोधनद्वारा (क्रियासमभिव्याहारे यङोऽभावार्थन्नित्यग्रहणमस्त्वित्याशङ्कायामाह क्रियासमभिव्याहारे च नैतेभ्यो यङा भवितव्यमिति अत्र चकारेण पूर्वोक्तविशेषासम्प्रत्ययादिति हेतुरनुकृष्यते। वाव्रज्यते जंजप्यते अत्र क्रियासमभिव्याहारस्याप्रतीत्या तत्र तत्प्रयोगाभावसिद्धेस्तदपिनित्यग्रहणस्यनफलमित्यर्थः केवलव्याप्यव्यापकधर्म्मावच्छिन्नोद्देश्यताकयोर्बाध्यबाधकभावेतु अनुकर्षणार्थकचकारवैयर्थ्ये गत्यर्थकधातुत्वधातुत्वयोर्व्याप्यव्यापकभावादेव गत्यर्थकधात्वतिरिक्तत्वेन धातौ सङ्कोचादेव तत्र तत्प्रयोगासिद्धेरितिभावः विधेयविषयत्वकथनेनाजादिशब्दबोधकतया बोध्यतायां न बाधोऽतएव घिशब्दे घिसंज्ञासिद्धिरितिदिक् क्वचित्तु सर्वथानवकाशत्वादिति) इदमपूर्व्वं किन्तु येननाप्राप्तन्यायस्यैवैकदेशमनूद्य तत्र सङ्कोचविशेषः प्रतिपाद्यते इति ॥ ५७ ॥

त्येव, यथा तत्रैव याडादयः । अप्राप्तौ तु न यथा पचेयुरित्यादौ दीर्घबाधके निरवकाश इयादेर्दीर्घाभावः, तदेतत्पठ्यते ॥

## क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति ॥५८॥

अपवादशब्दोऽत्र बाधकपरः तदुक्तं गुणो यङ्लुकोः इत्यत्र भाष्ये अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते अजीगणत् अत्र गणेरीत्वमपवादत्वाद्धलादिः शेषं न बाधते । न गणेरीत्वमपवा

---

तदेतत्पठ्यतइति क्वचिदपवाद इत्यर्थं भापूर्वं किन्तु स्वप्रवृत्तियोग्यातिरिक्तस्थलमात्रबाधनफलित एवेति भावः क्वचिदिति सर्वथानिरवकाशस्थल इत्यर्थः नतु कृते चारितार्थ्ये सति यो बाधक स्सएवापवादशब्दवाच्यो वक्ष्यमाणगुणोयङ्लुकोरितिसूत्रस्थभाष्यात्तद्भाष्ये तर्हि निरवकाशस्थलस्थबाधकतातात्पर्येण अभ्यासविकार इत्यस्य क्वचिदपवादविषय इत्यत्र प्रयुक्तोऽपवादशब्दोऽनुपपन्न इत्यत आह अपवादशब्दोऽत्रेति अत्र प्रकृतपरिभाषायामित्यर्थस्तथाच बाधकमात्रेलाक्षणिकः सुखमात्रे स्वर्गशब्दवदितिबोध्यम् । तदेवभाष्येणोपपादयति तदुक्तमित्यादिना अभ्यास विकारइत्यस्याः भाष्ये फलन्दत्तमजीगणदिति, तदुपपादयति ग्रन्थकारः अत्रेत्यादिबाधतेइत्यन्तग्रन्थेन अभ्यासविकार इत्यस्याभावे हलादिः शेषस्य बाधकं गणेरित्वं स्याद

हत्वाद्धलादिः शेषं बाधते। किं तह्र्यनवकाशत्वा-दिति ग्रन्थेन। गणरूपाभ्यासान्त्यणस्येत्वमित्यर्थे हलादिः शेषेण तन्निवृत्तौ तदनवकाशमीत्वे तु कृते न तस्य प्राप्तिरन्त्यहलोऽभावात्। अभ्यास-विकारेषु बाध्यबाधकभावाभावेन च साधितम्। तस्मिंश्च सति लोपे कृते सामर्थ्याच्छिष्टस्यान्त्य-स्येत्वमिति न दोषः। न च येन नाप्राप्तिन्यायेना-

---

तथाचाजोगणदितिनस्यात् परिभाषया बाधकत्वा-भावे बोधिते हलादिः शेषे कृते ईत्वे रूपसिद्धि-रिति भावः अत्राशंकते भाष्यकारः नगणेरिति परि-भाषयाचापवादस्यैव बाधकत्वाभावो बोध्यते अनेन कृते चारितार्थ्ये यो बाधक स्स एवापवाद इति स्पष्ट-मेव लभ्यते। इति ग्रन्थेनेत्यस्य तदुक्तमित्यनेनान्वयः कृते चारितार्थ्ये यो बाधकस्स एवापवादशब्दप्रतिपाद्य इत्युक्तमित्यर्थः अनवकाशत्वमुपपादयति गणरूपाभ्या सान्त्यणस्येति लाघवात् सामानाधिकरण्येनैवान्वय इतिभावः णस्येतितु अलोन्त्यविधिलभ्यः ईत्वेतु कृते इति इदन्न प्रकृतोपयोगि बाध्यबाधकभावाभावे-नेति तथाचाभ्यासविकारे बाध्यबाधकभावो नेत्याका रिकैव परिभाषेति न दोष इति भावः तस्मिँश्चसतीति अभ्यासविकारे बाध्य बाधकभावाभावे च सतीत्यर्थः सामर्थ्यादिति गणरूपाभ्यासस्येत्यर्थे अभ्यासस्यानर्थ-क्यादानुमानिकस्थान्यादेशकल्पनाया अभावादक्तप-रिमाणे एकदेशविकृतन्यायाप्रवृत्तेश्चाभ्यासेगणरूप-

पवादत्वमप्यस्य सुवचं तस्य चरितार्थविषयता उक्तत्वात् । इको झल् इत्यत्र भाष्येऽपि ध्वनितमेतत् । तत्र ह्यज्झनेति दीर्घेण गुणोत्तरं फलाभावेनानवकाशत्वाद्गुणे बाधिते दीर्घोत्तरं गुणः स्याद्दीर्घविधानं तु मिनोतेर्दीर्घे कृते सति मीमेत्यत्र मीग्रहणेन ग्रहणेऽर्थवत्तत्र पश्चात् प्राप्तगुणा-

---

त्वाभावादितिभावः सामर्थ्याद्गुणघातोरभ्यासस्येति वैयधिकरण्यान्वयोऽनर्थकेऽप्यानुमानिकस्थान्यादेशकल्पनादिर्वेति भावः ननु निरवकाशस्थलेऽपि येननाप्राप्ति न्यायेनैव बाधात् तेन बाधकस्यैवचापवादपदप्रतिपाद्यत्वात् निरवकाशस्थलेऽपि यो बाधकस्तस्यापवादत्वं सुवचमेवेत्याह नच येननेत्यादि, तस्यचरितार्थेति तेन न्यायेनापि चारितार्थ्यविषये यो बाधकस्तस्यैवापवादत्वस्य पूर्वप्रतिपादितभाष्येण लाभात् इकोझलिति भाष्यादपि तथैव लभ्यत इत्याह इकोझलीति। अयम्भावः इकोझलीतिसूत्रम्मास्तु बुभूषतीत्यादौ गुणाप्राप्तियोग्येऽचरितार्थेन गुणे कृते फलाभावेन कृतेऽप्यचरितार्थेन गुणम्बाधित्वा दीर्घेण रूपसिद्धेरित्याशङ्क्य दीर्घोत्तरं गुणो माभूदित्येतदर्थं सूत्रं स्थापितं नच दीर्घोत्तरं गुणे अजन्तस्य दीर्घविधानं व्यर्थमिति वाच्यं दीर्घाभावे हस्वान्तस्य मि 'धातोस्सनि सनिमीमेति' सूत्रस्थ मीग्रहणेन ग्रहणाभावे मित्सतीति रूपासिद्धौ दीर्घविधानस्य सार्थक्यादिति । नच नह्येकमुदाहरणन्यायेन मिग्रहणे एव कर्त्तव्ये अज्ग्रहणं व्यर्थमेवेति वाच्य

धनार्थमिको झलिति किस्त्वमित्युक्तम्। अन्यथाऽपवादत्वेन बाधे तद्विषये उत्सर्गाप्रवृत्तेर्भाष्यस्य सूत्रस्य चासंगतिरिति स्पष्टमेव॥ यत्तु काञ्चनीत्यादावपवादमयद्विषये ऽप्यण् भवति क्वचिदपवादविषयेऽपीति न्यायादिति तन्न। अण् कर्मणि च इति सूत्रस्य भाष्य विरोधात् तत्र ह्यणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थं गोदायो व्रजतीत्या-

---

मजादेशगर्मैरित्यर्थस्यापिलाभार्थं तस्यावश्यकत्वात् नच लाक्षणिकत्वेन कृतदीर्घस्य मिनोते मीनाति ग्रहणेन चरितार्थेनमीग्रहणेन न ग्रहणमिति वाच्यम् गामादाग्रहणेष्वविशेष इति न्यायेन माग्रहणे लाक्षणिकस्यापि ग्रहणात्तत्साहचर्य्येण मोग्रहणेऽपि लक्षण प्रतिपदोक्तपरिभाषाया अनित्यत्वात् लाक्षणिकस्य ग्रहणात् नचास्यामवस्थायां क्त्वाभावेनैज्विषयत्वात् मिनोतेरप्यात्वे माग्रहणेनैवेसस्सिद्धौ मीग्रणेन ग्रहणाभावेऽपि न क्षतिरिति वाच्यम् एज्निमित्तत्वं निमित्तीकृत्य प्रवर्त्तमानात्वस्यैज्निमित्तत्वविघातकहलन्ताच्चेति क्त्वसम्पादकमिसादेशं प्रति निमित्तत्वासम्भवात् अतएव मीग्रहणं सार्थक मन्यथा आत्वेन मीनातेरपि माग्रहणेनैव सिद्धे तद्वैयर्थ्यं स्यात्॥ अन्यथेति निरवकाशस्थलेऽप्यपवादशब्दप्रवृत्तौ अत्राप्यपवादत्वादेव गुणस्य दीर्घेण बाधे अपवादत्वाद्बाधे उत्सर्गाप्रवृत्ते दीर्घोत्तरंप्राप्तस्य गुणस्याभावाय सूत्रावश्यकत्वानापत्तेः अनिवृत्त्यर्थमिति अन्यथा न्यायेनैवाण

द्युक्तम् । काञ्चनीत्यादौ काञ्चनेन निर्मितेत्यर्थे शैषिकोऽण् बोध्यः ॥ अत्रेदं बोध्यम् । येननाप्राप्ते इत्यत्र येनेत्यस्य यदि स्वेतरेणेत्यर्थस्तदा स्वविषये स्वेतरद्यद्यत् प्राप्नोति तद्बाध्यं विध्यन्तराप्राप्त विषयाभावात् । इयमेव बाध्यसामान्यचिन्तेति व्यवह्रियते । अनवकाशत्वेन बाधेऽप्येषावश्य शक्या यद्युदाहरणमस्ति विनिगमनाविरहात् यदि तु येनेत्यस्य लक्षणेनेत्यर्थः कार्येणेत्यर्थो वा तदा बाध्यविशेषचिन्ता । अनवकाशत्वेन बाधे ऽप्येतद्बाधेन सार्थक्यमुत तद्बाधेनेत्येवं विशेषचिन्ता संभवति यद्युदाहरणमस्ति ॥ ५८ ॥

तत्र येन कार्येणेत्यर्थे पररूपत्वावच्छिन्ने कार्ये आरभ्यमाणाया वृद्धेस्तद्बाधकत्वे निर्णीते किंमा- स्वविहितस्येत्येवं तद्विशेषचिन्तायामाह ॥

---

सिद्धौ पुन रणग्रहणव्यर्थत्वमेवेतिबोध्यम् शैषिकोऽ- णिति शेष इति विधिसूत्र विहितोऽणित्यर्थः वृद्धाच्छ इति त्वधिकारविषयो नतु विधिविषय इत्याशयः अत्रेदं बोध्यमित्यादिग्रन्थास्तु बाध्यत्वप्रयोजकधर्म्मवर्णनैव व्याख्याताः यद्युदाहरणमस्तीति इदमुक्तिवैचित्र्यमा- त्रमकस्सवर्णेदीर्घः गुणदीर्घोत्वानामपवाद इत्याद्युदाह- रणस्य प्रसिद्धत्वात् येन लक्षणेन येन कार्येण इत्यादि- न विशेषावगति हेतुः ॥ ५८ ॥

## पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान् ॥ ५९ ॥

अवश्यं स्वपरस्मिन्बाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभावः, आकाङ्क्षानिवृत्तेर्वेप्रतिषेधशास्त्रबाधे मानाभावाच्चेत्येतस्य बीजम् ॥५९॥

नासिकोदरौष्ठजङ्घादन्तेत्यस्यौष्ठाद्यंशे ङीष्निषेधत्वावच्छिन्नबाधकत्वे निर्णीते किंविहितस्येत्याकाङ्क्षायामाह ॥

## मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान् ॥ ६० ॥

तेनौष्ठादिषु पञ्चस्वसंयोगोपधादिति प्रतिषेध एव बाध्यते न तु सहनञ्विद्यमानलक्षण इति नासिकोदर इत्यत्र भाष्ये स्पष्टम् । पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमस्या बीजम् ॥ ६० ॥

ननु वाच्छन्दसीत्यनेन सेड्यंपिच्चेत्यनन्तरस्यापित्त्वस्येव हेरपि विकल्पः स्यात् तथा नेटीति निषेधोऽनन्तरहलन्तलक्षणाया इव सिचिवृद्धिमृजिवृद्धोरपि स्याद् अत उक्तन्यायमूलकमेवाह ।

## अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥ ६१ ॥

अत एव संख्याव्ययादेरिति ङीब्ग्रहणं चरितार्थम् । तद्ध्यनन्तरस्य ङापो विध्यभावाय । अक्चिचीति सूत्रे दीर्घग्रहणं च चरितार्थम् । तद्ध्यनन्तरस्यानुदात्तोपदेशेत्यस्यैव निषेधाभावाय । मध्येऽपवादन्यायाद्यपेक्षयाऽनन्तरस्येतिन्यायः प्रबल इत्यष्टाभ्य इति सूत्रे कैयटः । प्रत्यासत्तिमूलकोऽयम् । लक्ष्यानुरोधाच्च व्यवस्थेत्यपि पक्षान्तरम् । तत्र तत्र क्वचित्स्वरितत्वप्रतिज्ञानात्सामर्थ्येन च बाध्यतेऽयं न्यायः । यथा टिड्ढेति सूत्रेण डाप व्यवहितस्यापि ङीपो विधिः । न षडित्यादिना द्वयोरपि टाब्ङीपोः प्रतिषेधः । इयं च श्रि सर्वनामस्थानम् इत्यादौ भाष्ये स्पष्टेत्यन्यत्र विस्तरः ॥ ६१ ॥

ननु दधतीत्यादावन्तरङ्गत्वादन्तादेशेऽलिधौ स्थानिवत्त्वाभावाददादेशो न स्यादिति तदर्थ्यापत्तिरत आह ।

## पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ॥ ६२ ॥

लक्षणैकचक्षुष्को ह्यपवादविषयं पर्यालोच्य तद्विषयत्वाभावनिश्चये उत्सर्गेण तत्तल्लक्ष्यं संस्करोति, अन्यथा विकल्पापत्तिरित्यर्थः। अभिनिविशन्त इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः। अपवादो यद्यन्यत्र चरितार्थ इति न्यायस्य तु नात्र प्राप्तिरन्तादेशाप्राप्तिविषये चारितार्थ्याभावात्॥९२॥

लक्ष्यैकचक्षुष्कस्तु तत्तच्छास्त्रपर्यालोचनं विनाप्यपवादविषयं परित्यज्योत्सर्गेण लक्ष्यं संस्करोति तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेस्तदाह।

---

ननु दधतीत्यादावन्तरङ्गत्वादिति द्वित्वोत्तरमभ्यस्तसंज्ञातदुत्तरप्रवृत्तिमददादेशापेक्षयाऽन्तादेशस्य शीघ्रोपस्थितिकत्वेनान्तरङ्गत्वादित्यर्थः ननु जक्षतीत्यादावनैमित्तिकत्वेन सर्वापेक्षयापूर्वमेव जक्षित्यादय इत्यभ्यस्तत्वे समकालमेव प्राप्तयोरन्तादेशादादेशयोर्निरवकाशत्वेनान्तादेशं बाधित्वाऽदादेशश्चरितार्थ इति चेन्नान्तादेशो उपदेशिवद्भावेन तत्राप्यन्तादेशस्य पूर्वमेव प्रवृत्तेः कार्यकालपक्षे कार्यप्रवृत्तिप्रावत्तण एवसंज्ञायाः प्रवृत्त्याऽभ्यस्तसंज्ञासमकालमेवान्तादेशप्रवृत्तेरदादेशवैयर्थ्यस्यसुवचत्वाच्च लक्षणैकचक्षुष्क इति तच्च.णद्वारैव साधुत्वज्ञान-वानित्यर्थः॥९२॥

लक्ष्यैक चक्षुष्क इति लक्ष्यसाधुत्वं शास्त्रमन्तरेणैव जानन्नित्यर्थः ननु तस्य शास्त्रापेक्षा कुत इत्यत आह

**प्रकल्प्य चापवादविषयं तत उत्स-**
**र्गोऽभिनिविशते ॥ ६३ ॥**

तत इत्यस्यापवादशास्त्रपर्यालोचनात्पश्चा-
पीत्यर्थः । प्रकल्प्येत्यस्य परित्यज्येत्यर्थः ॥६३॥

अत एव प्रातिपदिकार्थसूत्रे भाष्य इदं द्व-
मप्युक्त्वा न कदाचित्तावदुत्सर्गो भवत्यपवादं ता-
दप्रतीक्षत इत्यर्थकमुक्तम् ॥

एतन्मूलकमेव नवीनाः पठन्ति ॥

**उपसंजनिष्यमाणनिमित्तोऽप्यपवा-**
**उपसंजातनिमित्तमप्युत्सर्गं**
**बाधत इति ॥६४॥**

यत्त्वभ्यस्तसंज्ञासूत्रे कैयटेन प्रकल्प्य चे-
प्रतीकमुपादाय यथा न संप्रसारणे इति पर-

---

तस्यापीति एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः शा-
न्वितः स्वर्गे लोके चकामधुगिति श्रुतेरिति भावः अत
वेति परिभाषाद्वयस्य सद्भावादेवेत्यर्थः ॥ ६३ ॥

एतन्मूलकमेवेति वैयर्थ्यमूलकमेवेत्यर्थः उपसं-
निष्यमाणेति उत्सर्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्याप-
वादशास्त्रवैयर्थ्यसम्भावनायां पूर्वमुत्सर्गशास्त्रप्रह-
भाव इत्यर्थः यत्रापवादेन स्वप्रवृत्तियोग्यातिरिक्त-

यथाः पूर्वं संप्रसारणं पूर्वस्य तु तन्निमित्तः प्रतिषेध इत्युक्तं तत्तु तत उत्सर्ग इत्याद्यक्षरार्थाननुगुणम्। यत्त्वपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थ इति तन्न, अभिनिर्विशन्ते ऽपवादविषयमित्यादिपदस्वारस्यभङ्गापत्तेः। पदजन्यपदार्थोपस्थितौ वाक्यार्थबोधाभावे कारणाभावाच्च। यत्र त्वपवादेऽनिषिद्धस्तत्रापवादविषयेऽप्युत्सर्गः प्रवर्त्ततएव, यथा वृक्षावित्यत्र नादिचीति पूर्वसवर्णदीर्घनिषेधादप्रवर्तमानस्य वृद्धिबाधकत्वा-

नोत्सर्गोद्देश्ये सङ्कोचे ऽप्यपवादस्य वैयर्थ्यमेव तत्रोत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्य स्वप्रवृत्तिसम्भावनाविषयातिरिक्तत्वेनापि संकोच इति तत्त्वम्। यथादधतीत्यादौ, अत्रापवादपदेन निषेधपर्युदासापवादाः सर्वे गृह्यन्ते तेन ररन्धतुरित्यादौ यदि कित्वन्नस्यात्तदा नुमि सम्योगात्परत्वेनासम्योगादितिस्यादिति सम्भावनायां नुमः पूर्वं कित्वन्नातएव नलोपेन अनुपसर्गाल्लिम्पविन्देत्यादिसूत्रेण उपसर्गयोगात्पूर्वं श प्रत्ययेन शेमुचादीनामिति नुमि उपसर्गयोगे प्रलिम्प इति च न, यदि पूर्वं श प्रत्ययो नस्यात्तदोपसर्गयोगे ऽनुपसर्गादितिनिषेधः स्यादिति सम्भावनायास्तत्राऽपि सत्वात् प्रफुल्ल इत्यादावनुपसर्गयोगात्पूर्वं लत्वं न, वागत्रेत्यादावत्रेत्ययोगात्पूर्वं छत्वं न, यत्रापवादोत्सर्गयोः क्वचित्समावेशसम्भावनास्तत्रायं न्यायो न प्रवर्त्तत अतएव गविष्ठिर

भावाद् वृद्धिः प्रवर्तते । अत एव तौ सदित्यादि संगच्छते। अत एव निर्देशाद् भ्रष्टावसरन्यायस्यात्र शास्त्रे नाश्रयणम् । ध्वनितं चेदमिको गुण इति सूत्रे भाष्य इति भाष्यप्रदीपोद्द्योते निरूपितम्। अत्र देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं नेति न्यायस्य विषय एव नास्ति । हते देवदत्ते उन्मज्जनं न, देवदत्तहननोद्यतस्य तु हनने भवत्येवोन्मज्जनम् । प्रकृते ऽपि न पूर्वसवर्णदीर्घेण वृद्धेर्हननं किं तु हननोद्यमसजातीयं प्रसक्तिमात्रं

---

इत्यत्र गवोति वचनादेवालुगिति भाष्यं सङ्गच्छते अन्यथा गोइ इति दशायां यदि लुग् न स्यात्तर्ह्यवादेशे हलन्तात्परत्वेनालुक्स्यादिति सम्भावनया पूर्वमलुक्सिद्धौ गवोति वचनादिति भाष्यमसङ्गतं स्यात् अनुपधेभ्योलिटः कित्वमिति वार्तिकमपि सङ्गच्छते ऽन्यथा यदि गुणो नस्यात्तदा कित्वेन निषेधस्स्यादिति सम्भावनया पूर्वं गुणाप्राप्त्या तत्करणवैयर्थ्यापत्तेरिति कश्चित् वस्तुतो हलदन्तादिति सूत्रे अदन्तग्रहणसामर्थ्यात् लुग्विषये उपसञ्जनिष्यमाणन्यायो न प्रवर्तते हलन्तादिति विहितविशेषणमिति वा कल्पनयाभाष्यसङ्गतेः वव्रक इत्यादौ तु यदि कित्वन्नस्यात्तदागुणे असंयोगादिति स्यादिति सम्भावनया कित्वमपि न प्राप्नोति पूर्वोक्तसंभावनया गुणोऽपि न प्राप्नोतीति कित्वविधानार्थं वार्त्तिकावश्यकत्वं यत्तु अस्य न्यायस्य

प्रवृत्तस्यैव निषेधात्। प्रतिपदोक्तत्वमपि निरवकाशत्वे सत्येव बाधप्रयोजकम्। स्पष्टं चेदं शेषाद्विभाषा इति सूत्रे भाष्ये। तत्र हि शेषग्रहणानर्थक्यं ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्तीत्याशङ्क्यानवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कबभावे सावकाशा इत्युक्तम्। क्वचिदनवकाशत्वाभावे ऽपि परनित्यादिसमवधाने शीघ्रोपस्थितिकत्वेन पूर्वप्रवृत्तिप्रयोजकं बलवत्त्वं प्रतिपदविधित्वेनापि। परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति प्रत्ययोत्तरपदयोश्च

---

वैयर्थ्यविषयत्वे ममन्थतुरित्यादौ असंयोगादित्यस्य अपिल्लिट् किदित्यस्य च समकालप्रवृत्त्या ररन्धतुरित्यादौ पूर्वं कित्वेन नलोपो दुर्वार इति तत्र न्यायाप्रवृत्तावपि नित्यत्वेन पूर्वं नुम्यसंयोगात्परत्वाभावेन कित्वाप्राप्तेः पर्युदासविषये प्रवृत्तौ ज्ञापकं दीर्घोऽकित इत्यकिद्ग्रहणमेवेति दिक् इत्युक्तमिति एतन्मते प्रकल्प्येत्यस्य रचयित्वेत्यर्थः अननुगुणमिति उत्तरकालिकत्वस्य क्त्वाप्रत्ययेनैव लाभादिति भावः अपवादविषयमिति अस्मिन् व्याख्याने लक्ष्यज्ञानस्यानपेक्षणात् लक्ष्यबोधकापवादविषयशब्दोपादानमनर्थकमिति भावः कारणाभावाच्चेति कार्य्ये कारणातिरिक्तस्यानपेक्षणादिति भावः। अनाश्रयणमिति उद्देश्यतावच्छेदकाक्रान्तेरेव

इति सूत्रे कैयटेन पाठात्। अतएव रमे इत्यादौ प्रतिपदोक्तत्वात्पूर्वमेत्व आकारप्रश्लेषाद्धलङ्या-दिलोपो न प्राप्नोतीत्याशङ्क्यैङ्ह्रस्वात् इति लोपेन समाहितम् ॥ ६४ ॥

नन्वयजे इन्द्रमित्यादावन्तरङ्गस्यापि गुण-स्यापवादेन सवर्णदीर्घेण बाधः स्यादत आह॥

**अपवादो यद्यन्यत्र चरितार्थस्तर्ह्य-न्तरङ्गेण बाध्यते ॥ ६५ ॥**

---

शास्त्रावसरत्वेन तस्यापवादनिषेधस्थलेऽपि सत्वेनाव-सरभ्रष्टत्वाभावाच्च, शेषग्रहणमनर्थकमिति ननु रम्पप इत्यादौ प्रतिपदोक्तत्वाद्प्रत्यये कृतेऽपि कप् माभूदि-त्यर्थमस्त्वत्यत आह येप्रतिपदमिति बाधका इति स्वप्रवृत्त्युरमपि कपं वारयिष्यन्तीत्यर्थः अनवकाशाहीति तथाच येननाप्राप्तन्यायस्थले एव तथा बाधो नान्यत्रेति भावः नच तेनैव बाधोऽस्त्वित्यत आह समासान्ता-श्चेति। तथाच प्रतिपदविधित्वं शीघ्रोपस्थितनिमित्तकत्व-रूपमन्तरङ्गत्वमेव नातिरिक्तं बाधनिमित्तमिति बोध्यम् ॥ ६४ ॥

बाधकत्वबीजस्याभावादिति अन्तरङ्गपरिभाषाम-बाधित्वैव येननाप्राप्तन्यायेन गुणं बाधित्वा दैत्यारि-रित्यदौ चरितार्थस्य सवर्णदीर्घस्यान्तरङ्गपरिभाषाबा-धकत्वे मानाभावः किञ्चापवादत्वेपि व्याप्यविषय-

निरवकाशत्वरूपस्य बाधकत्वबीजस्याभावात्। एवं च प्रकृते ऽन्तरङ्गेण गुणेन सवर्णदीर्घः समानाश्रये चरितार्थौ यण्गुणयोरपवादोऽपि बाध्यते। पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गविषयक इदम्। यत्त्वागमादेशयोर्न बाध्यबाधकभावो भिन्नफलत्वादत एव ब्राह्मणेभ्यो दधि दीयतां कम्बलः

---

तया व्यापकविषयतायां संकोच एव स्यात्तथाचावर्णे सवर्णाजव्यवहितपूर्वाभितरत्वेनाचि वा अगव्यवहितोत्तरत्वविशिष्टसवर्णाऽभिन्नत्वेन सङ्कोचेऽपि अयज इन्द्रमित्यादौ गुणप्रवृत्तिरप्रतिहतैवेति नापूर्वेयं परिभाषेति तत्त्वम् अतएव पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वविषय इदमिति वक्ष्यते तादृशान्तरङ्गस्थले एवापवादशास्त्रीयव्याप्यविषयतया व्यापकविषयतायां सङ्कोचेऽपि उत्सर्गशास्त्रस्यापवादशास्त्रविषये प्रवृत्तियोग्यता अतएवावशब्दादाचारक्विबन्तात् कर्त्तरि क्विपि ऊरित्यत्र समानाश्रये चरितार्थं ऊठ् अक्षधूरित्यत्रान्तरङ्गत्वाद्वलिलोपेन बाध्येतेत्ययास्तम् अपवादत्वात्सङ्कोचेन वलिलोपाप्राप्तेः। यण्गुणयोरपवाद इति ननु यणि सिज्लोपस्यासिद्धतया एकादेशे च सिद्धतया यण्गुणयोरप्राप्तियोग्ये आतीदित्यादौ दीर्घस्य चारितार्थ्येऽनया कथमपवादत्वमिति चेन्न एकादेशविषये अविशेषात्सर्वं प्रति सिज्लोपस्सिद्ध इति तद्वार्तिकस्यार्थाद्यणोऽपि तत्र प्राप्तिसत्वात् मद्यकमुदाहरणन्यायेन सिज्लोप एकादेशो भवतीत्यर्थकवार्त्तिकेनैव

कौण्डिन्यायेत्यादौ कम्बलदानेन न दधिदानबाध इति च्व्नौः इति सूत्रे कैयटस्तन्न, अपवादो नुग्दीर्घत्वस्येति दीर्घोऽकितः इति सूत्रस्थभाष्यविरोधात् ॥ ६५ ॥

नन्वजीगणदित्यदौ गणेरीत्वं निरवकाशत्वाद्धलादिः शेषं बाधेत तत्राह ॥

## अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥ ६६ ॥

सिद्धे अकस्सवर्णे इत्यस्याचरितार्थ्यात् सिज्लोपस्यासिद्धत्वेन यणः प्रवृत्त्यभावेऽपि उद्देश्यतावच्छेदकाक्रान्तिरूपाया यण प्राप्तेस्तत्रापि सत्वाच्च ॥ ६५ ॥

निरवकाशत्वादिति गणरूपस्याभ्यासस्येत्वमित्यर्थकस्येचगण इत्यस्य हलादिःशेषेण णकारलोपे निरवकाशत्वम्बोध्यम् बाधेतेति बाधे हि णकारस्येत्वे ह्रस्वे च कृते अग्लोपित्वाद्दीर्घाभावे अजिगणदितिस्यादिति बोध्यम् अकिद्ग्रहणस्य ज्ञापकत्वमुपपादयति अन्यथेति परिभाषाया अभावे इत्यर्थः दीर्घप्राप्तियोग्ये अचरितार्थत्वेनानवकाशत्वाद्दीर्घं बाधित्वा नुकि कृते अनजन्तत्वाद्दीर्घाप्राप्त्या ऽकिद्ग्रहणं व्यर्थन्तेन परिभाषाज्ञापनेतु नुकः पूर्वं दीर्घोमाभूदित्यकिद्ग्रहणं नच तस्यामवस्थायामभ्यासस्याकित एव सत्वेन कृतेऽप्यकिद्ग्रहणे दीर्घोदुर्वार इति वाच्यम् यदि दीर्घो नस्यात्तदा नुकि कृते अकिदिति निषेधस्या-

दीर्घो ऽकितः इत्यकिद्ग्रहणमस्या ज्ञापकम् ।

अन्यथा यंयस्यते इत्यत्र नुकि कृते ऽनजन्तत्वाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव । इयं परान्तरङ्गादिबाधकानामप्यबाधकत्वबोधिका । तेनाचीकरत् मीमांसन्त इत्यादि सिद्धम् । आद्ये सन्वद्भावस्य परत्वाद्दीर्घेणबाधः प्राप्नोति । अन्त्ये मा-

---

दिति सम्भावनायास्सत्त्वेनोपसर्ग्यनिष्यमाणन्यायेन पूर्वन्दीर्घाप्राप्तेरकिद्ग्रहणाभावे तु बाधकसम्भावनाया अप्यभावेन दीर्घो दुर्वार स्यादित्यकिद्ग्रहणं चरितार्थम् नच नुक्कृतेऽनजन्तत्वेनदीर्घाप्राप्त्याऽकिद्ग्रहणं व्यर्थमेवेति वाच्यम् यावत्पर्यन्तं व्यर्थं तावज्ज्ञाप्यमिति न्यायाद्वैयधिकरण्यान्वयस्यापि ज्ञापनात नच परिभाषाज्ञापनोत्तरमपि वैयधिकरण्यान्वयस्यावश्यं ज्ञापनीयत्वेनावश्यकत्वात्तदेवज्ञाप्यतां नुकि दीर्घाभावाय चरितार्थं स्य। दि ति परिभाषायां न प्रमाणमिति वाच्यम् अभ्यासे ह्रस्व इत्यनेन ह्रस्वस्यैव सत्वेन तपरकरणसामर्थ्यादौपदेशिकह्रस्वस्यैव ग्रहण मत एव भामयातोर्वाभाम्यत इत्यत्र ह्रस्वे कृतेपि न नुक् तथाच दीर्घे कृतेप्यौपदेशिकह्रस्वत्वमादाय नुकः प्रवृत्त्या तक्रन्यायेनैव दीर्घस्य बाधेन कृते नुकि दीर्घाप्राप्त्याकिद्ग्रहणवैयर्थ्यस्य तदवस्थत्वात् नचेदानीं परिभाषाया अभावेन तक्रन्यायेन ह्रस्वं बाधित्वा बाभाम्यत इत्यत्र नुको व्याप्त्यर्थन्तपरकरणस्य चारितार्थ्येनौपदेशिकेत्यर्थाभावेन कृते दीर्घेऽप्यचारितार्थ्येन निरवकाश

न्वधेतिदीर्घशान्तरङ्गत्वादिल्वस्य बाधः प्राप्तः। यत्र यत्रैकैकप्रवृत्त्युत्तरमपि सर्वेषां प्रवृत्तिस्तत्रैवेदमि-त्यत एक इति सूत्रे कैयटस्तन्न, नुकि कृते दीर्घाप्रा-प्त्यार्धमेयाहकमानविरोधात् - मान्वधादीमांदीर्घे कृते इत्वाप्राप्त्या गुणोयङ्लुकोः इति सूत्रस्थभाष्यो-क्ततदुदाहरणासङ्गतेश्चेत्यन्यत्र विस्तरः ॥ ६६ ॥

---

त्वेनैवदीर्घं बाधित्वा नुकि दीर्घाभावाय चरितार्थ-मकिद्ग्रहणं न परिभाषाज्ञापकं स्यादिति वाच्यं वनीवच्यते चर्करीत्यादौ लक्षन्यायेनैव नीगादिना दीर्घस्य बाधेन दीर्घाप्राप्ते र्यङ्यङ्घत इत्येतन्मात्रार्थत्वे पदलाघवात् नह्येकमुदाहरणमिति न्यायाच्चानुक इ-त्येवसिद्धेऽकिद्ग्रहणस्य वैयर्थ्येन परिभाषाज्ञापकत्व-सम्भवात् ननु छो धातो र्यङि आत्वे ह्रित्वे चाशा-यत इत्यत्रान्तरङ्गत्वान्नुकि दीर्घव्यावृत्त्यर्थमकिद्ग्रहण-मस्तु न ज्ञापकमिति चेन्न प्रत्यासत्त्याभ्यासत्वावच्छिन्नो-द्देश्यताकस्यैव किता ग्रहणेन यङ् यङ्लुग्निमित्तकस्यैव किताग्रहणेन वा चाच्छायत इत्येतद्व्यावर्त्तकत्वाभा-वादतएव जहाते जाहातीत्यादावभ्यासस्य व्यपदे-शिवद्भावेन किद्घटितत्वेन किद्घटितभिन्नस्येत्यर्थक-स्याकित इत्यस्य न व्यावर्त्त्यत्वमिति ज्ञापकं सुवचम् । ननु नुकोऽनुस्वारे तस्य वर्णसमाम्नाये पाठेनाच्त्वात् चरिकर्त्तीत्यादौ रिगागमे अजन्ताभ्यासस्यैव सत्वेन च सामानाधिकरण्येऽप्यकिद्ग्रहणस्य तद्व्यावर्त्तकत्वेन चारितार्थ्यान्न वैयधिकरण्यान्वयज्ञापकमिति चेन्न

दीर्घसाहचर्येणाऽङ्क्लुभयात्मकस्यैवाचो ग्रहणाद्वर्ण-
समाम्नाये तत्पाठस्यानित्यत्वाच्च रीगागमेनैव सिद्धे
रिगागमसामर्थ्याच्च तत्र दीर्घप्रवृत्तेस्सिद्धत्वेनाकिदु-
ग्रहणस्य तद्व्यावर्त्तकत्वाभावेन वैयर्थ्यात् ॥ ननु एकैक-
प्रवृत्त्युत्तरं यत्र सर्वेषां प्रवृत्तियोग्यता तत्रेयं प्रवर्त्तेत इति
कैयटाशयः, यदर्यम्यत इत्यत्र नुगुत्तरमकित इति निषेधे-
ऽपि वैयधिकरण्यान्वयेन दीर्घप्रवृत्तियोग्यताऽस्त्येवेति
न धर्म्मिग्राहकमानविरोधइति चेदाह मान्वधेति नन्व-
त्रापि अभ्यासस्यायमाभ्यास इति व्युत्पत्त्या ऽभ्यास-
स्थानिकस्याचो दीर्घ इत्यर्थेन परिभाषांविनापीत्वस्यैव
पूर्वं प्रवृत्त्या दोषाभाव इत्यत आह गुणो यङ्लुकोरिति
तत्र डोढौक्यत इत्यत्र ह्रस्वं परत्वाद्बाधित्वा दीर्घस्स्या
दित्याशंक्याभ्यासविकारपरिभाषया पूर्वं ह्रस्वे दीर्घ-
म्बाधित्वा गुणे डोढौक्यत इति सिद्ध्यतीत्युक्तं तत्र
ह्रस्वोत्तरं दीर्घापवादगुणस्यैव प्रवृत्त्या बाध्यबाधक-
योर्ह्रस्वदीर्घयोरेकप्रवृत्त्युत्तरमुभयोःप्रवृत्त्यभावेन तदसंग-
त्यापत्तिः योग्यतापर्यन्ताश्रयवर्णनेन तु गुणेन बाधेऽपि
दीर्घप्रवृत्तियोग्यतायास्सत्वेनात्रापि न दोष इति
बोध्यम् ॥ नन्वभ्यासविकारेबाध्यबाधकभावाभावे-
ऽनया बाधिते केन भाव्यमिति चिन्तायां यथासमावे-
शस्तथाभवतीत्यर्थस्यैव लाभेन बोभूयत इत्यादौ गुणे
ह्रस्वस्य ह्रस्वे गुणस्य प्रवृत्तिसम्भवेन परत्वरूपाधिक-
बलेन पूर्वं गुणे ह्रस्वे तद्येलक्षणन्यायेन पुनर्गुणाप्रवृत्तौ
बोभूयत इत्यसिद्धि र्नच गुणस्य वैयर्थ्यं डोढौक्यत
इत्यत्र ह्रस्वं विना इकोभावेन ह्रस्वस्यैव पूर्वं प्रवृत्त्या

ननु तच्छीलादितृन्विषये ण्वुलपि स्यात् न च तृन्नपवादो ऽसरूपापवादस्य विकल्पेन बाधकत्वाद् अत आह ॥

## ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति॥

ण्वुलि सिद्धे निन्दहिंसादिसूत्रे एकाज्भ्यो वुञ्विधानमत्र ज्ञापकं, तत्र ण्वुल्वुञोः स्वरे विशेषाभावात्। ताच्छीलिकेष्विति विषयसप्तमी। तेन ताच्छीलिकैरताच्छीलिकैश्च वाऽसरूपविधिर्नेति बोध्यम्। नन्वेवं कम्रा कमनेत्याद्यसिद्धिः

---

ततो गुणार्थन्तस्य सार्थक्यात् अतो बाध्याः पूर्वं प्रवर्त्तन्त इत्येव परिभाषार्थ इति न दोष इति बोध्यम्। विव्यथ इत्यादौ व्यथो लिटीत्येतदपेक्षया बाध्यस्य हलादिःशेषे इत्यस्य पूर्वं प्रवृत्तौ वकारस्य संम्प्रसारणापत्तिरिति तु न वाच्य मुभयेषां ग्रहणसामर्थ्येन सम्प्रसारणतदाश्रयकार्ययोर्बलवत्त्वबोधनादितिदिक् ॥ ६६॥

तच्छीलादीति कर्तृसामान्ये विहितस्य ण्वुलस्ताच्छील्यविशिष्टे कर्त्तरि विधाने बाधकाभावादिति भावः एकाज्भ्य इति एकाचि ञिन्निमित्तकाद्युदात्तत्वे लिन्निमित्तकान्तोदात्तत्वे विशेषाभावादिति भावः विषयसप्तमीति तेनैकस्यापि ताच्छीलिकत्वे इयं प्रवर्त्तत इति बोध्यम् ॥ नन्वेवमिति ताच्छीलिकेषु वाऽसरूपविध्यभाव इत्यर्थः दीपेयुञ्निषेधेनेति नमिकंपीतिरेण बाधादेव युचोऽभाव सिद्धेरिति भावः ॥ ६७॥

र्मिकम्पीतिरेणानुदात्तेतश्चहलादेरिति युचो बाधादिति चेत् न सूददीपदीक्षश्चेत्यनेन दीपेर्युज्निषेधेनोक्तार्थस्यानित्यत्वात् ॥ ६७ ॥

नन्वेवं हसितं छात्रस्य हसनमित्यादौ घञ् इच्छति भोक्तुमित्यत्र लिङ्लोटावीषत्पानः सोमो भवतेत्यत्र खल् प्राप्नोतीत्यत आह ॥

## क्त्ल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ॥ ६८ ॥

इदं च वासरूपविधेरनित्यत्वात्सिद्धम् । तदनित्यत्वे ज्ञापकं चार्हे कृत्यतृचश्चेति । तत्र हि चकारसमुच्चितलिङा कृत्यतृचोर्बाधो मा भूदिति कृत्यतृचोर्ग्रहणं क्रियत इत्यन्यत्र विस्तरः ॥ वासरूपसूत्रे भाष्ये स्पष्टा ॥ ६८ ॥

---

प्राप्नोतीति वासरूपविधेरितिभावः वासरूपविधिर्नास्तीति परिहास इत्यत्र घञ् तु न, अतएवोपसर्गस्य घञीति दीर्घः परीपाक इत्यत्रेव न, किन्तु ण्यन्तात्पचाद्यच् कृत्यतृचोर्बाधेति वासरूपविधेर्ज्ञापकत्वे तु बाधेऽपि पक्षे कृत्यतृचोः सिद्धेस्तयोर्वैयर्थ्यमिति बोध्यम् वासरूपविधेरनित्यत्वादेवोभयोः परिभाषयोस्सिद्धौ पृथक् ज्ञापनं प्रपञ्चार्थम् ॥ ६८ ॥

ननु ध्रुवः पक्षेत्यत्र वासरूपविधिना लुङपि प्राप्नोति कृते आदेशे वैरूप्यादत आह ॥

# लादेशेषु वासरूपविधिर्नास्ति ॥६९॥

आदेशकृतवैरूप्यवत्सु लकारेषु स नास्तीत्यर्थः । अत्र च ह्यशश्वतोर्लङ् च इति लङ्विधानं ज्ञापकम् । अन्यथा परोक्षे लिडिति लिटा लङः समावेशो ऽसारूप्यात्सिद्ध इति किं लङ्विधानेन । शत्रादिभिस्तिङां समावेशार्थं शतृविधायके विभाषाग्रहणानुवृत्तिर्लिटः कानज्वेति वाग्रहणं च कृतं तज्ज्ञापयति वासरूपसूत्रे ऽपवाद आदेशत्वानाक्रान्तः प्रत्यय एव गृह्यत इति कैयटादौ ध्वनितम् । तत्फलं तु सदादिभ्यो भूतसामान्ये लिटः क्वसुरेव न तु पक्षे तिङ् इति बोध्यम् ॥ ६९ ॥

---

ननु ध्रुवः पक्षेति ननु नानुबन्धकृतमसारूप्यमिति परिभाषया लुङ्लटोरसारूप्याभावादेव वासरूपविध्यभावः तदादेशयोश्चोत्सर्गापवादत्वाभावो ऽतएव ह्यशश्वतोर्लङ्चेति लङ्विधानमपि न व्यर्थम् इति चेत् उच्यते लकारे वासरूपविध्यभावायनपरिभाषा आरभ्यते ऽपितु लादेशेषु तदभावाय परिभाषा आरभ्यते तत्रैव शतृविधायकेविभाषाग्रहणानुवृत्तिः लिटः कानज्वेति वाग्रहणञ्च प्रमाण मतएव परिभाषायामपि लादेशेष्वित्येवास्ति नतु लकारेष्वेति ॥ ६९ ॥

ननु ङमो ह्रस्वाद् इत्यादौ ङमः परस्याचो ऽचि परतो ङम इति वेति सन्देहः स्यादत आह ॥

## उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ॥ ७० ॥

अचीति सप्तमीनिर्देशस्य मय उञ इत्युत्तरत्र चारितार्थ्यात्पञ्चमीनिर्देशो ऽनवकाश इति तस्मादित्युत्तरस्येत्यस्यैव प्रवृत्तिः यत्र तु ङः सि धुडित्यादावुभयोरप्यचारितार्थ्यं तत्र तस्मिन्निति सूत्रापेक्षया तस्मादित्युत्तरस्येत्यस्य परत्वात्तेनैव व्यव-

---

परनित्यान्तरङ्गापवादानामुत्तरोत्तरंबलीय इत्यस्या व्याख्यानमेतत्पर्य्यन्तमभिधाय बलीयः पदघटितत्वसाधर्म्म्येणोपस्थितामुभयनिर्देश इति परिभाषां व्याख्यातुमाह नन्विति । सन्देह इति ङमो ह्रस्वादचीत्यादौ ह्रस्वादिति पञ्चमीनिर्देशादुपस्थितस्योत्तरस्येत्यस्याचीति सप्तमीनिर्देशादुपस्थिते पूर्व्वपदार्थे तस्यवोत्तरपदार्थेऽभेदेनान्वयात् ङमः पराभिन्नो यो ऽचः पूर्वस्तस्य ङमुट् अचः पूर्व्वाभिन्नोयोङम उत्तरस्तस्य ङमुडित्यर्थो वा प्रत्यङ्ङात्मेत्यत्र ङमः पराभिन्नस्याचः पूर्वस्यैकस्याप्यभावेन सूत्राप्रवृत्तावपि प्रत्यङ्परम आत्मेत्यादौ तथाभूतस्य परम इत्यस्य सत्वेन तत्र सूत्रस्य चारितार्थ्यसत्वेन न सन्देहसम्भवतीति न वाच्यम् इदमत्र चिन्त्यमुपस्थितयोः पूर्वपरयोः परस्परमनन्वयेऽपि बाध

स्था । एवमुभयोश्चारितार्थ्येऽपि यथासि सर्वेना- स्त्वइत्यादौ । तत्रामीति सप्तमी त्रेस्त्रय इत्यत्र चरितार्था ङसादिति पञ्चम्याज्जसैरसुगित्यत्र चरि- तार्थेति स्पष्टं तस्मिन्निति सूत्रे भाष्ये कैयटे च ॥

---

क्राभावेन विशेष्यविशेषणभावे विनिगमकाभावेन द्वयोर्ङमुट्पदार्थे एवान्वये उद्देश्यभेदेन विधेयस्यापि भेदापत्या ह्रस्वात्परो यो ङम् तदन्तं यत्पदं ततः पर ङमुट् अचः पूर्वस्य ङमुडिति वाक्यभेदापत्ति स्सम्भ- त्येकवाक्यत्वे वाक्यभेदो न युक्तो गौरवादिति पूर्वस्य परपदार्थे परस्य वा पूर्वपदार्थेऽभेदेनान्वयेऽभेदे विशेषणपदोत्तरविभक्तेर्निरर्थकतया षष्ठ्यर्थबाधस्या- श्यकत्वेन नदंशविकलं पूर्वत्वं परत्वं वा परिभाषयो- स्थाप्यं पूर्वस्य विशेष्यत्वविवक्षायां परत्वं षष्ठ्यर्थवि- समुपस्थाप्यं तस्य च परत्वस्य पूर्वपदार्थेऽन्वयोऽच्पदा- र्थान्वय इति विचारे श्रुतत्वात् अच्पदार्थे एवान्वय इति- न्तः परपदार्थस्य विशेष्यत्वविवक्षायां पूर्वत्वं तथाभूत- पस्थाप्यं तस्य च श्रुतत्वात् परपदार्थेऽन्वयं विहाय ङम्- पदार्थे एवान्वयस्तथाच ङमः परो योऽच् ततः पूर्वस्य ङ- डित्यर्थे ङमो ङमुट् प्राप्तः अचः पूर्वो यो ङम् ततः पर ङमुडित्यर्थेऽचो ङमुट् प्राप्त इति विभिन्नविषयत्वा- त्सन्देहोपपत्तिः तत्र तस्मिन्निति तस्मादिति परिभाषयो- र्मध्ये यस्या बलवत्वं तयैव प्रथमं स्वविधेयमुपस्था- तस्य विशेष्यत्वसम्भवेन विशेषणत्वाभावात् विशे- त्वं पश्चादपरयोपस्थाप्यस्य विशेषणत्वं ङमो ह्रस्वादु-

नन्वतः कृकमीति सत्वमयस्कुम्भीत्यत्र न स्यात्कुम्भशब्दस्यैवोपादानादत आह ॥

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ॥ ७१ ॥

सामान्यरूपेण विशेषरूपेण वा प्रातिपदि-

---

त्यादौ पञ्चमीनिर्देशस्यानवकाशत्वेन तस्मादित्यस्याएव-बलवत्वमिति तस्मादिति परिभाषयैव प्रथमं स्वविधेय-मुपस्थाप्यं शितुगित्यादौ सप्तमीनिर्देशस्य निरवकाशत्वेन तस्मिन्नित्यनयैव प्रथमं स्वविधेयमुपस्थाप्यमिति तत्फ-लितमाह उभयनिर्देशेपञ्चमीनिर्देशोवलीयानिति ॥७०॥

अतः कृकमीति सत्व मयस्कुम्भीत्यत्रनेति। विस-र्जनीयस्य कुम्भरूपोत्तरपदपरत्वाभावात् अयसः कुम्भी ति समासे ङ्यन्तस्यैव तत्वात् कुम्भादावुत्तरपद इत्यर्थः केन चिदुत्प्रेक्षितस्तुहेय एव तदादिविधिप्रापकाभावात् एकदेशविकृतन्यायोपन्यासोऽपि तथैव भकारान्तस्य तेन न्यायेन कुम्भशब्दत्वेऽपि तस्योत्तरपदत्वाभावात् ङ्यन्तस्य तेन न्यायेन तत्वन्तु दुरुपपादमेव तस्य तदेक-देशविकृतत्वाभावात् प्रातिपदिकग्रहणे प्रातिपदिक-बोधकपदे उच्चारिते सति प्रत्यासत्या तेनैव पदेन लिङ्ग-बोधकप्रत्ययविशिष्टस्य ग्रहणं बोधनं भवतीत्यर्थः ननु अतइञित्यादौ अत्पदस्यापि अदन्तप्रातिपदिकबोधक-त्वेन रमागौरीत्यादिलिङ्गविशिष्टबोधकत्वापत्तिरित्यत आह सामान्यरूपेणेत्यादि प्रातिपदिकत्वतद्व्याप्यानुपू-

कबोधकशब्दग्रहणे सति लिङ्गबोधकप्रत्ययवि-शिष्टस्यापि तेन ग्रहणं बोध्यम् । अपिना केवल-स्यापीत्यर्थः । अस्याश्च ज्ञापकं समानाधिकरणा-धिकारस्थे कुमारः श्रमणादिभिः इति सूत्रे स्त्री-लिङ्गश्रमणादिशब्दपाठः । स्त्रीप्रत्ययविशिष्टश्रम-णादिभिश्च कुमारीशब्दस्यैव सामानाधिकरण्ये न तु कुमारशब्दस्येति तदेतज्ज्ञापकम् इयं

र्वाप्रकारेण बोधके सतीत्यर्थः अत्पदञ्चादन्तत्वप्रकारे बोधक मदन्तत्वञ्च न प्रातिपदिकत्वरूपन्तद्व्याप्यं वेति दोषः नन्वेवं स्त्रीलिङ्गश्रमणाशब्दपाठस्य ज्ञापकत्वाना-पत्तिः कुमारत्वस्य कुमारक्रीडायामिति धातावर्थ-स्त्वेन प्रातिपदिकत्वव्याप्यत्वाभावेन तेनरूपेण बोध-के कुमारशब्दे परिभाषाया अप्रवृत्तौ ज्ञापितायामपि स्त्रीलिङ्गनिर्देशानुपपत्तेस्तादवस्थ्यादिति चेन्न प्रातिपदि-कत्वव्याप्यशाब्दबोधीयविषयताप्रयोजकस्यैव प्रातिप-दिकग्रहण पदेन ग्रहणात् कुमारः श्रमणेति सूत्रेण कुमा-रप्रकृतिकसुबन्तस्यैव समासबोधनेन तत्रत्य कुमारपद-प्रयोज्यविषयताया प्रातिपदिकत्वव्याप्यत्वेनादोषात् नन्वेव मतइञित्यत्रापि प्रातिपदिकाधिकाराददन्तप्रा-तिपदिकस्यैव ग्रहणेनादन्तत्वावच्छिन्नशाब्दीयविषय-ताया अपि प्रातिपदिकत्वव्याप्यत्वेनात्पदस्यापि प्राति-पदिकग्रहणत्वापत्तिरिति चेन्न प्रातिपदिकत्वावच्छिन्न-विशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताभिन्न-विषयताप्रयोजकत्वस्य प्रातिपदिकग्रहणत्वरूपत्वेनादो-

द्विषत्परयोरित्याद्युपपदविधौ समासान्तविधौ महदात्त्वे ञ्नित्स्वरे राज्ञः स्वरे ब्राह्मणकुमारयोर्बहोर्नञ्वदुत्तरपदभूम्नीत्यादौ समाससङ्घातग्रहणेषु च न प्रवर्तते इति ङ्याप्सूत्रे भाष्ये स्पष्टम् ।

---

षात् अदन्तत्वावच्छिन्नविषयताया स्तादृशप्रकारताभिन्नत्वाभावात् इय मनित्यत्वाद्यत्र यत्र न प्रवर्त्तते तानि परिगणयति द्विषत्परयोरित्यादि द्विषत्पदे अस्या अप्रवृत्त्या द्विषतीतापइत्यत्र न खश् समासान्तविधावप्रवृत्त्यामद्राणांराज्ञी मद्रराज्ञीत्यत्र राजाहस्सखिभ्य इति टच् न महदात्वे अप्रवृत्त्या महतीप्रिया यस्य स महतीप्रिय इत्यत्रान्महत इत्यात्वन्न ञ्नित्स्वरे अप्रवृत्त्या इञ्प्रत्ययान्तदाक्षिशब्दान्ङीषि दाक्षीत्यत्र ञित्प्रत्ययान्तत्वमादायाद्युदात्तत्वन्न, राज्ञः स्वरे ब्राह्मणकुमारयोरिति ब्राह्मणकुमारशब्दयोः परयोराजन्शब्दस्य विधीयमानः पूर्वप्रकृतिस्वरः राजब्राह्मणी राजकुमारीत्यत्र न तत्रत्य ब्राह्मणकुमारशब्दयोरेतस्या अप्रवृत्तेः बहोर्नञ्वदुत्तरपदभूम्नीत्यादौ समाससङ्घातग्रहणेषु चेति अनेनोत्तरपदार्थगतबहुत्वबोधकबहुशब्दपूर्वपदकसमासे बहवोगोमन्तो यस्मिन् स बहुगोमानित्यादौ नञ्पूर्वपदकसमासस्य विधीयमानमन्तोदात्तत्वं यथा अतिदिश्यते तथा बहवोगोमन्तोयस्यां सा बहुगोमती इत्यत्राप्यनयोत्तरपदार्थगतबहुत्वार्थकबहुशब्दपूर्वपदकसमासत्वं बहुगोमतीत्यत्रानीयान्तोदात्तत्वं न भवति तत्रत्यसमाससङ्घाते अस्या अप्रवृत्तेः। समाससङ्घातग्रहणेष्विति

